भट्टयज्ञेश्वरप्रणीता

# गणरत्नावली

पाणिनीय-गणपाठस्य व्याख्या



सम्पादकः—
पं० चन्द्रदत्तशर्मा

भट्टयज्ञेश्वरप्रणीता

# ग ण र त्ना व ली

## पाणिनिमुनेर्गणपाठस्य दुर्लभा महत्त्वपूर्णा व्याख्या

(शब्द-सूच्या समलंकृता)





सम्पादकः—

पं० चन्द्रदत्तशर्मा

प्रकाशकः—

श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट
१७०, बी० ब्लाक, न्यू अलीपुर
कलकत्ता

वितरकः—
रामलाल कपूर ट्रस्ट
बहालगढ़, सोनीपत
(हरयाणा) १३१०२१

प्रथमसंस्करणम्—५००
श्रावण, सं० २०४६ वि०,
जुलाई, सन् १९८९ ई०
मूल्य—६५.००

मुद्रकः—
श्री रामकिशन
रामकिशन सरोहा प्रेस,
बहालगढ़, सोनीपत
(हरयाणा) १३१०२१

# आमुखम्

'श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट' (कलकत्ता) इत्याख्यायाः संस्थायाः संस्थापकेन वैदिकधर्मानुरागिणा श्रेष्ठिवर्येण श्रीमता 'मोहनलाल बागड़िया' इत्यभिधेयेन मम सम्मत्या वैदिक-वाङ्मय-सम्बद्धानां प्राचीनानाम् अर्वाचीनानां देववाणीनिबद्धानाम् उत हिन्दीभाषामयानां ग्रन्थानां प्रकाशनस्यैका योजना २०३५ तमे वैक्रमाब्दे व्यकारि। तदनुसारं मया श्रीमतो विजयपालविद्यावारिधेः सहयोगेन कार्यमिदं प्रारब्धम्। तत्र प्रथमपुष्परूपेण बहोः कालाद् दुष्प्रापतां गतस्य गोपथब्राह्मणस्य अनेकैः कोशैः सम्मेल्य सर्वातिशुद्धं संस्करणं २०३७ तमे वैक्रमाब्दे प्राकाशि। ततः प्रभृतिर्द्वादश दुर्लभा अतिमहत्त्वपूर्णा वैदिकवाङ्मयेन सम्बद्धा ग्रन्था अनया संस्थया प्रकाशिताः। त्रयोदशोऽयं ग्रन्थः पण्डितचन्द्रदत्तशर्मणा सम्पादितो वैदिकवाङ्मयजुषां विदुषां करकमलेषूपस्थाप्यते।

दैवदुर्विपाकेन श्रेष्ठिवर्यस्य 'मोहनलाल बागड़िया' इत्याख्यस्य २०४२ तमे वैक्रमाब्दे वैशाखस्य कृष्णपक्षस्य प्रतिपदि (=५-५-१९८५) निधनमजायत। एतेन प्रारब्धस्यास्य कार्यस्य गत्यवरोधशङ्का समुत्पन्ना, परन्तु बागड़ियामहोदस्य वैदिकधर्मानुरागिण्या धर्मपत्न्या श्रीमत्या विमलादेव्याऽहं प्रार्थितो यन्मम भर्त्रा वैदिकग्रन्थप्रकाशनस्य यत्कार्यं प्रारब्धं तद् यथापूर्वं प्रचलेत्। एतत्कार्याय यदपि द्रव्यं देयं भविष्यति तदहं प्रेषयिष्ये। इत्थमयं वैदिकवाङ्मयस्य प्रकाशनरूपं कार्यमद्य यावन्निर्बाधरूपेण प्रचलति। अग्रेऽपि प्रचलिष्यतीत्यहम् आशासे।

युधिष्ठिरो मीमांसकः



'श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट' संस्थया

एकादशवर्ष-परिमिते अल्पसमये प्रकाशिताः

# अत्यन्तं महत्त्वपूर्णा ग्रन्थाः

१. गोपथब्राह्मणम् (मूलमात्रम्)—शुद्धतमं संस्करणम्। सम्पादकः—डा० विजयपालः। मुद्रणकालः—सन् १९८२।

२. ऋषि दयानन्द के शास्त्रार्थ और प्रवचन—अस्मिन् ग्रन्थे दयानन्द-सरस्वतीस्वामिनः केचन शास्त्रार्थाः प्रवचनानि च संगृहीतानि वर्तन्ते। मुद्रणकालः—सन् १९८२।

३. निरुक्त-श्लोकवार्त्तिकम्—नीलकण्ठगार्ग्यविरचितम्। अस्य एक एव कोशोऽतिजीर्णस्तालपत्रलिखितो वर्तते। सम्पादकः—डा० विजयपालः। मुद्रण-कालः—सन् १९८२।

४. ध्यानयोगप्रकाश (हिन्दी)—पातञ्जलयोगशास्त्रानुसारि योगिराज-स्वामिलक्ष्मणानन्दलिखितं योगविषयकं सुगमं पुस्तकम्। मुद्रणकालः—सन् १९८३।

५. ANTHOLOGY OF VEDIC HYMNS—लेखकः—स्वामी भूमानन्दः सरस्वती। वेदविषयकोऽत्युपयोगी ग्रन्थः। मुद्रणकालः—सन् १९८४।

६. कात्यायनीय-ऋक्सर्वानुक्रमणी—षड्गुरुशिष्यविरचितया कृत्स्नया वृत्त्या सहिता। सम्पादकः—डा० विजयपालः। मुद्रणकालः—सन् १९८५।

७. वैदिक-जीवन (हिन्दी)—लेखकः—विश्वनाथो विद्यालङ्कारः। अथर्ववेदमनुसृत्य लिखितो वैदिक-जीवन-निदर्शकः श्रेष्ठतमो ग्रन्थः। मुद्रणकालः—सन् १९८५।

८. सूर्यसिद्धान्तः—पं० उदयनारायणसिंहविरचितया हिन्दीव्याख्यया विस्तृतया भूमिकया च समन्वितः। मुद्रणकालः—सन् १९८६।

९. वैदिक-गृहस्थाश्रम (हिन्दी)—लेखकः—विश्वनाथो विद्यालङ्कारः। अथर्ववेदमनुसृत्य लिखितो वैदिक-गृहस्थाश्रम-सम्बन्धो श्रेष्ठतमो ग्रन्थः। मुद्रणकालः—सन् १९८६।

१०. उणादिकोषः—श्रीमद्दयानन्दसरस्वतीस्वामिना विरचितया वृत्त्या अनेकविधैश्च परिशिष्टैः सहितः। सम्पादकः—युधिष्ठिरो मीमांसकः। मुद्रणकालः—सन् १९८७।

११. श्रौत-यज्ञ-मीमांसा—लेखकः—युधिष्ठिरो मीमांसकः। ग्रन्थेऽस्मिन् श्रौतयज्ञानां विस्तरेण परिचयः, तेषामैतिह्यम्, प्रयोजनं चेत्यादयोऽनेके विषया मीमांसिताः। अस्या हिन्दीभाषानुवादोऽपि सहैव संयोजितः। मुद्रणकालः—सन् १९८७।

१२. पिङ्गलछन्दःसूत्रम्—यादवप्रकाशप्रणीतेन पिङ्गलछन्दोविचिति-भाष्येण समुपेतं वैदिक-लौकिक-छन्दोज्ञानाय श्रेष्ठतमं पुस्तकम्। सम्पादकः—डा० विजयपालः। मुद्रणकालः—सन् १९८८।

पुस्तक-प्राप्ति स्थानम्—

रामलाल कपूर ट्रस्ट, बहालगढ़
(सोनीपत-हरयाणा) पिन-१३१०२१



# संक्षेप-विवरणम्

अ०=अष्टाध्यायी
अनु०=अनुशासनपर्वः
अ० पा० अधि० सू०=
अध्यायः, पादम्, अधिकरणम्, सूत्रम्
अभि० शा०=अभिज्ञानशाकुन्तलम्
अम०=अमरकोषः
आर्यविद्या०=आर्यविद्यासुधाकरः
उ०, उणा०=उणादिकोषः
ऋ०=ऋग्वेदः
ऐत०=ऐतरेयब्राह्मणम्
का०=काण्डम्
का०=काशिका
का० प्र०=काव्यप्रकाशः
किरात०=किरातार्जुनीयम्
कुमार०=कुमारसम्भवम्
कुव०, कुवल०=कुवलयानन्दः
गण०=गणरत्नमहोदधिः
गी०=गीता
गो०=गोपथब्राह्मणम्
तत्त्व०=तत्त्वबोधिनी
तन्त्र०=तन्त्रवार्त्तिकम्
तै० सं०=तैत्तिरीय-संहिता
द गण०=
द गणपाठ एस्क्राइब्ड टु पाणिनि
द्र०=द्रष्टव्यम्
धातु०=धातुपाठः
निरु०=निरुक्तम्
नैष०=नैषधीयचरितम्
पं०=पङ्क्तिः
पस्प०=पस्पशाह्निकम्
पा० शि०=पाणिनीयशिक्षा
पू०=पूर्वार्द्धम्
पृ०=पृष्ठम्
प्रौढ०=प्रौढमनोरमा
फि० सू०=फिट्सूत्रम्
भट्टि०=भट्टिकाव्यम्
मनु०=मनुस्मृतिः
महा०=महाभाष्यम्
महाभा०=महाभारतम्
माध० धा०=माधवीया धातुवृत्तिः
मृच्छ०=मृच्छकटिकम्
मे०=मेदिनीकोषः
मेघ०=मेघदूतम्
यजु०=यजुर्वेदः
याज्ञ०=याज्ञवल्क्यस्मृतिः
योग०=योगदर्शनम्
रघु०=रघुवंशम्
रामा०=रामायणम्
रा० ला० क० ट्र० सं०=रामलाल
कपूर ट्रस्ट-संस्करणम्
लिङ्गा०=लिङ्गानुशासनम्
व०=वर्गम्
वा०=वार्त्तिकम्
विक्रमो०=विक्रमोर्वशीयम्
वेणी०=वेणीसंहारनाटकम्
शिशु०=शिशुपालवधम्
श्लो०=श्लोकः
सा० द०=साहित्यदर्पणम्
सि० कौ०=सिद्धान्तकौमुदी
सुबो०=सुबोधिनी
सुभाषित०=
सुभाषितरत्नभाण्डागारम्

# उपोद्घातः

## गणपाठस्य व्याकरणेन सह सम्बन्धः

प्रायः सर्वाणि व्याकरणानि पञ्चाङ्गानि मन्यन्ते। तद्यथा—हेमचन्द्राचार्यैः श्रीसिद्धहेमाभिधानाभिधं पञ्चाङ्गमपि व्याकरणं सपादलक्षपरिमाणं संवत्सरेण रचयाञ्चक्रे[1]। ते च पञ्चाङ्गा एवं स्मर्यन्ते—सूत्रपाठः, धातुपाठः, गणपाठः, उणादिपाठो लिङ्गानुशासनं च। एषु सूत्रपाठो मुख्यो वर्तते अवशिष्टाश्च धातुपाठादयः खिलपाठरूपेण मन्यन्ते। पाणिनीयव्याकरणस्यापि पञ्चाङ्गत्वं प्रसिद्धमस्ति। तत्र च गणपाठोऽपि खिलपाठरूपेणोपलभ्यते। 'खिल'शब्दस्यार्थः कोशव्याख्याकारैरखिलशब्दस्य व्युत्पत्तौ 'नास्ति खिलं शून्यं यस्मिस्तत्' इत्यवयवत्वेन क्रियते।

धातुपाठादिभ्यः खिलशब्दस्य प्रयोगः काशिकायामेवमुपलभ्यते—उपदिश्यतेऽनेनेत्युपदेशः शास्त्रवाक्यानि सूत्रपाठः खिलपाठश्च।[2]

यथा धातुपाठस्य भूवादयो धातवः(१।३।१) इत्यनेन सूत्रेण सह साक्षात् सम्बन्धः, उणादिपाठस्य उणादयो बहुलम् (३।३।१) इत्यनेन सह सम्बन्धः, एवमेव गणपाठस्यापि तत्तत्सूत्रैः सह साक्षात् सम्बन्धो वर्तते। बिना गणपाठं व्याकरणस्य कात्स्न्यर्मसम्पूर्णमेव।

'गणपाठ'शब्दस्यार्थः—गणशब्दो गण संख्याने (धातु० १०।२८१) धातुना निष्पद्यते। तदनुसारं 'गण्यते संख्यायते यः स गणः' इति व्युत्पत्तौ येषां शब्दानां संख्यानं क्रियते, गणना क्रियते, तेषां पाठो 'गणपाठ'शब्देन व्यवह्रियते। क्रमविशेषेण पठिताः शब्दसमूहा यस्मिन् ग्रन्थे सङ्कल्यन्ते स 'गणपाठ' इति नाम्ना प्रसिद्धः। पञ्चाङ्गे व्याकरणे गणपाठः सूत्रपाठधातुपाठयोरनन्तरं तृतीयं स्थानं भजते, खिलपाठेषु च द्वितीयं स्थानम्। प्रातिपदिकपरिज्ञानार्थमस्य महत्ता मूर्धन्याभिषिक्ता वैयाकरणनिकाये च सुप्रसिद्धा वर्त्तते।

## पाणिनीयगणपाठस्य प्रवक्ता

पाणिनीयव्याकरणसम्बद्धस्य गणपाठस्य प्रवक्ता पाणिनिरुत वाऽन्यः

1. प्रबन्धचिन्तामणिः, पृष्ठम् ४६०।
2. १।३।२॥

कश्चित्, अत्र मतवैविध्यं दरीदृश्यते। न्यासकारादयः प्राचीनग्रन्थकारास्तथा चानेक आधुनिकशोधकर्त्तारो गणपाठस्य प्रवक्तारं पाणिनेर्भिन्नं मन्यन्ते। तैः 'कृत-प्रोक्त'शब्दयोर्भेदमसमीक्ष्यानेके दोषा दर्शिताः, तदनुसारं च गणपाठस्यापाणिनीयत्वं स्वीकृतम्। न्यासकारजिनेन्द्रबुद्धिरनेकेषु स्थलेषु गणपाठस्यापाणिनीयत्वं मन्यते। तद्यथा—"किं शब्दोऽयं द्व्यादिषु पठ्यते, तस्य द्व्यादिभ्य पर्युदासः क्रियते। तस्मात् सर्वनाम्नोऽपि स्वशब्देनोपादानम्। यद्येवं द्विशब्दात् पूर्वं किंशब्दः पठितव्यः। एवं हि तस्य पृथक्ग्रहणं न कर्तव्यं भवति। सत्यमेतत्। न सूत्रकारस्येह गणपाठ इति नासावुपालम्भमर्हति"[१]। निदर्शनमात्रमुदाहृतम्।

**कृत-प्रोक्तयोर्भेदः**—वैयाकरणैः सम्पूर्णं वाङ्मयं दृष्ट-प्रोक्त-उपज्ञात-कृत व्याख्यान नामकेषु पञ्चसु विभागेषु विभक्तम्। अत एव पाणिनिना तेन प्रोक्तम् (४।३।१०१) कृते ग्रन्थे (४।३।११६) इत्यनयोः सूत्रयोः कृत-प्रोक्त-ग्रन्थानां भेदेन निदर्शनं कृतम्। कृतग्रन्थास्ते मन्यन्ते येष्वादितः प्रभृत्यन्तं यावत् सम्पूर्णा वर्णक्रमरचना स्वकीया स्यात्। एतादृशेषु ग्रन्थेषु कथा, आख्यायिका, काव्यादयश्च परिगण्यन्ते। प्रोक्तग्रन्थेषु सम्पूर्णा वर्णक्रमरचना ग्रन्थ-प्रवक्तुर्न भवति। प्रवक्ता केवलं पूर्वतो विद्यमान-शास्त्रस्य परिष्कारक एव न रचयिता। प्रोक्तग्रन्थेषु प्रवक्तुः स्वोपज्ञोऽशः स्वीया वर्णक्रमरचना स्वल्पमात्रायामेव दृश्यते। प्रवक्ता स्वविषयसम्बद्धान् प्राचीनग्रन्थेभ्य उद्धृतान् अंशान् स्वीकृत्य काँश्चिन्नवीनांशान् संयोज्य स्वं ग्रन्थं देशकालानुरूपं रचयति। पाणिनीयसूत्रपाठेऽपीयमेव प्रक्रिया सर्वत्र दृश्यते। तद्यथा—पाणिनिना 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' (१।१।७२) इत्यादिषु सूत्रेषु 'वृद्ध'संज्ञां निर्दिशताऽपि 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' (१।२।६५) इत्यस्मिन् सूत्रे प्राचीनाचार्यसम्मता 'वृद्ध'संज्ञा निर्दिष्टा। एवमेव पाणिनिः 'पर'शब्दस्य योगे 'अन्यारादितरर्त्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' (२।३।२९) इत्यनेन पञ्चमीविभक्तेर्विधानं करोति, परं तृतीय-चतुर्थ-पञ्चमाध्यायेषु बहुत्र पञ्चम्याः स्थाने प्रकृतिभ्यः षष्ठीं निर्दिशति। भाष्यकारेण पतञ्जलिनानेकेषु स्थलेषु पाणिनीयसूत्राणां विषये 'पूर्वसूत्रनिर्देशः' इत्युल्लेखः कृतः। यथा—निर्देशोऽयं पूर्वसूत्रेण वा स्यात्[२]।

**गणपाठस्य प्रोक्तत्वम्**—सर्वे मूर्धन्या वैयाकरणाः पाणिनीयव्याकरण

१. ५।३।२॥ २. ७।१।१८॥

'पाणिनिना प्रोक्तं पाणिनीयम्' इत्येव स्वीकुर्वन्ति । पाणिनीयव्याकरणस्य प्रोक्तत्वात् पाणिनेर्गणपाठोऽपि प्रोक्त एव । तस्मिन्नपि प्राचीनगणपाठाना छाया बहुत्रोपलभ्यते । पाणिनिः पूर्वपरम्परया प्राप्तानां गणपाठानां स्वविषयसम्बद्धानंशान् क्वचिद्यथोद्दधार क्वचिच्च स्वल्पं परिवर्तनं परिवर्धनं वा विधाय स्वगणपाठस्य प्रवचनं चकार । तद्यथा—वक्कयाऽसे (पृ० ९८, पं० १२), वाजोऽसे (पृ० १०६, पं० २१), राजाऽसे (पृ० १७४, पं० २), हृदयासे (पृ० १७६, पं० २) इत्यादिषु स्थलेषु पूर्ववर्त्तिनामाचार्याणां सूत्राण्यक्षरशः संगृहीतानि । एषु सूत्रेषु 'स'शब्दः समासस्य वाचकोऽस्ति । समासपदस्य आद्यक्षरेण निर्देशनस्य प्राचीनशैली 'ऋक्तन्त्र' आदिषु बहुत्रोपलभ्यते । अतः प्राचीना अर्वाचीना वा वैयाकरणाः प्रकृत-गणपाठस्य पाणिनीयत्वे यान् दोषान् समुपस्थापयन्ति तेषामपि समाधानमनेन हेतुना जायते ।

## पाणिनीयगणपाठस्य व्याख्यातारः

प्राचीनग्रन्थेषु पाणिनीयगणपाठस्यानेकेषां व्याख्यातानामुल्लेखो दृश्यते । परं सम्प्रति केवलं 'गणरत्नावली' नाम्नी व्याख्यैवोपलभ्यते । पाणिनीयव्याकरणादन्यानि यानि व्याकरणानि तेषु प्राचीनतमस्य भोजव्याकरणस्य दण्डनाथविरचितायां व्याख्यायां कतिपयगणशब्दानामर्थनिर्देशः प्रयोगनिर्देशश्चोपलभ्यते । वर्द्धमानविरचिते गणरत्नमहोदधौ सर्वेषां गणशब्दानां व्याख्या दृग्गोचरा भवति । हेमचन्द्राचार्यविरचितस्य हैम-व्याकरणस्य 'बृहद्वृत्ति, बृहन्न्यास, अनुन्यास' इत्येतासु व्याख्यास्वपि तत्तद्गणपठितानां शब्दानामर्थनिर्देशो दृश्यते । आसु व्याख्यास्वेका विशेषतेयमपि यदत्र गणपठितशब्दानां व्युत्पत्तयोऽपि निर्दिष्टाः ।

गणरत्नमहोदधेः केन व्याकरणेन सह सम्बन्धो वर्तते, नेदमद्यावधि प्रमाणतां गतम् । ग्रन्थस्य सूक्ष्मेक्षिकयावलोकनेनेदं प्रतिभाति यद् वर्द्धमानेन स्वकाले वर्त्तमानानां विभिन्नव्याकरणानां गणपाठानाश्रित्य स्वतन्त्रगणपाठस्य प्रवचनं कृतं तस्य च व्याख्या लिखिता । गणरत्नमहोदधौ अनेकेषां प्राचीनवैयाकरणानां मतान्युद्धृतानि सन्ति । तेषु भोजस्य नाम बहुत्र स्मृतम् । अतः स्पष्टमिदं यद् भोजीयं 'सरस्वतीकण्ठाभरणम्' तस्य च व्याख्या वर्द्धमानात् पूर्वतरे विद्येते । परं गणरत्नमहोदधौ हेमचन्द्रस्य हैमव्याकरणस्य चानुल्लेखत्वात् प्रतीयते यद् वर्द्धमानस्य हेमचन्द्रस्य च समकालत्वेऽपि गणरत्नमहोदधिः पूर्वं लिखितः स्यात् । गणरत्नमहोदधेः

समाप्तिकालो ग्रन्थस्यान्ते[1] ११९७ निर्दिष्टो वर्तते। अतो हेमचन्द्रेण स्वकीयं व्याकरणं संवत् ११९७ तमात् पश्चादेव लिखितम्, इति प्रमाणीभवति। हैमबृहद्वृत्तेर्व्याख्याकारः पं० चन्द्रसागरसूरिर्हैमव्याकरणस्य रचनाकालं सं० ११९३-११९४ मन्यते, तन्नोचितम्। यतोहि हेमचन्द्रः सं० ११९७ तमात् पूर्वं स्वव्याकरणमरचयिष्यच्चेद् वर्धमानस्तस्योल्लेखमवश्यमेवाकरिष्यत्।

अत्र पाणिनीयगणपाठस्य तस्य व्याख्यायाश्च विषये सङ्केतमात्रमेव कृतम्, यतोहि विषयेऽस्मिन् पूज्यपादयुधिष्ठिरमीमांसकमहाभागविरचिते 'संस्कृत-व्याकरणशास्त्र का इतिहास' ग्रन्थस्य द्वितीयभागे विस्तरेण लिखितम्। अतो येऽत्राधिकं ज्ञातुकामाः सन्ति ते तद्ग्रन्थस्य विलोडनेन स्वज्ञानपिपासां तृप्तिं नेष्यन्ति।

## गणरत्नावली-लेखक-परिचयः

गणरत्नावल्या लेखकस्य भट्टयज्ञेश्वरस्य जीवनवृत्तविषये न किमपि क्वचित् प्रमाणमुपलभ्यते। भट्टयज्ञेश्वरेण विरचिते द्वे पुस्तके 'गणरत्नावली', 'आर्यविद्यासुधाकरः' सम्प्रति दृष्टिपथमायाते, परं न तेन द्वयोरपि पुस्तकयोः स्वजीवनविषये किञ्चित् स्पष्टं लिखितम्। 'आर्यविद्यासुधाकर'नाम्नो ग्रन्थस्यान्ते—

'चिमणाजीतनूजेन दाक्षिणात्यद्विजन्मना।
यज्ञेश्वरेण विप्रेण ग्रन्थ एष समग्रथि॥'

इत्युपलभ्यते। स्पष्टमिदमनेन यदयं दाक्षिणात्यो विप्र आसीत्। पितुर्नाम 'चिमणाजी' इति प्रसिद्ध आसीत्। गुरोर्नामविषयेऽपि ग्रन्थस्यादावेवमुपलभ्यते—

'महाशङ्करशर्म्माणं गुरुं नत्वा विदांवरम्।
यज्ञेश्वरेण क्रियते आर्यविद्यासुधाकरः॥'

ग्रन्थकृतो जीवनकालविषयेऽपि वयमनुमानमेवावलम्बामहे। पूर्वं तेन 'आर्यविद्यासुधाकरः' ग्रन्थो व्यरचि पश्चाच्च 'गणरत्नावली'। उभयोर्ग्रन्थयोरन्ते कालनिर्देश इत्थं निर्दिष्टः—

---

१. सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु।
वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितः॥

'शालिवाहनशाकेऽस्मिन् नागेभर्षिधरा (१७८८) मिते।
शुक्ले नभस्ये पूर्णोऽभूद् ग्रन्थोऽयं प्रतिपत्तिथौ ॥' (मार्यविद्या०)

'भट्टयज्ञेश्वरकृतो ग्रन्थोऽयं पूर्णतां गतः।
शाके रसाङ्कभूनिभू (१७९६) मिते मासि तपोऽभिधे ॥'
(गणरत्नावली)

गणरत्नावल्या आरम्भकालो विक्रमसं० १९३० आसीत्। ग्रन्थकृता निर्दिष्टमिदं स्वग्रन्थे (पृ० २२) स्वयमेव—

'संवत् श्रीविक्रमादित्यकालात् खत्र्यङ्कभू (१९३०) मिते।
अतीते गणरत्ननामावलीयं विनिर्मिता ॥'

## प्रस्तुतसंस्करणम्

'गणरत्नावली' नामकोऽयं ग्रन्थः पूर्वं 'बडोदा' नगरतः प्राकाश्यं नीतः[1], परं सम्प्रति दुर्लभो वर्त्तते। सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य 'सरस्वती-भवन' नामके पुस्तकालये पूज्यगुरुवर्यैः पण्डितयुधिष्ठिरमीमांसकैरेका प्रति 'लीथोप्रेस' मुद्रणालये प्रकाशिता सम्प्राप्ता। श्रद्धेयगुरुवर्यैः काश्यां स्वाध्ययनकाले (सन् १९३३) अस्याः प्रतिलिपिः कृता। तत्प्रतिलिप्यनुसारमेव मया गुरुप्रेरणया ग्रन्थोऽयं सम्पादितः।

ग्रन्थकारेणास्मिन् ग्रन्थे गणरत्नमहोदधिमनुसरता पूर्वं गणशब्दाः श्लोकेषु निबद्धाः पश्चात् तेषां व्याख्या कृता। गणशब्दव्याख्यानेऽपि तेन गणरत्नमहोदधेः साहाय्यं प्रधानरूपेण समधिगतम्, अत एव ग्रन्थान्ते (पृ० २३५) स लिखति—

'अस्य ग्रन्थस्य निर्माणे गणरत्नमहोदधिः।
अभूवन् मुख्यः सहायोऽन्ये ग्रन्था इत्युपकारकाः ॥'

श्लोकनिबद्धानां येषां शब्दानां ग्रन्थकृता व्याख्यायां निर्देशो न कृतः, ते शब्दा अस्माभिर्गणसूत्रनिर्दिष्टकार्ययुक्ताः [ ] कोष्ठे निर्दिष्टाः।

अत्रानेकेभ्यः काव्य-साहित्य-ग्रन्थेभ्यो वैदिकग्रन्थेभ्यश्च भट्टयज्ञेश्वरेण विविधान्युद्धरणानि गृहीत्वा निर्दिष्टानि। तेषामाकरग्रन्थानामुल्लेखो मया यथासम्भवं कृतः परं नात्र सर्वत्र साफल्यमधिगतम्। येषामुद्धरणानामाकर-

१. द्र०—Ganaratnamahodadhi, by Julius Eggling, Preface, P. viii.

ग्रन्था ग्रन्थमुद्रणानन्तरं ज्ञातास्ते ग्रन्थान्ते परिशिष्टे द्रष्टव्याः। शेषास्तु सुधियैः स्वयमेवान्वेषणीयाः। सम्भाव्यते यदागामिनि संस्करणेऽवशिष्टोद्धरणमूलस्थाननिर्देशः स्यात्।

## कृतज्ञताविज्ञप्तिः

श्रीरामलालकपूरन्यासस्याध्यक्षपदमलङ्कुर्वतां वैदिकवाङ्मयोद्धारपरायणानां यावज्जीवनाभ्यस्तसारस्वतव्रतानां पदवाक्यप्रमाणज्ञानां राष्ट्रपण्डितगौरवभाजां महामहोपाध्यायानां श्रद्धेयानां गुरुप्रवराणां श्रीयुधिष्ठिरमीमांसकानां शुभाशंसनैः, स्नेहसिक्तादेशनिर्देशप्रोत्साहनैः, सततप्रेरणया चाहमेतद्ग्रन्थसम्पादनकर्म कर्तुं समर्थोऽभूवमित्यत्र भवन्तो भवन्तः सप्रणिपातेन वन्दनीयाः। तेषामेव प्रेरणया न्यासेनाप्रकाशितवैदिकवाङ्मयं प्राकाश्यं नीयते। निष्कामभावनाध्यापनपरायणानां श्रीरामलालकपूरन्याससमर्पितजीवनानां पुत्रवत्स्नेहासिक्तच्छात्राणां श्रद्धेयानां गुरुवर्याणां श्रीविजयपालमहाभागानां तपःपूतपादाम्बुजानपि तावत् सविनयं वन्दे येषां मुखारविन्दादशेषव्याकरणं निःसृत्य ममाल्पमतेर्मतौ प्राविशत्, येनाहं शास्त्राब्धिमवगाहनाय किञ्चिद् दुस्साहसं करोमि।

कलकत्तास्थितस्य सावित्रीदेवी बागड़िया न्यासस्य श्रद्धालवोऽधिकारिणो विशेषतः साधुवादानर्हन्ति, ये ग्रन्थमिमं स्वन्यासद्वारा प्राचकाशन्। श्रीरामकिशनचौधरीमहाभागा अपि धन्यवादानर्हन्ति, ये स्वमुद्रणालये ग्रन्थस्यास्य निर्दोषप्रायं मुद्रणमकार्षुः।

मुद्रणपत्राणां संशोधनं स्वयमेव कृतं मयाऽतो दत्तेऽपि महत्यवधाने केचन दोषाः समजायन्त, तेषां ये पुनरीक्षणावसरे दृष्टिपथमायस्ते ग्रन्थान्ते 'संशोधन-पत्रे' पर्यमृक्षत।

अस्मदल्पमतित्वाद् अनवधानवशाच्च संजातानि स्खलनानि विज्ञाप्यानुगृह्णन्तूदारचेतसो विद्वांस इति विनिवेद्य विरमति—

बहालगढ़े
१५-७-१९८९ ई०

विदुषां विधेयः
चन्द्रदत्तशर्मा



# गण-सूची



# ॥ गणरत्नावली ॥

सतां साध्यानि सिद्ध्यन्ति यत्प्रसादान् महान्त्यपि ।
तं विघ्नदावदहनं देवं वन्दे गजाननम् ॥१॥

प्रणम्य सच्चिदानन्दघनं श्रीराममादरात् ।
गणरत्नावलीं स्वीयां विवृणोमि यथागमम् ॥

प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्तिकामो ग्रन्थकृद् विनायकस्तुतिलक्षणं मङ्गलमाचरति सतामित्यादिना ।

सतां कृतधियां साधूनां महान्त्यपि अर्थाद् दुष्कराण्यपि साध्यानि कार्याणि यस्य देवस्य प्रसादात् सिद्ध्यन्ति सिद्धानि भवन्ति तं विघ्नारण्यदवानलं गजाननं देवं विनायकं वन्दे स्तवीमीत्यर्थः ॥१॥

जयन्ति जानकीजानेः पादाम्भोजरजःकणाः ।
लेभे शिलापि यैः स्पृष्टा वाचं वाक्पतिदुर्वचाम् ॥२॥

ननु विनायकस्तवादिलक्षणेन मङ्गलेन विघ्नविघातमात्रं भवेत्, ग्रन्थसमाप्तिस्तु बुद्धिप्रतिभादिकारणकलापाद् एवेत्याशङ्क्य तदर्थं स्वेष्टदेवताप्रभावं संस्मरन्नाह—जयन्तीति ।

जानकी जनकतनया सीता जाया भार्या यस्य तस्य श्रीरामस्य पादाम्भोजसम्बन्धिनो रजःकणा जयन्ति उत्कर्षमावहन्ति, ते चासंख्योत्कर्षशालिन इति साकल्येनोत्कर्षवर्णनमशक्यम् अतः प्रकृतोपयुक्तं विवक्षितुम् उत्कर्षम् उत्तरार्धेनाविष्करोति । शिलापि महर्षिशापेनाहल्या शिला तादात्म्यमापन्नापि यैः रजःकणैः स्पृष्टा सती वाचं साधुलक्षणां व्यक्तां वाणीं लेभे प्राप्तवती । कथम्भूताम् ? वाक्पतिना सुराचार्येणापि दुर्वचां दुःखेन मनःप्रणिधानादिमहाप्रयासेन वक्तुं शक्याम् । एतेनास्य लोकोत्तरत्वं ध्वनि-

---

१. आर्यविद्यासुधाकरे, पृ० १, श्लोकः १ ।

२. तु०—आर्यविद्यासुधाकरे, पृ० १, श्लोकः ३ ।

दम् ।। ततश्चैवंविधा प्रमेयप्रभावस्य श्रीरामचन्द्रचरणारविन्दस्य स्मृतिमदभीष्टार्थसिद्धौ पर्याप्तैवेत्यान्तरो भावः ॥२॥

भाष्यादीन् विविधान् निबन्धनिचयान् आलोच्य तेभ्यश्चिरम् ।
चायं चायमुदारसूक्तिनिकरं ग्रथ्नामि तं सुन्दरम् ।
सिद्धैरेव सुगन्धिभिर्विटपिनां पुष्पैः स्रजं निर्मिताम् ।
स्वीकुर्वन्ति न किं बुधाः किमथ तामाघ्राय तुष्यन्ति नो ॥३॥

एवं ग्रन्थसमाप्त्यादौ स्वेष्टदेवताकृपैव मुख्यं कारणमिति सूचयित्वा सहकारिकारणसूचनपूर्वकं सामान्यरूपेण चिकीर्षितं प्रतिजानीते—भाष्यादीनिति ।

भाष्यं चात्र पतञ्जलिमुनिकृतं व्याकरणमहाभाष्यम् । आदिशब्दात् काशिकावृत्तिसिद्धान्तकौमुदीशब्देन्दुशेखरप्रभृतीन् । न केवलं व्याकरणग्रन्थानेव किन्तु कोशकाव्यादीनपीत्याह—विविधानिति । चायं चायं चित्वा चित्वेत्यर्थः । तं संचितम् उत्कृष्टसूक्तिसमूहं सुन्दरं रुचिराकारं यथा तथा ग्रथ्नामि । एतेन प्रारिप्सितग्रन्थस्य भाष्यादिप्रमाणानुगृहीतत्वेन बुधजनोपादेयतां सूचयति ।

नन्वत्र नापूर्वं किञ्चिदिति बुधजनानुपादेयता स्यादेवेत्याशङ्कायामाह—सिद्धैरेवेत्यादि । नह्यपूर्वाणि पुष्पाणि मालाकारः सृजति किन्तु सिद्धान्येवोपादाय स्रजं निर्मिमीते । एवं सत्यपि योग्यपुष्पावचयलक्षणेन समुचितपुष्पविन्यासलक्षणेन च गुणेन यथा बुधा मालाकारनिर्मितां स्रजमङ्गीकुर्वन्त्येव, तामाघ्राय च तुष्यन्त्येव, तथा प्रारिप्सितं ग्रन्थमपि बुधजनाः स्वीकुर्वन्तु तं विभाव्य च संतुष्यन्तु, इत्याशास्ते ग्रन्थकारः । किं चाल्पज्ञतया मालाकारो यथा महतां सेवक एव तथाहमप्यनेन व्यापारेण बुधजनानां सेवामेव चिकीर्षामीति सूचयति ॥३॥

पाणिनीयव्याकरणसूत्रानुगतविग्रहा ।
गणरत्नावली विद्वत्कण्ठभूषा विरच्यते ॥४॥

अथ चिकीर्षितग्रन्थस्य विशेषरूपेण नामनिर्देशं कुर्वन्नाह—पाणिनीयेत्यादि ।

गणरत्नावली गणा एव रत्नानि तेषामावली माला विरच्यते । यथा मौक्तिकपद्मरागादिरत्नावली क्षौमादिसूत्रानुस्यूतविग्रहा भवति, तथेयमपि

पाणिनिना प्रोक्तानि पाणिनीयानि यानि सूत्राणि तदनुगतविग्रहैव। एतेन वार्तिकोक्तानां गणानामाकृतिगणत्वाद् अत्रानिरूपणेऽपि न न्यूनतेति ध्वनयति। इत्तरा रत्नावली विदुषां मूर्खाणां च साधारणं कण्ठाभरणमियन्तु; विदुषामेवेत्युत्कर्षमाविष्कर्तुं विद्वत्कण्ठभूषेति विशेषणम् ॥४॥

नाम्नां पाणिनिना येषां गणः सूत्रेष्वनूद्यते।
तेषां रूपस्य चार्थस्य बोधनार्थोऽयमुद्यमः ॥५॥

केषां गणा अत्र निरूपणीया इत्यपेक्षायामाह—नाम्नामिति।

पाणिनिना आचार्येण येषां नाम्नां प्रातिपदिकानां गणः (जात्यभिप्रायैकवचनम्) सूत्रेष्वनूद्यते तेषां शब्दानामानुपूर्वीलक्षणस्य रूपस्याभिधेयलक्षणस्यार्थस्य च बोधनार्थोऽयं यत्नः। एवं च भ्वादिप्रभृतिधातुगणानामत्रानिरूपणेऽपि न प्रतिज्ञाहानिरिति भावः।

ननु 'सर्वादीनि सर्वनामानि' (अ० १।१।२७) इत्यादिसूत्रेषु पाणिनिना गणेन निर्दिष्टाः सर्वादयः शब्दाः कति किमानुपूर्वीकाः किमर्थाभिधायिनश्चेति जिज्ञासा यथा भवति तथा 'भूवादयो धातवः' (अ०१।३।१) इत्यादिसूत्रेषु गणेन निर्दिष्टा भ्वादिशब्दा अपि भवन्ति पूर्वोक्ताकारजिज्ञासाविषयाः। तत्र को हेतुर्धातुगणोपेक्षायामिति चेदुच्यते सन्दिग्धं हि वस्तु जिज्ञासाविषयो भवति। धातुगणास्तु वैयाकरणसिद्धान्तकौमुद्या सर्वत्रप्रसारिण्या सर्वप्रकारैः प्रकाशिता एव, न तद्विषया जिज्ञासा भवति। प्रातिपदिकगणा यद्यपि काशिकायां पठ्यन्ते तथाप्यर्थनिर्देशविधुराः केवलशब्दपारायणविषयैव। तथा पाठे च लेखकप्रमादादिना केषाञ्चिच्छब्दानां भ्रंशः, केषाञ्चिदन्यथाभावः केषाञ्चिच्च प्रक्षेपोऽपि सम्भवतीति तेषां वर्णानुपूर्वीविषये सन्देह एव। अर्थविषये तु सर्वथैव सन्देहो निर्देशाभावात्। अतः प्रातिपदिकगणा एवात्र ग्रन्थे प्रतिपाद्यविषयत्वेन विवक्षिताः। तदेतत् सर्वं मनसि निधाय सम्प्रदायक्रमागतनानाविधप्रमाणग्रन्थपर्यालोचनेन पद्यबन्धरचनया गुम्फिता पूर्वोक्तदोषशून्योज्वला गणरत्नावली प्रस्तूयते। सेयमविशेषेण सर्वेषां विद्वज्जनानाम् उपायनं भविष्यति, न केवलं वैयाकरणानामेवेत्यभिप्रायगर्भं तस्या विशेषणं विद्वत्कण्ठभूषेति प्रागेवोक्तम् ॥५॥

[अथ सर्वादिः]

सर्वविश्वोभोभयैकडतरा डतमः समः।
अन्येतरावन्यतरत्त्वत्वनेमसिमास्तथा ॥६॥

अथ तत्र भवान् पाणिनिराचार्यो महेश्वरप्रसादसमधिगतलोकोत्तर-

विज्ञानशक्तिः संस्कृतशब्दतत्त्वजिज्ञासून् जनान् अनुजिघृक्षुः शब्दानुशासनं नाम शास्त्रमष्टभिरध्यायैः सूत्रयामास ।

तत्र सूत्राणामल्पाक्षरत्वसम्पत्तये यथा 'वृद्धिरादैच्' (अ० १।१।१) इत्यादौ प्रत्याहारेण निर्देशः, तथा 'सर्वादीनि सर्वनामानि' (१।१।२७) इत्यादौ बहूनां शब्दानां लघूपायेन प्रतिपत्त्यर्थं गणेन निर्देशः । ततश्च व्युवस्थितं गणपाठं पूर्वं कृत्वा पश्चादाचार्यः सूत्रपाठं चकारेति विज्ञायते । नहि नियतसन्निवेशं गणपाठमकृत्वा 'सर्वादीनि' इत्यादिसूत्रेषु गणेन निर्देशः कर्त्तुं युज्यते ।

नन्वादिशब्दोऽयं व्यवस्थावाची प्रकारवाची च दृष्टः । तत्र 'सर्वादीनि' इत्यादौ प्रकारार्थकताऽप्यादिशब्दस्य सम्भवति । प्रकारार्थकताप्रदर्शनाय चाभियुक्तैः पश्चाद् गणाः पठ्यन्त इत्यपि सम्भाव्यत इति चेन्मैवम् । आदिशब्दस्य प्रकारार्थत्वे हि 'सर्वादीनि' इत्यादिना कृत्स्नादिशब्दानामपि संज्ञाकार्यं स्यात् । किञ्च 'पूर्वादिभ्यो नवभ्यो वा' (अ० ७।१।१६) इति नवग्रहणं त्यदादिनिरासार्थं क्रियते । यदि च नियतसन्निवेशो गणपाठः पूर्वसिद्धो भवेत्, तदैवावधिव्यवच्छेदाय क्रियमाणं नवग्रहणं सार्थकं स्यात् । तस्मात् सिद्धं पूर्वं गणपाठः, पश्चात् सूत्रपाठ इति । स्पष्टं चेदं 'पूर्वपरावर' (अ० १।१।३४) इति सूत्रे भाष्यकैयटयोः ।

अथ गणाः प्रदर्श्यन्ते । तत्र तावत् सूत्रपाठः प्रथमाध्याये पठ्यते 'सर्वादीनि सर्वनामानि' (अ० १।१।२७) इति । सर्वादीनि प्रातिपदिकानि सर्वनामसंज्ञानि भवन्तीति तदर्थः । संज्ञाकार्यं च 'स्मै' प्रभृत्यादेशादिलक्षणं यथायथमूहनीयम् । तत्रापेक्षिताः सर्वादयः शब्दाः संगृह्यन्ते सर्वविश्वेत्यादिना ।

गणस्य शब्दसंख्याने यः क्रमः काशिकादिषु तं हित्वाऽन्य इहोपात्तः क्रमः छन्दोऽनुरोधतः । तत्र सर्वविश्वशब्दौ विवक्षितावयवारब्धसमुदायवाचकौ । तस्य च समुदायस्य उद्भूतावयवभेदत्वेन विवक्षा तदा बहुवचनान्त एव सर्वशब्दः प्रयुज्यते । तथा च श्रूयते—'सर्वे वेदा यत्पदमामनन्ति' (कठोपनिषदि १।२।१५) इति । यदा त्वनुद्भूतावयवभेदत्वेन विवक्षा तदा एकवचनान्त एव । यथाह मनुः—'स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः' (मनु० २।१०३) इति । तादृशसमुदायद्व्यादिविवक्षायान्तु द्विवचनाद्यन्तः । यथा—सर्वे व्यूहौ, सर्वे व्यूहा इति । 'अन्ये त्वाहुः'—सर्वशब्दः संख्याप्रकारकलावद्विषये कार्त्स्न्ये वर्तत इति । तत्र संख्यावद्विषये कार्त्स्न्ये यथा—

शतमामन्त्रिता विप्रास्ते सर्वेऽपि समागताः। शतमामन्त्रिता ये विप्रास्ते कात्स्न्येन समागता इत्यर्थः। प्रकारवान् विषयो यस्य तथाविधे कात्स्न्ये यथा—सर्वाण्यन्नानि भुक्तानि। सर्वप्रकाराणीत्यर्थः। कलावद्विषये कात्स्न्ये यथा—सर्व ओदनो भुक्तः। यः परिविष्टः स सकलो भुक्तः, कलयापि नावशेषित इत्यर्थः। एवं विश्वशब्दोऽप्युदाहर्तव्यः।

उभशब्दो द्वित्वावच्छिन्नस्य वाचकोऽत एव नित्यं द्विवचनान्तः। यथा—'उभावलं चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम्।' ननूभशब्दस्य सर्वनामत्वे प्रयोजनाभावः, सर्वनामकार्याणां स्मायादीनामेकवचनबहुवचनेष्वेव विधानादिति चेन्मैवम्। उभकावित्यादिसिद्ध्यर्थं सर्वनामसंज्ञायां अपेक्षितत्वात्। न च कप्रत्ययेनेष्टसिद्धिः। 'उभयोऽन्यत्र' (महा० १।१।२७ वा०) इति वार्त्तिकेनोभशब्दस्य द्विवचनपरत्वाभावे प्रयोगो न किन्तूभयशब्दस्यैवेति नियमबोधनात्। एवं च तसौ त्रलि, यथोभयतः, उभयत्रेति रूपं भवति, तथा कप्रत्यये उभयकाविति रूपं स्यात्, इष्यते तु उभकाविति। अकच् प्रत्ययस्तु टेः प्राग् विधीयत इति तन्मध्यपतितन्यायेनोभकशब्दस्य उभशब्दत्वाद् उभकावित्यादौ उभशब्दस्य द्विवचनपरत्वमस्त्येवेति नोभयशब्दप्रयोगः। कप्रत्यये तु सति तेनैव व्यवधानाद् द्विवचनपरत्वाभाव इति दिक्। स्पष्टं चेदं भाष्यादौ। उभयशब्दोऽवयवद्वयारब्धसमुदायवाची। समुदायस्यानुद्भूतावयवभेदत्वविवक्षायाम् एकवचनम्। यथा—'वज्रं तथा पद्मराग उभयो मणिरुच्यते।' उद्भूतावयवैकत्वविवक्षायां बहुवचनमेव। यथा—'देवाश्चासुराश्च उभये प्राजापत्याः।' उभयशब्दस्य द्विवचनं नास्तीति कैयटः। अस्तीति हरदत्तः। अनयोः कैयटमतमेव ज्यायो भाष्यानुगृहीतत्वाद् इत्याद्याकरे स्पष्टम्।

'एकोऽन्यार्थे प्रधाने च, प्रथमे केवले तथा।
साधारणे समानेऽल्पे, संख्यायां च प्रयुज्यते॥'

तत्र संख्यायां नित्यैकवचनान्त एकशब्दः, अन्यत्र तु द्विबहुवचनान्तोऽपि। संख्यायां यथा—

'एकेनैव सुपुत्रेण सिंही स्वपिति निर्भया।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी॥'
(सुभाषितरत्न० सत्पुत्रप्रशंसा—८)

अन्यत्रार्थेषु 'वदन्त्येके मनीषिणः' इत्यादि यथायथमुदाहर्तव्यम्।

डतरडतमौ प्रत्ययौ ततस्तदन्ता ग्राह्याः, केवलयोः प्रयोगाभावेन संज्ञाकरणे प्रयोजनाभावात्। यथा—अनयोः कतरस्मै देयम्, एषां कतमस्मै देयमिति।

समसिमशब्दौ सर्वपर्यायौ। तथा च श्रूयते—'नभन्तामन्यके समे' (ऋ० ८।३९।१) इति। 'मा सूवन्नन्यके सर्वे' (निरु० १३।५) इति तन्मन्त्रनिरुक्तम्। 'अग्रात्रीवासस्तनुते सिमस्मै' (ऋ० १।११५।४) इति सिमशब्दः सर्वपर्याय इति। तत्रस्यवेदभाष्ये तुल्यपर्यायः समशब्दस्तु नात्र गणे गृह्यते 'यथासंख्यमनुदेशः समानाम्' (अ० १।३।१०) इति निर्देशाज् ज्ञापकाल्।

अन्यशब्द इतरशब्दश्च पृथगर्थे। यथा—

'रामाद् दाशरथेरन्य इतरे वा महाभुजः।
धीरोदात्तगुणोत्कृष्टा न ख्याता जगतीतले॥'

अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तते। तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा[1], न चेमौ डतरडतमप्रत्ययान्ताविति भ्रमितव्यम्। तयोः कियत्तच्छब्देभ्य[2] एव विधानात्। तेनान्यतरस्मै स्पृहयामि, अन्यतमाय स्पृहयामीत्येव भवति।

त्वत्त्वावित्यन्यपर्यायौ[3]। यथाह जयदेवो गीतगोविन्दे—'त्वदधरमधुर-

---

१. यद्यपि पाणिनिना 'अन्यतम'शब्दः सर्वादिगणे न पठ्यते, भट्टोजिदीक्षिताभिश्चास्य सर्वनामत्वं प्रत्याख्यायते, तथापि शबरस्वामिना मीमांसाभाष्ये अनेकत्रास्य सर्वनामत्वं स्वीकृतम्। तद्यथा—'वाक्यादन्यतमस्मात्' (अ० १ पा० १ अधि० ७ सू० २४), 'प्रयोजनानामन्यतमस्मै' (अ० १ पा० ४ अधि० १ सू० १), अन्यतमद् (अ० २ पा० १ अधि० २ सू० ५) 'प्रकरणादीनामन्यतमदस्ति' (अ० ३ पा० ८ अधि० २० सू० ३८)। क्वचिद् भाष्यपुस्तकेषु 'अन्यतमात्', 'अन्यतमाय', 'अन्यतमम्' इत्यादिपाठ उपलभ्यते, स वैयाकरणम्मन्यैः संशोधितोऽर्वाचीनोऽप्रामाणिकः पाठो ज्ञेयः। आपिशलि-पाणिनीयशिक्षयोरष्टमप्रकरणस्य प्रथमे सूत्रे 'स्थानानामन्यतमस्मिन् स्थाने' (द्र०—पृ० ६, १६, रा०ला०क० ट्र० सं०), तथा कौटिल्यार्थशास्त्रे 'दण्डमन्यतमस्मिन्' (अधि० ७ अ० ४ अन्ते) इत्यादिशिष्टप्रयोगदर्शनाद् 'अन्यतम'शब्दस्य सर्वनामसंज्ञेषितव्या।

२. 'कियत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्', 'वा बहूनां जातिपरिप्रश्ने डतमच्' (अ० ५।३।९२,९३)।

३. 'त्वशब्दोऽन्यवाची स्वरभेदाद् द्विः पठितः। एक उदात्तो द्वितीयोनुदात्तः।

मधूनि पिबन्तम्' इति । त्वत्तोऽन्यस्य अधरस्त्वदधर इति विग्रहो न तु तवाधर इति, 'पश्यति दिशि दिशि रहसि भवन्तम्' इति पूर्ववाक्येन सहान्वयाप्रत्तेः । अत्र गणेऽस्य पाठोऽकजर्थः । त्वशब्दोदाहरणं श्रूयते—'उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः' (ऋ० १०।७१।४) इति ।

४. नेम इत्यर्धे । श्रूयते चायमृग्वेदे—'प्रनेमस्मिन् ददृशे सोमः' (ऋ० १०। ४८।१०) इति ।

समशब्देन सह सिमशब्दो व्याख्यातः ॥६॥

पूर्वापरोत्तराश्चैवावराधरपरा अमी ।
सदक्षिणा व्यवस्थायामसंज्ञायां स्मृता इह ॥७॥

पूर्वापरेत्यादि । अमी सदक्षिणा दक्षिणशब्दसहिताः पूर्वादयो व्यवस्थायामसंज्ञायां वर्तमाना एव सर्वादिगणे वेदितव्याः । स्वाभिधेयेनापेक्षमाणोऽवधिनियमो व्यवस्था । पूर्वं इत्युक्ते कस्मात् पूर्वं इत्यादिरूपाऽवध्यपेक्षा नियमेन जायते । यत्र न जायते तत्र न सर्वनामसंज्ञा । यथा—दक्षिणा गाथका इति । कुशला इत्यर्थः । एवमधरे ताम्बूलरागाः, उत्तरे प्रत्युत्तरे च शक्ता इत्यपि प्रत्युदाहरणं बोध्यम् । यद्यपीह अमुष्मादिमे कुशला इत्येवमवध्यन्वयः सम्भवति तथापि नासौ नियमेनापेक्ष्यते ।

दिशः सपत्नो भव दक्षिणस्या इत्यादावपि व्यवस्थाऽस्त्येव । प्रसिद्धत्वात्तु न तत्र तदावधिवाचकः शब्दः प्रयुज्यते । कथमुत्तराः कुरव इति यावता व्यवस्थायां वर्तमानतया सर्वनामत्वमापद्येतेति न शङ्कनीयम्, एवं विधिवाक्य, उत्तरादिशब्दस्य देशविशेषे संज्ञात्वेन प्रयुज्यमानतयाऽसंज्ञायामिति निषेधात् । दिक्ष्वपि संज्ञाभूता एव यद्यपि पूर्वादयस्तथाप्याधुनिकः संकेतः संज्ञेत्यभ्युपगम्यते । दिक्षु चिरन्तनः पूर्वादीनां सङ्केतः कुरुषु त्वाधुनिक इत्यत्र व्याख्यातृपरम्परावगतसम्प्रदाय एव शरणम् । स्पष्टं चेदं प्रौढमनोरमायाम् ।

पूर्वापरादिशब्दानां नियमेनावधिसाकांक्षार्थवृत्तित्वं यद्यपि समानम्, तथाप्येषां दिग्देशकालरूपार्थेषु प्रवृत्तिः प्रविभागेन दृश्यते । तथा हि—पूर्वस्यां दिशि वसति, पूर्वस्या दिश आगत इत्यादौ दिग्देशवृत्तित्वं स्पष्टमेव ।

---

केचित् तकारान्तमेकं पठन्ति । त्वत्वदिति द्वावपि चानुदात्ताविति स्मरन्ति ।' (काशिकायाम् १।१।२७) । द्र०—'त्वत्त्वनेमसमसिमेत्यनुच्चानि' (फि० सू० ४।१०) ।

पूर्वस्मिन् ग्रामे देशे वने वा वसति, पूर्वस्या वाप्याः शीतमुदकम् इत्यादौ दिक्सम्बन्धादेव पूर्वादयो देशवृत्तयः। दिग्देशयोश्चावच्छेद्यावच्छेदकभावलक्षणः सम्बन्धः। ग्रीष्मात् पूर्वो वसन्तः, कार्त्तिक्याः परा आग्रहायणीत्यादौ कालवृत्तित्वं स्पष्टमेव दिक्सम्बन्धस्यात्रासम्भवात्। कालसम्बन्धाद् यथा—अयमस्य पूर्वो गुरुः, पूर्वस्मिन् गुरावुक्त इत्यादि।

पुरापरावरेति त्रयाणां शब्दानां दिक्कालसम्बन्धं विनापि देशवृत्तित्वमस्ति। तथाहि परदेशसम्बन्धात्—परो ग्रामः। एवमपरोऽवरो वा। परस्मिन् पर्वते वसति। सति सन्निकर्षे विप्रकर्षे च सर्वासु दिक्षु तुल्योऽयं व्यपदेशः कस्यामप्येकस्यां दिशि सन्निकृष्टविप्रकृष्टयोर्वस्तुनोः परापरादिव्यपदेशदर्शनात्। नात्र दिगभिसम्बन्धदेशवृत्तित्वम्। यथास्य त्रिकस्य स्वतो देशवृत्तित्वं तथा कालवृत्तित्वमपि सन्निकर्षादिनिबन्धनमेव। यथा—परस्मिन् अपरस्मिन् वा काले जातः। तथा परकालसम्बन्धात् परः पाणिनिः, अपरकालसम्बन्धाद् अपरः पतञ्जलिः।

दक्षिणाधरशब्दौ तु दिशि दिगवच्छिन्ने च वर्तेते न तु काले नापि तदवच्छिन्ने। यथा—दक्षिणस्यां दिशि वसति, दक्षिणस्मिन् देशे पर्वते वा। अधरस्यां दिशि, अधरस्मिन् देशे पर्वते वा।

अथ कथं 'युद्धे परेषां जेतायमपरेषां च भाषणे' इत्यादि। 'अपरे त्वाहुः' इत्यादि च सङ्गच्छते। न ह्यत्र दैशिकी कालिकी वा व्यवस्थास्ति।

उच्यते; दैशिकपरापरत्वादेः शत्रौ प्रतिवादिनि चारोपेण शिष्टाभीष्टप्रयोगा निर्वाह्या इति ॥७॥

**अज्ञातिधनयोः स्वोऽथ परिधेयबहिर्युजोः ।**
**अन्तरोऽथ त्यत्तदेतदिदमो, यददस्द्वयः ॥८॥**

अज्ञातिधनयोरिति ज्ञातिधनाभ्यामन्यत्रार्थे वर्तमानः स्वशब्दः सर्वादिर्वेदितव्य इत्यर्थः। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' (मेदिन्यां वैककम् २) इति मेदिनी। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' (अम०का०३ व०४ श्लो०२१३) इत्यमरः। एवमादिकोशप्रामाण्यात् स्वशब्दोऽर्थचतुष्टये वर्त्तते। तत्र ज्ञातिधनयोरात्मनि चास्य विशेषार्थोपस्थापकत्वात् स्वातन्त्र्येण प्रवृत्तिः। आत्मीये तु सर्वत्र विशेषणविधया पारतन्त्र्येणैव। तत्रात्मन्यात्मीये चार्थेऽस्य सर्वनामत्वम्। यथा—स्वस्मै हितमाकांक्षते चैत्रः। आत्मन इत्यर्थः। स्वे पुत्राः सन्ति चैत्रस्य। गृह स्व-

स्मिन् यथासुखम्। स्वे इत्यस्यात्मीया इति, स्वस्मिन् इत्यस्यात्मीये इति चार्थः।

अज्ञातिधनयोरित्युक्तेर्ज्ञातिधनवाचिनो न सर्वनामत्वम्। तेन स्वाय स्पृहयति चैत्रः, स्वानां संवीक्ष्य संपदः स्फीता इत्येव प्रयुज्यते। स्वायेत्यस्य धनायेति, स्वानामित्यस्य ज्ञातीनामिति चार्थः। यदा परकीयत्वव्युदासाय ज्ञातिधनविशेषणत्वेन स्वशब्दः प्रयुज्यते तदापि स्वस्मै ज्ञातये स्वस्मै धनाय वा स्पृहयतीत्यादौ स्वशब्दस्यात्मीयार्थाभिधायकत्वाद् भवत्येव सर्वनामसंज्ञाकार्यम्।

यत्तु गणरत्नमहोदधौ ज्ञातिधनविशेषणत्वेऽपि संज्ञानिषेध एव स्वा ज्ञातयश्चैत्रस्य, स्वे धने रक्षा चैत्रस्येति। आत्मीया आत्मीये इति च तदर्थं इति वर्धमानेनोक्तम्। तत्रेदं विचारणीयं किं ज्ञातिधनत्वेऽपि निमित्तीकृत्य प्रवृत्तस्य स्वशब्दस्य विशेषणत्वं विवक्षितम् आहोस्विद् आत्मीयत्वम्? नाद्य आत्मीया आत्मीये इति च तदर्थं इति स्वोक्त्यैव तावद् विरोधात्।

ज्ञातित्वेव धनत्वेन च रूपेण स्वशब्दाद् एवार्थोपस्थितौ वृक्षशब्दप्रयोगे तरुशब्दस्येव ज्ञातिधनपदयोरनुप्रयोगानुपपत्तेः स्वशब्दश्चायमनेकार्थं इति सन्देहनिवृत्तयेऽनुप्रयोगो यथा नानार्थकहरिशब्दप्रयोगे सिंहशब्दस्य, इति तु न वाच्यं ज्ञातिधनयोरेवोक्तरीत्या स्वशब्दार्थव्यावर्तकत्वात् स्वशब्दस्य विशेषणत्वानुपपत्तेश्च। नान्त्यः, आत्मीयत्वपुरस्कारेण बोधाय प्रवृत्तस्य तस्य प्राप्तायाः संज्ञाया निषेधे मानाभावात्। न च ज्ञातिधनयोः समानाधिकरणविशेषणीभूतस्वशब्देन ज्ञातिधनार्थयोरपि प्रतीतौ कथं न निषेध इति वाच्यम्। स्वस्मै पुत्राय, स्वस्मै गवे इत्यादावपि निषेधापत्तेः। न च पुत्रा ज्ञातयः किन्तु सपरिच्छदा पितृव्यभ्रात्रादय एव, तथा गावो न धनं किन्तु रुक्मरजतकार्षापणरूपकादिकमेवेत्यपि वक्तुं युज्यते ज्ञातिपदस्य सपिण्डाभिधायकत्वेन धनपदस्य च स्वात्मावच्छिन्नस्थावरजङ्गमवस्तुवाचकत्वेन धर्मशास्त्रकाव्यादौ प्रसिद्धत्वात्। पुत्राः पितुः सपिण्डा एव गवादिकं च जङ्गमं धनमेवेति स्पष्टं मिताक्षरादिनिबन्धेषु।

यदि तु ज्ञातित्वेन वात्मीयबोधार्थं केवलः स्वशब्दः प्रयुज्यते तदा तु तस्य ज्ञातिधनवाचित्वाद् भवतु सर्वनामसंज्ञानिषेधः। स्वा ज्ञातयश्चैत्रस्य स्वे धने रक्षा चैत्रस्येत्यत्र तु विशेष्यवाचकयोर्ज्ञातिधनपदयोः प्रयोगात् स्वशब्द आत्मीयत्वेनैवात्मीयवाचीति सर्वनामतानिषेधोऽनुपपन्न एव। किं बहुना, यत्र ज्ञातिधनशब्दप्रयोगं विनैवात्मीयत्वावच्छिन्नयोर्ज्ञातिधनयोर्बोधाय केवलः

स्वशब्दः प्रयुज्यते तदापि तस्य सर्वनामताऽस्त्येव। यथा—स्वस्मै स्पृहयति चैत्र इति। निर्णीतं चैतत् प्रौढमनोरमायां भट्टोजिदीक्षितैः। तत्र हि 'स्वमज्ञातिधनाख्यायाम्' (अ० १।१।३५) इति सूत्रव्याख्याने कौमुदीगतं ज्ञातिधनवाचिनस्त्विति प्रतीकमुपादाय 'ताच्छील्ये णिनिना ज्ञातिधनयोरपि आत्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम्' (प्रौढ० पू० पृ० ९८) इत्युक्तम्। तस्माच्चिन्त्योऽयं वर्धमानसूरेर्लेख इत्यलम्।

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' (अमर० का० ३ व० ४ श्लो० १८९) इति कोशान्नानार्थकोऽपि अन्तरशब्दः परिधेये बहिर्युजि चार्थे वर्तमान एव सर्वादिगणे वेदितव्यः। परिधेयं परिधानार्थम् उत्तरीयमन्तरीयं च वासः। अन्तरे अन्तरा वा शाटकाः। परिधानीया इत्यर्थः। बहिरित्यनावृतो देशो बाह्यं चोच्यते। अन्तरे अन्तरा गृहाः। बाह्या आभ्यन्तरा वा इत्यर्थः। बाह्येन हि आभ्यन्तरस्य योगोऽस्त्येव। अर्थद्वयमप्याकरे स्थितम्।

अन्तरं बहिर्योगेति गणसूत्रे 'अपुरीति वक्तव्यम्' (सि०कौ० ३१३) इति वार्त्तिकम्। पूःशब्दस्य विशेष्यत्वेऽन्तरशब्दः सर्वादिकार्यभाङ् नेति तदर्थः। तेन अन्तरायै नगर्यै स्पृहयति, अन्तरायां पुरि वसति इत्येव साधु।

त्यद् तद् इति द्वावपि प्रक्रान्तार्थपरामर्शकौ। तत्राद्यश्छान्दस इति गणरत्नकारः। प्रौढमनोरमायां दीक्षितास्तु 'स्यश्छन्दसि बहुलम्' (अ० ६।१।१३३) इतिसूत्रस्थछन्दोग्रहणवैयर्थ्यापत्त्या गणरत्नकारोक्तिं प्रत्याचख्युः।

तच्छब्दोदाहरणं यथा—

'दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे॥' (रघु० ४।४९)

अत्र पूर्वार्द्धे प्रक्रान्ता दिक् तस्यामित्यनेन परामृश्यते।

एवं यच्छब्दोऽपि—

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥'
(कुमार० १।३)

इत्यादौ प्रक्रान्तेऽर्थे वर्तते। 'यत्तदोर्नित्यसम्बन्धः' इत्यभियुक्तोक्तिस्तु यत्रोद्देश्यविधेयभावस्ताभ्यां व्यवस्थाप्यते। तत्रैव यथा—'यः श्रिया वीक्षितो देव्या स सर्वं सुखमश्नुते।' अत्र लक्ष्मीदेव्या वीक्षितं पुरुषं य इत्यनेनोद्दिश्य

स इत्यनेन तस्य सर्वसुखभाक्त्वं विधेयतया प्रतिनिर्दिश्यते। उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयन्ति सर्वनामानि। तत्तल्लिङ्गपर्यायेणोपाददते—'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इति यथा।

एतद् इत्यपरोक्षेऽर्थे। तथेदमदसावपि। यथा—एष चित्रपटो हृदयङ्गम इति। यत्तु—

'इदमस्तु सन्निकृष्टे समीपतर एतदो रूपम्।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्॥'

इति पठन्ति, तत्तु सम्भवप्रदर्शनपरं न तु शक्तिनिर्णायकम्। 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादौ विप्रकृष्टस्यापि अपरोक्षस्य चन्द्रस्य इदमा निर्देशात्।

'अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन' (रघु० २।३६)। इत्यादौ सन्निकृष्टस्यापि अपरोक्षस्य देवदारोरदस्शब्देन निर्देशाच्च।

द्विशब्दो[1] द्वित्वसंख्यासंख्येयवाचकः। अत एव नित्यं द्विवचनान्तः। 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति॥८॥

युष्मदस्मद्भवत्तुक्रिम् पञ्चैत्रिंशदमी इह।
शब्दाः सर्वादिके प्रोक्ता गणे सिद्धान्तवेदिभिः॥९॥

युष्मच्छब्दः सम्बोध्ये, अस्मच्छब्दस्त्वहन्तास्पदे चैतन्यवति वर्तते। यत्र कञ्चिदर्थं सम्यग् बोधयितुमुपात्तस्य पशुत्वाचेतनत्वनिबन्धनः सम्बोध्यत्वासम्भवस्तत्रारोपितसम्बोध्यत्वयोग्यताविवक्षया युष्मच्छब्दप्रयोग उपपादनीयः। यथा—

---

१. भट्टोजिदीक्षितेन तयप्प्रत्ययान्तस्य 'द्वय'शब्दस्यापि सर्वनामता चाक्रवर्मणमते निर्दिष्टा—'यत्तु कश्चिदाह चाक्रवर्मणव्याकरणे द्वयपदस्यापि सर्वनामताभ्युपगमात्' (शब्दकौस्तुभे १।१।२७)। तदनुसारं 'द्वये, द्वयस्मै, द्वयस्मात्, द्वयेषाम्, द्वयस्मिन्' प्रयोगा अपि साधव आसन्। माघेन शिशुपालवधे 'द्वयेषाम्' इति प्रयुक्तम्—'व्यथा द्वयेषामपि मेदिनीभृताम्' १२।१३॥

पाणिनिस्तु जसि एव 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' (अ० १।१।३३) इति विकल्पेन द्वयस्य सर्वनामत्वमुररीकरोति।

'रक्तस्त्वं नवपल्लवैरहमपि श्लाध्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः॥'
(हनुमन्नाटके ५।२४)

इति प्रेयसीविप्रयोगात् मत्तस्य कस्यचिन्नायकस्येयमशोकद्रुममुद्दिश्योक्तिः। विदग्धस्यापि नायकस्य भ्रमोन्मादाद्यतिरेकश्चारोपप्रयोजकः। स च विरह-पोषकत्वात् काव्ये गुण एव।

भवच्छब्दो यद्यपि युष्मच्छब्दपर्यायः, तथापि तत्रोपविशन्तु भवन्त इत्येवं प्रथमपुरुषघटित एव वाक्यप्रयोगः साधुर्न तूपविशत यूयमितिवन् मध्यमपुरुषघटितः। तिङ्वाच्यकारकवाचिनि युष्मच्छब्द एव तस्यानु-शिष्टत्वात्।

किमिति प्रश्नक्षेपयोः। यथा—'के दारपोषणरताः के खेटाः किं चलं वयः' इति। दाराणां स्त्रीणां पोषणविषये रताः के इति प्रश्ने तदेव प्रश्न-वाक्यमुत्तरम्। केदाराणां शालिक्षेत्राणां पोषणविषये रता ये ते दारपोषण-रता इति बोध्या इत्यर्थः। खेटाः खगाः के, चलमस्थिरं किमिति प्रश्नद्वय-स्यैकमेवोत्तरं वय इति। तत्राद्ये विशब्दोऽन्त्ये वयस् इति ज्ञेयम्। एते किं-शब्दान्ताः पञ्चत्रिंशत् सर्वादयो व्याख्याताः।

यत्तु गणरत्नमहोदधौ 'उभत्वदन्योऽन्यपरस्परेतराः समः सिमत्वान्य-तरेतरेतराः'(गण०पृ०२६)इति पाठेन अन्योऽन्य परस्पर इतरेतर इति शब्द-त्रयमधिकं सर्वादिगणे प्रवेशितम्, तत्तु मुनित्रयानुक्तत्वात् फलाभावाच्चो-पेक्षितम्। ननु शब्दान्तरं तत् सर्वनामकार्यभागि च, तथा हि—'अन्योऽन्येषां पुष्करैरामृशन्तः' (शिशु० १८।३२) इति माघः, 'परस्परान् मेघावपसरतः', 'इतरेतरस्मै विद्यां प्रयच्छन्ति विप्राः' इत्यादि च प्रयुञ्जन्ति शिष्टाः, तदर्थ-मेषामिहावश्यकः पाठ इति चेन्न। द्विरुक्तान्यादिशब्दानामेवान्योऽन्यादि-शब्दत्वात्। तथा चोक्तं वार्त्तिककृता—'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्' (सि० कौ० २८९६) इति। बहुलग्रहणाद् अन्यपरयोर्न समासवत्, इतरशब्दस्य नित्यम्। 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः'[1] (सि० कौ० २८९७)। अन्योऽन्यं विप्रा नमन्ति। अन्योऽन्यस्मै

१. द्र०—'कर्मव्यतिहारे सर्वनाम्नो समासवच्च बहुलम्, यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य' (महा० ८।१।१२ वा०)।

प्रयच्छन्ति। एवं परस्परमत्र कस्कादित्वाद्[1] विसर्जनीयस्य सः। इतरेतरम् अत्र नित्यसमासवद्भावात् पूर्वपदस्य सुपो लुगेव। स्पष्टं चेदं कौमुद्यादौ।

नन्वेवम् 'अन्योऽन्याश्रयाणि कार्याणि न प्रथन्ते'[2] इति भाष्यस्थप्रयोगे 'परस्परतपः सम्पत्फलायितपरस्परौ प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः' इत्यादि कविप्रयोगेषु च समासे प्रविष्टाम् अन्योऽन्यादिशब्दानाम् अवयवस्य सुपो लुकि 'अन्यान्याश्रयाणि' इत्याद्यापद्येत, तस्माच्छब्दान्तरत्वमेषाम् आस्थेयमिति चेन्नैष दोषः। उक्तवार्त्तिके बहुलग्रहणेन सर्वेष्टसिद्धौ शब्दान्तरत्वाङ्गीकारे प्रमाणाभावात्।

अथेयं सर्वनामसंज्ञा सर्वादीनामिव तदन्तस्यापि भवति 'द्वन्द्वे च' (अ० १।१।३१) इति सूत्रेण सर्वाद्यन्तद्वन्द्वस्य संज्ञानिषेधात्। तेन परमसर्वस्मै स्पृहयतीत्यादि सिद्ध्यति। सर्वाद्यन्तद्वन्द्वस्य तु न संज्ञा, उक्तनिषेधात्। अत एव याज्ञवल्क्यस्मृतौ 'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' (याज्ञ० १।१) इति प्रयुक्तम्।

तत्तत्संज्ञाप्रणयनं च लाघवेन शास्त्रप्रवृत्त्यर्थमाचार्येण क्रियते। तत्र टिघुभादिसंज्ञावदल्पाक्षरां संज्ञामकृत्वा महत्याः संज्ञायाः करणादेवं तदाशयाऽवगम्यते यतः सर्वादीनि शब्दरूपाणि सर्वेषां नामानि ततः सर्वनामानीति व्यपदिश्यन्त इति[3]।

प्रसिद्धप्रवृत्तिनिमित्तका हि सर्वादयः। सर्वेषां पदार्थानां परामर्शकानि नामानि भवन्ति। तथा हि घटपटादयः सर्वे द्रव्यपदव्यपदेश्याः, शुक्लकृष्णादयो विश्वे गुणाः, यानि गमनाकुञ्चनादीनि तानि कर्माणि। इदममुष्मात् परम् एतस्मादपरम् एवंरीत्या सर्वेऽपि सर्वादयः सर्वपदार्थप्रतिपादनौपायिकानि नामानि भवन्ति। संज्ञोपसर्जनीभूतास्तु व्यक्तिविशेषमेवोपस्थापयन्ति

---

१. 'कस्कादिषु च' (अ० ८।३।४८)।

२. अयमंशो भाष्य इत्थं नोपलभ्यते। तत्र तु 'इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते' (१।१।१) एवमनेकत्रोपलभ्यते।

३. 'महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत् प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत। सर्वादीनि सर्वनामसंज्ञानि भवन्ति, सर्वेषां नामानीति चाऽतः सर्वनामानि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते।' (महा० १।१।२७)।

इति न तेषां संज्ञा, महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्। तेन सर्वो नाम कश्चित् तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वः तस्मै अतिसर्वायेत्येवमेव प्रयुज्यते।

संज्ञात्वेन प्रयुज्यमानो हि सर्वादिशब्दः प्रसिद्धं स्वार्थं परित्यज्य स्वानुपूर्वीमात्रेणोपकुर्वन् प्रवर्त्तत इति व्यक्तिविशेष एवावतिष्ठते। एवमुपसर्जनीभूतोऽपि जहत्स्वार्थायां वृत्तौ स्वार्थं परित्यजन् अजहत्स्वार्थायां स्वपरिजहन् वा वृत्त्युपस्थाप्यं विशिष्टस्वरूपमर्थान्तरमेवोपसंक्रामतीति व्यक्तिविशेष एवावतिष्ठत इति सूक्ष्मदृशाऽवधातव्यम्। स्पष्टं चेदं सर्वादिसूत्रे भाष्यकैयटयोः। इति **सर्वादिः** ॥९॥

## [अथ स्वरादिः]

**'स्वरादिनिपातमव्ययम्'** (अ० १।१।३७)। स्वरादयो निपातसंज्ञकाश्च शब्दा अव्ययसंज्ञका स्युरिति तदर्थः। तत्रापेक्षिताः स्वरादयः शब्दाः षड्भिः पद्यैः संगृह्यन्ते।

**स्वरन्तः सनुतः प्रातरुच्चैर्नीचैः शनैः पुनः।**
**ऋधगुगपदारात् श्वो ह्यो दिवर्त्तें पृथक् चिरम् ॥१०॥**

स्वरिति स्वर्गपरलोकयोः। यथा—**'ज्योतिष्टोमेन यज्वानो भावयन्ति स्वरव्ययम्।'** अक्षयं स्वर्गं सम्पादयन्तीत्यर्थः। परलोके यथा वेणीसंहारनाटके सूत्रधारवाक्ये—**'स्वस्था भवन्तु कुरुराजसुताः सभृत्याः'** (वेणी० १।७) इति। तत्र हि स्वस्था इत्यस्य निराकुला इति परलोकस्था इति चार्थद्वयं श्लेषमर्यादया कविना विवक्षितम्।

अन्तरिति मध्ये[1]। **'अन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ।'**

सनुतरित्यद्धे। रात्रे[2] **सनुतश्चौरो गच्छति** (गण० पृ० १४) इति गणरत्नमहोदधौ[3]। प्रौढमनोरमायां तु अन्तर्धाने इति स्थितम्। तस्मिन्नर्थेऽपि तदेवोदाहरणम्। अन्तर्धानं गच्छति निलीयत इत्यर्थः।

---

१. 'यस्त्वस्य स्वरादिषु पाठः स परिग्रहेऽप्यव्ययसंज्ञार्थः' (न्यासे १।४।६५)।

२. अकारान्तो 'रात्र'शब्दोऽपि रात्र्यर्थे प्रयुज्यते। यथा—

'क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा। त्रीणि रात्राण्युपोषित्वा तेन पापाद्विमुच्यते ॥'
(महाभा० अनु० १३६।११)

३. गणरत्नमहोदधौ 'सनुतरित्यन्तर्धाने' (पृ० १८) इति पाठ उपलभ्यते।

प्रातरिति प्रत्यूषे । 'पठति प्रातरुत्थाय ।'

उच्चैरिति महति । नीचैरित्यल्पे । उच्चैर्गजानारोहति । महत इत्यर्थः । नीचै: परिच्छेदं व्यवहरति । स्वल्पैरित्यर्थः । उत्कृष्टनिकृष्टयोरिति शाकटायनः । 'पदमुच्चैरवाप्तोऽपि खलो नीचैर्ध्रुवं व्रजेत् ।' 'उच्चैरुदात्तः', 'नीचैरनुदात्तः' (अ० १।२।२९, ३०) इति पाणिनीयसूत्रलिङ्गाद् ऊर्ध्वाधरयोरपि । 'खग उच्चैः प्रपतति स्वभावाद् वारि नीचकैः ।'

शनैरिति क्रियामान्द्ये । 'शनैः शनैर्व्रजत्येष हृदि कान्तां समुद्वहन् ।'

पुनरिति भूयो विशेषे च । पुनर्वो दर्शनं मेऽस्तु ।' भूय इत्यर्थः । 'ऋषयो यत्र मुह्यन्ति किं पुनस्तत्र कामिनः ।'

ऋधगिति सत्ये । ऋधग् वदन्ति विद्वांसः ।

युगपदित्येककाले । 'प्रतापस्तस्य भानोश्च युगपद् व्यानशे दिश ।' क्रियासमभिहारेऽपि । सम्प्रहरन्ते युगपत् । परस्परं ताडयन्तीत्यर्थः ।

आराद् दूरसमीपयोः । ग्रामादारादस्ति वापी । दूरं समीपे वा इत्यर्थः ।

श्वस् इत्यनागतेऽह्नि, ह्यस् इत्यतीते । ह्य आगतः,श्वो गन्तास्मि ।

दिवा दिवसे । 'दिवा निलीयते घूकः काको रात्रौ निजालये ।'

ऋते वर्जने । ऋते विद्याभ्यासान्न विद्याप्राप्तिः ।

पृथगिति भिन्नार्थे । 'बहिर्विकारं प्रकृतेः परं विदुः ।'

चिरमिति बहुकाले । 'किञ्चिन्नम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता' ॥१०॥

रात्रौ सायं मनागीषज्जोषं तूष्णीमवो वहिः ।
समया निकषा नक्तं स्वयं हेतौ वृथा नञः ॥११॥

रात्राविति निशि । रात्रौ चरो राक्षसः ।

सायमिति निशामुखे । सायन्तने सवनकर्मणि सम्प्रवृत्ते ।

मनागिति स्तोके । 'मनागपि न सौहार्द्दं खलस्य हृदि तिष्ठति ।'

ईषदिति अल्प कृच्छ्रयोः । 'ईषदुष्णं पयः पेयं प्रातः पुष्टचर्थमन्वहम् ।' 'कविनेषत्करं काव्यं त्रैलोक्यमिव विष्णुना ।'

जोषमिति सुखमौनयोः । 'जोषमास्ते प्रशंसात्मा न्येतु तापत्रयाकुलाः ।' सुखेन मौनेन वेत्यर्थः ।

तूष्णीमिति मौने । तूष्णीं भावः सदसि समये दूषणं सज्जनानाम् ।'

अवस् बहिस् इतीमौ अन्तःप्रत्यनीके। 'अवः पुरादुपवनं बहिर्ग्रामात् तपोवनम्।' अवः पुराद् बहिरित्यर्थः।

समयेति समीपमध्ययोः। 'समया मातरं पुत्रः समया गृहमेधते।' मातुः समीपे गृहस्य मध्ये इत्यर्थः।

निकषेत्यन्तिके। 'राघवो निकषा लङ्कामवधीद् राक्षसान् रणे।'

नक्तमिति रात्रौ। 'स एष नक्तंचरचक्रवर्त्ती।'

स्वयमित्यात्मनेत्यर्थे। 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी।'

हेताविति निमित्ते। 'हेतौ पुंसां दक्षिणाक्षिस्पन्दनं शोभनं मतम्।' शोभनं निमित्तमित्यर्थः।

वृथेति व्यर्थे। 'दुर्जनानां वृथा सख्यं परिणामे भयावहम्।'

नञिति निषेधपर्युदासविरोधाल्पत्वावक्षेपेषु। 'एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु।' अनास्थेत्यस्यास्थानेत्यर्थः। 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे' (मनु० ७ ८५) इति मनुवाक्ये अब्राह्मणे इत्यस्य ब्राह्मणभिन्ने ब्राह्मणसदृशे क्षत्रियादौ यद्दानं तत्समम्, यावद् दत्तं तावत् फलकमित्यर्थः। पर्युदासे सति न केवलं तद्भिन्नस्यैव ग्रहः किन्तु तत्सदृशस्यापि। नह्यनश्वमानयेत्युक्तो लोष्ठमानीय कृती भवति, किन्त्वश्वभिन्नमश्वसदृशं गवादिकमानीयैव। तथा चोक्तमाचार्यैः—'नञिवयुक्तमन्यसदृशाधिकरणे लोके तथा ह्यर्थगतिः'[1] इति। 'अधर्मान्नरकं याति धर्मेण स्वर्गमश्नुते।' अत्राधर्मादित्यनेन तद्विरुद्धं पापमुच्यते, न तु धर्माभावो धर्मभिन्नो वा संगीतश्रवणादेरप्यधर्मत्वापत्तेः। 'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः' (हितोपदेशे १।५६)। अत्राज्ञ इत्यस्याल्पज्ञानवानित्यर्थः। अपचसि त्वं जाल्म। अत्रापचसीत्यनेन कुत्सितं पचसीति निन्दा बोध्यते ॥११॥

इद्धासनावदुपधा सनादद्धा सनत्तिरः।
सामिशब्देन सहिता अन्तरेणान्तराविनाः ॥१२॥

इद्धेति प्राकाश्ये। 'इद्धा जितो राधिकया मुरारिः।' प्रकाशं जित इत्यर्थः।

---

१. द्र०—'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' (महा० ३।१।१२; ३।३।१९; ६।१।४५, ७१, १३५; ६।३।३४; ७।१।३७)।

सनेति नित्ये। 'सनातनं धर्ममुपदिशद् गुरुः।'

वदिति सादृश्ये। स च 'तेन तुल्यं क्रिया चेद्वतिः' (अ० ५।१।११५) इत्यादिसूत्रैर्विहितो वतिप्रत्ययः। तेन केवलस्य प्रयोगाभावात् तदन्ताः शब्दाः स्वरादौ बोध्याः। 'विप्रवत् क्षत्रियोऽधीते किन्तु नाध्यापयत्यसौ।' यत्तु कौमुद्यां वदित्यस्याग्रे 'ब्राह्मणवत्, क्षत्रियवत्' (सि० कौ० ६०२) इति स्वरादिगणे स्थितं तत्तु वदिति न स्वतन्त्रमव्ययं किन्तु प्रत्यय एवेति स्पष्टप्रतिपत्त्यर्थमुदाहरणतयोपन्यस्तम्। अत एव मनोरमायां तयोरर्थनिर्देशो न कृतः[1]। वस्तुतस्तु 'तद्धितश्चासर्वविभक्तिः' (अ० १।१।३८) इति सूत्रेणैवास्याव्ययत्वे सिद्धे स्वरादौ पाठस्य फलं मृग्यम्।

उपधेति भेदे। 'नोपधा जीवपरयोर्मन्यन्ते ब्रह्मवादिनः।' जीवात्मपरमात्मनोर्भेदं न मन्यन्त इत्यर्थः।

सनात् सनदितीमौ नित्यार्थौ। सनात्कुमारः। सनत्कुमारोऽपि स एव—'नित्यं कुमार इव स मुनिर्लक्ष्यते' इति तथा व्यपदिश्यते।

अद्धेति स्फुटावधारणयोः। 'आराधितोऽद्धा मनुरप्सरोभिः।' स्फुटं निश्चयेन वा रञ्जित इत्यर्थः। तत्त्वातिशययोरिति एके।

तिरसित्यन्तर्द्धौ तिर्यगर्थे परिभवे च। 'विश्वयोनिस्तिरोदधे।' 'लज्जा तिरश्चां यदि चेतसि स्यात्।' 'तिरश्चकार भ्रमरावलीढयोः सुजातयोः पङ्कजकोशयोः श्रियम्।'

सामीत्यर्धकुत्सितयोः। कटं साम्नि करोति स्म। अर्धं कुत्सितं वेत्यर्थः।

अन्तरेणेति वर्जने। 'अन्तरेणोद्यमं कोऽपि कार्यस्यान्तं न गच्छति।'

अन्तरेति मध्यविनार्थयोः। अन्तरा त्वां च मां हरिः। आवयोर्मध्य इत्यर्थः। सुखं नास्त्यन्तरा शमम्। 'अन्तरान्तरेण' (अ० २।३।४) इति सूत्रभाष्ये[2] तयोर्निपातत्वोक्तेः स्वरादिष्वेतयोः पाठः प्रक्षिप्त इति ज्ञायते। अत्रानयोः संग्रहस्तु कौमुद्यादिग्रन्थानुरोधेन।

---

१. 'वत्, तेन तुल्यमित्यादिभिर्विहितो वतिप्रत्ययः। यस्तु उपसर्गाद्धात्वर्थ इति विहितः, स नेह गृह्यते। यदुद्वतो निवतो यासि।' (प्रौढ० पू० पृ० १७७)।

२. 'अथवा यद्यपि तावदयमन्तरेणशब्दो दृष्टापचारो निपातश्चानिपातश्चायं तु खल्वन्तराशब्दोऽदृष्टापचारो निपात एव, तस्यास्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदतो निपातात्।' (महा० २।३।४)।

विनेति वर्जने 'त्वया विना न भोक्ष्येऽहम्' ॥१२॥

**कं शं ज्योक् सहसा नाना स्वस्ति श्रौषड् वषट् स्वधा ।**
**अलं वौषडुपांश्वस्ति क्षमा दोषा विहायसा ॥१३॥**

कमिति वारिमूर्द्धसुखव्योमनिन्दासु । कञ्जं वारिजम् । कञ्जाः केशाः । कंयुमर्दनः । कं सुखं यातीत्यर्थः । कं व्योम्नि गच्छन्तीति कङ्गाः । कं गामिनो वा खगाः । कुत्सितो दर्पो यस्य स कन्दर्पो मन्मथः ।

शमिति सुखे । शं सुखं करोतीति शङ्करो महेश्वरः ।

ज्योगिति कालभूयस्त्वे¹ । 'ज्योग् जीवन्तु महान्तस्ते जगतां ये हिते रताः ।'

सहसेत्याकस्मिकाविमर्शयोः । 'सौदामिनी द्योः सहसा पपात ।' 'सहसा विदधीत न क्रियाम्' (किराता० २।३०) ।

नानेत्यनेकार्थे² । नानालङ्काररुचिरः ।

स्वस्तीति मङ्गले³ । 'स्वस्ति तेऽस्तु महीपाल ।'

स्वधेति कव्यदाने । 'स्वधा पितृभ्यः ।'

श्रौषड्, वौषड्, वषडित्येते हविर्दाने । वषडिन्द्रायेत्यादि ।

अलमिति भूषणपर्याप्तिशक्तिनिषेधेषु । कन्यामलङ्करोतीयम् । भूषयतीत्यर्थः । हिताय मेऽलं तदपाङ्गमोक्षः । पर्याप्त इत्यर्थः । 'बकासुरबधायालं भीमसेनो महाभुजः ।' शक्त इत्यर्थः । 'अलं महीपाल तव श्रमेण' (रघु० २।३४) । श्रमेण साध्यं नास्तीत्यर्थः ।

उपांश्वित्यप्रकाशोच्चारणरहस्ययोः । पठेदुपांशूपस्थाने । उपांशु कथयति ।

---

१. 'ज्योगिति काले भूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च' (प्रौढ० पू० पृ० १७७) । 'ज्योगिति कालभूयस्त्वे । ज्योग् जीवामः । ज्योक्कृत्य नृपतिं गतः । शीघ्रार्थे सम्प्रत्यर्थेऽपि ।' (गण० पृ० २२) ।

२. प्रौढमनोरमायां गणरत्नमहोदधौ च नानेति विनार्थेऽप्युपलभ्यते । तथा हि—'नानेत्यनेकविनार्थयोः' (प्रौढ० पू० पृ० १७७) । 'नानेत्यनेकविनार्थयोः ।.........नाना नारीं निष्फला लोकयात्रा ।' (गण० पृ० २३) ।

३. 'स्वस्तीति पुण्याशीःक्षेममङ्गलप्रत्यभिवादनेषु । स्वस्त्यस्तु ते धार्मिक मत्प्रसादात् । स्वस्ति तेऽस्तु लतया सह वृक्ष । स्वस्त्यस्तु ते सौम्य चिराय जीव । स्वस्ति श्रीकुसुमपुरात् । राज्ञा नमस्कृता विप्राः स्वस्तीत्येते प्रयुञ्जते ।' (गण० पृ० २१) ।

अस्तीति सत्तायाम् । अस्तिक्षीरा मदीया गौः । विद्यमानक्षीरेत्यर्थः ।
क्षमेति क्षान्तौ । क्षमा महाराज । क्षान्तिं कुर्वित्यर्थः ।
दोषेति रात्रौ । 'दोषामन्यमहर्मर्त्यैर्दिवामन्येन्दुना निशा ।'
विहायसेति वियति । विहायसा चन्द्रमसा सुरम्यम् ॥१३॥

मृषा मिथ्या मुधा प्रायो मिथः साकं प्रवाहुकम् ।
पुरा मिथो मुहुः सार्द्धं नम आर्यहलं हिरुक् ॥१४॥

मृषामिथ्येतीमौ वितथे । 'विनापि कारणं हन्त मृषा वदति मन्दधीः ।' 'मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे ।'

मुधेति व्यर्थे । 'मुधापवादो मुग्धाक्षि त्वन्मुखाम्भकिलाम्बुजम् ।' (?)

प्रायसिति बाहुल्ये । 'प्रायेऽयं त्वत्पदेनैक्यं प्राप्तं तोये तपस्यति ।'

मिथसिति रहःसहार्थयोः । एतौ मिथो मन्त्रयेते । रहसि सहितौ वा मन्त्रयेते इत्यर्थः ।

साकमिति सहार्थे । साकं पित्रा सुतोऽधीते ।

प्रवाहुकमिति समकाले ऊर्ध्वार्थे च । 'राजंस्तव खड्गलता रिपुश्च कम्पं प्रवाहुकं भजतः ।' प्रवाहुकं पक्षिण आक्रमन्ते ।

पुरेति चिराऽतीते भविष्यदासन्ने च । पुरातनोऽयं वृत्तान्तः । पय एव पुरातनो दधि ।

मिथो इति सहार्थे । मिथो चैत्रेण गच्छति ।

मुहुसिति पुनरर्थे । 'नीचो मुहुर्वदति नैव करोति किञ्चित् ।'

सार्द्धमिति सहार्थे । 'वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।'

नम इति पूजायाम् । 'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ।'

आर्यहलमिति बलात्कारे ।'लुण्ठत्यार्यहलं पान्थान् किराता विजने वने ।'

हिरुगिति वर्जने । 'स्याद्धिरुक्कर्मणां मोक्षः ।' कर्मणां वर्जनान्मोक्ष इत्यर्थः ॥१४॥

प्रवाहिकाऽमुधिकोऽभीक्ष्णमामौ मा माङ् प्रताम् प्रशान् ।
प्रतानन्यदिमे पञ्चाशीतिः प्रोक्ताः स्वरादयः ॥१५॥

प्रवाहिकेति पूर्वोक्तस्य प्रवाहुकमित्यस्यैव पाठान्तरम् ।

अमिति शैघ्र्येऽल्पीभावे च। अम् पठतु भवान्। अम् विश्राम्यतु चैत्रः।

धिगिति निन्दाभर्त्सनयोः। 'धिगिमां देहभृतामसारताम्।' धिग् दुर्जन न लज्जसे।

अभीक्ष्णमिति पौनःपुन्यसातत्ययोः। 'अभीक्ष्णमावर्तयतीह चक्षुः।' 'अभीक्ष्णमस्यां शालायां वेदघोषः प्रवर्तते।'

आमिति प्रतिवचनावधारणयोः। आम् किं मां ब्रवीषि ? आम् चिरस्यज्ञातम्। यत्तु 'किमेत्तिङव्यय' (अ० ५।४।११) इत्यादिना 'कास्प्रत्ययादाम्' (अ० ३।१।३५) इत्यादिना च विहित आम्प्रत्ययोऽपीह गृह्यत इति एके—पचतितराम् एधाञ्चक्रे, इति मनोरमायामुक्तं[1] दीक्षितैस्तन्न स्वमतम् इति 'एके' इत्यनेन गम्यते। तत्राद्यस्य 'तद्धितश्चासर्वविभक्तिः' (अ० १।१।३८) इत्यनेन द्वितीयस्य 'कृन्मेजन्तः' (अ० १।१।३९) इत्यनेनाव्ययत्वसिद्धौ स्वरादौ पाठो विफल इति भावः।

मा माङितीमौ निषेधाशङ्कयोः।

'मा दुःखं मा च मे पापं मा सन्तु परिपन्थिनः।
माऽभून्मे बुद्धिरसती भगवंस्त्वत्प्रसादतः॥'

ङितो माशब्दस्य प्रयोगे लुङन्तमेव क्रियापदम्, 'माङि लुङ्' (अ० ३।३।१७५) इत्यस्य सर्वलकारापवादत्वात्। अङितः प्रयोगे तु यथायथं सर्वलकारा भवन्तीति विवेकः।

प्रतामिति ग्लानौ। चैत्रः प्रतामध्ययते। ग्लायतीत्यर्थः।

प्रशानिति समानार्थे। प्रशान् तनोति कार्याणि। समानानीत्यर्थः।

[प्रतान् विस्तारे।]

अन्यदित्यन्यार्थे। 'सन्त्यन्यद्वैदिकाः शब्दा अन्यदेव हि लौकिकाः।' अन्ये इत्यर्थः।

इमे पूर्वोक्ताः पञ्चाशीतिसंख्याकाः शब्दाः स्वरादयः प्रोक्ताः। पाणिनीयैरिति शेषः॥१५॥

मतोऽयमाकृतिगणस्ततोऽन्येऽपीह शाब्दिकैः।
लक्ष्यानुसाराज्ज्ञेयाः प्रकामं काममवश्यमः ॥१६॥

१. 'आम् अङ्गीकारे किमेत्तिङव्ययेति कास्प्रत्ययादित्मिश्च विहितः प्रत्ययोऽपीह गृह्यते इत्येके। पपाचतराम्। कारयामास।' (प्रौढ० पू० पृ० १७८)।

अयं च स्वरादिराकृतिगणः । आकृत्याऽव्ययत्वलक्षणया गण्यते संख्यायते । न त्वेतावन्त एवेति परिच्छिन्ने यः स तथाविधो मतः । ततो हेतोरिह गणेऽन्येऽपि शब्दाः शाब्दिकैः साधुशब्दवेदिभिर्लक्ष्यानुरोधतो ज्ञेयाः । तत्र केचित् संगृह्यन्ते श्लोकचतुष्टयेन प्रकाममित्यादिना ।

प्रकाममित्यतिशये । प्रकामंमप्रीयत यज्वनां प्रियः ।

काममिति स्वाच्छन्द्येऽनिच्छाङ्गीकारे च । बालः कामं भुङ्क्ते, कामं वदति च तथा चरति । बालस्य स्वच्छन्दतो भक्षणं भाषणं चरणं चेत्यर्थः । 'कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्' (कुवल० ५२) । अत्रान्येषां नृपत्वेनाङ्गीकारोऽनिच्छयेति काममित्यनेन सूच्यते ।

अवश्यमिति निश्चये । 'अवश्यंभावि शूराणां कवीनां च स्थिरं यशः' ॥१६॥

भूयः परं साचि साक्षात् साम्प्रतं मंक्षु नित्यदा ।
सत्यमाश्वनिशं प्रादुराविःसपदिसंवतः ॥१७॥

भूय इति पुनरर्थे ।

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' (मनु० २।९४)

परमिति किन्त्वर्थे । माननीयो गुरुजनः परं माता विशेषतः ।

साचीति तिर्यगर्थे । साचि लोचनयुगं नमयन्ती ।

साक्षादिति प्रत्यक्षतुल्ययोः । साक्षाद् द्रष्टा साक्षी । 'इयं साक्षाल्लक्ष्मीर्जनककुलदुग्धोदधिभवा ।'

साम्प्रतमिति न्याय्ये । 'सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना ।'

मंक्षु इति शैघ्र्ये । 'मंक्षूदपाति परितः पटलैरलीनाम् ।'

नित्यदेति सातत्ये । 'नित्यदा पठनाद्धि विद्या ।'

सत्यमित्यर्द्धाङ्गीकारे । 'सत्यं ब्रह्मर्षयः शान्ताः परं सिंहाद्व्यतिक्रमे ।'

आश्विति शैघ्र्ये । अश्वोऽयमाशु व्रजति ।

अनिशमिति सातत्ये । 'श्रीरामचन्द्रमनिशं हृदि चिन्तयामि ।'

प्रादुस् आविस् इतीमौ प्राकाश्ये । 'वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा ।' 'आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः' (विक्रमो० १।७) ।

सपदीति वर्त्तमानतत्क्षणशीघ्रार्थेषु । 'वसति सपदि काश्यां चन्द्रचूडः पतिर्मे ।'

'सपदि प्रमीलिताक्षः पथिकः कालप्रभं निरीक्ष्य धनम् ।
अपि शब्दार्थशरीरा सपदि मनोहारिणो कवीन्द्रोक्तिः ॥'

सुंवदिति वर्षे ।

'संवत् श्रीविक्रमादित्यकालात् खत्र्यङ्कभू(१९३०)मिते ।
अतीते गणरत्नानामावलीयं विनिर्मिता' ॥१७॥

बलवत् सन्ततमुषा सदाजस् रोदसी भुवः ।
भूरोम् दुष्ठ्वञ्जसा सुष्ठुतरसासुभ्रुटित्यदः ॥१८॥

बलवदिति प्रशंसातिशययोः ।

'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥' (अभि० शा० १।२)

बलवत् सुष्ठु यथा स्यात्तथा शिक्षितानामधीतविद्यानामपि चेत आत्मनि स्वविषये अप्रत्ययमविद्यमानविश्वासमित्यर्थः । बलवदस्वस्था शकुन्तला । अतिशयेनास्वस्था इत्यर्थः ।

सन्ततमित्यविरते ।

'स सन्ततं दर्शयते गतः स्मयः । कृताधिपत्यामिव साधुबन्धुताम् ॥'

उषेति रात्रौ । 'जहीहि कोपं सुश्रोणि वाति वायुरुषातनः ।'

सदेति अजस्रमितीमौ सर्वकाले । 'देवं सदा शिवं वन्दे तत्प्रसादादजः सुखम् ।'

रोदसी इति द्यावापृथिव्यर्थे । रोदस्यौ रोदस्योरिति चाव्ययमेवोक्तेऽर्थे । भुवरित्यन्तरिक्षे । भूरिति पृथिव्याम् । ओमिति[1] ब्रह्मण्यङ्गीकारे च ।

---

१. 'ओम्'शब्दस्य स्वरादिषु पाठः केवलं हेमव्याकरणे गणरत्नमहोदधौ चोपलभ्यते (द्र०—'द गणपाठ एस्क्राइब्ड टू पाणिनि' पृ० २१७, टि० ४०) । ग्रन्थकारेण यज्ञेश्वरभट्टेनात्र भट्टोजिदीक्षितस्योज्ज्वलदत्तं प्रत्याक्षेपं मनसि निधाय स्वरादिषु 'ओम्'शब्द आकृतिगणत्वात् सन्निविष्टः ।

स्वामिदयानन्दसरस्वतीस्वामिनोज्ज्वलदत्तेन च 'ओम्'शब्दस्य चादिषु पाठादव्ययत्वं स्वीकृतम् (द्र०—उ० १।१४२), परं भट्टोजिदीक्षित उज्ज्वलदत्तस्य वचनं

'ओमित्येकाक्षरं ब्रह्म' (गी० ८।१३)। 'आत्मन्यौपाधिको भेद इति चेदोमिति ब्रुवे।'

दुष्ठु इति गर्हायाम्। 'दुष्ठुकारी खलो ज्ञेयः सुष्ठुकारी तु सज्जनः।'

अञ्जसेति तत्त्वशीघ्रार्थयोः। 'प्रयासेनापि यन्नान्ये तद्विदुरञ्जसा।' तत्त्वतः शीघ्रं चेत्यर्थः।

सुष्ठु इति प्रशंसातिशययोः। सुष्ठूक्तम्। प्रशस्तमित्यर्थः। 'सुष्ठु विराजतो सुमुखी दधती लज्जावगुण्ठनं बाला।'

तरसेति शैघ्र्ये। 'घनगर्जनमाकर्ण्योत्पपात तरसा हरिः।'

सु इति पूजायाम्। सुजनः कस्य न प्रियः।

झटित्यविलम्बिते। आनीय झटिति घटयति।

अदित्याश्चर्ये। अद्भुतो रसः॥१८॥

कु आजक् चिररात्राय चिरेणास्तं चिरं चिरात्।
चिरस्यानुषकौ स्थाने वरं शुदिवदी इति॥१९॥

कु इति कुत्सितेषदर्थयोः। 'कुपथं तं विजानीयाद् गोविन्दरहितागमम्।' ईषदुष्णं कदुष्णम्। अत्र 'कोः कत्तत्पुरुषेऽचि' (अ० ६।३।१०१) इत्यनेन कुशब्दस्यैव कदादेशः।

आजगिति शैघ्र्ये। आजग् व्रजति जङ्घालः।

अस्तमिति विनाशे। अस्तं ते यान्तु शत्रवः।

चिररात्राय, चिरेण, चिरम्, चिरात्, चिरस्येते चिरार्थकाः।

आनुषगिति आनुपूर्व्ये। आनुषगेते सभ्या उपविष्टा राजसदसि राजन्ते।

स्थाने इति युक्तार्थे। 'स्थाने भवानेकनराधिपः सन्नकिञ्चन त्वं मखजं व्यनक्ति' (रघु० ५।१६)।

---

निराकुर्वन्नाह—'तन्न। तेषामसत्त्वार्थत्वात्। वस्तुतस्तु स्वरादिपाठादव्ययत्वम्।' (सि० कौ० ४३४१) इति। इदं च प्रत्याख्यानं प्रणववाचकस्य ब्रह्मणो नाम्नो ज्ञेयम् (अङ्गीकारे त्वसत्त्ववाचित्वमस्त्येव)। वस्तुतो गोपथब्राह्मणविरोधाद् दीक्षितवचनं त्याज्यमेव। तथा चोक्तम्—'निपातेषु चैनं वैयाकरणा उदात्तं समामनन्ति' (गो० १।१।२६) इति। निपातत्वं चास्य चादित्वादेव सम्भवति।

वरमिति ईषदुत्कृष्टे । 'समुन्नयन् भूतिमनार्यसंगमाद् वरं विरोधोऽपि समं महात्मभिः' (किरात० १।८) ।

शुदीति शुक्लपक्षे । वदीति कृष्णपक्षे । इत्येवमादयः शब्दाः स्वरादौ शिष्टप्रयोगानुसारेण वेदितव्याः ।

ननु 'स्वरादिनिपातमव्ययम्' (अ० १।१।३७) इति सूत्रे स्वरादिग्रहणं मास्तु, चादिष्वेव ते पठनीयाः, चादित्वेन च तेषां निपातसंज्ञयाऽव्ययत्वमपि सेत्स्यतीति चेन्मैवम् । 'चादयोऽसत्त्वे' (अ० १।४।५७) इत्यनेनासत्त्ववाचिनामेव निपातसंज्ञाकरणात् । स्वरिच्छति, स्वरध्यास्ते, स्वस्ति वाचयति इत्यादिप्रयोगेषु स्वरादीनामनेककारकशक्त्याश्रयतया सत्त्वार्थकत्वनिश्चयान्निपातसंज्ञाया अप्रसक्तावव्ययसंज्ञाया अप्यप्रसङ्गापत्तेः ।

अव्ययसंज्ञायाः प्रयोजनं तु 'अव्ययादाप्सुपः' (अ० २।४।८२) इतिसूत्रविहितविभक्तिलोपादिकम्, ततश्च प्रत्ययलक्षणेन[1] सुबन्तत्वेन पदत्वात्[2] स्वः कामयन्ते, अस्तं तिष्ठति इत्यादौ विसर्गादिकं सिद्ध्यतीति बोध्यम् ।

ननु 'द्व्येकयोर्द्विवचनैकवचने', 'बहुषु बहुवचनम्' (अ० १।४।२२,२१) 'कर्मणि द्वितीया' (अ० २।३।२) इत्यादि संख्याकारकबोधकसूत्रैरेकवाक्यतया 'स्वौजसमौट्' (अ० ४।१।२) इत्यादिसूत्रेण सुब्विभक्तिर्विधीयते, तथा चाव्ययार्थे संख्याकारकयोगाभावात् कथं तेभ्यो विभक्त्युत्पत्तिः ? यद्यपि स्वरादीनां केषाञ्चित् कारकत्वं सम्भवति, तथाप्यव्ययत्वावच्छेदेनाव्ययमात्रस्यार्थः संख्यान्वयविधुर एवेति कथं स्वाद्युत्पत्तिः कथं वा तेषां तन्निबन्धनम्, पदत्वम्, तत्प्रयुक्तं विसर्गादिकार्यं चेति ?

नैष दोषः । औत्सर्गिकैकवचनेन सर्वेष्टसिद्धेः । तथा हि—'द्विबह्वोर्द्विबहुवचने', 'एकवचनम्' इत्येव सूत्रद्वयं कार्यम् । एकग्रहणं च न कार्यम् । तत्र 'एकवचनम्' इत्युत्सर्गः करिष्यते, प्रातिपदिकादेकवचनमिति च तदर्थः । द्वित्वबहुत्वयोस्तु द्विवचनबहुवचनेऽपवादत्वाद् बाधके भविष्यतः । इति नास्ति प्रसङ्गः ।

एकत्वविवक्षायामेकवचनं हि द्वित्वबहुत्वयोर्द्विवचनबहुवचनयोर्विधानेन पारिशेष्यात् सिद्धमेवेति न तदर्थम् 'एकवचनम्' इत्युत्सर्गस्यावश्यकता । एवं चाप्राप्तप्रापणार्थमेव तत्सूत्रमतः संख्याकर्माद्यभावेऽपि प्रवर्तते । तथा

---

१. 'प्रत्ययलोपे प्रत्ययलक्षणम्' (अ० १।१।६२) ।

२. 'सुप्तिङन्तं पदम्' (अ० १।४।१४) ।

चैकत्वसंख्याविशिष्टार्थकप्रातिपदिकेभ्यः संख्यायोगरहितार्थकाव्ययेभ्यश्चैकवचनसिद्धिः। इदं च संख्याकर्माद्यर्थनिरपेक्षमौत्सर्गिकमेकवचनं विनिगमनाविरहात् सर्वासां विभक्तीनामुत्पद्यत इति विज्ञेयम्।

यत्तु गणरत्नमहोदधौ—'स्वरादीनां कारकशक्त्याश्रयसत्त्वाभिधायिनां—स्वर्यान्ति, स्वः स्पृहयति इत्यादौ यथायोगमुत्पन्नाया द्वितीयादिविभक्तेर्लुक्। पञ्चकृत्वः प्रभृतयस्तु विभक्त्यर्थप्रधानाः। स च विभक्त्यर्थः प्रातिपदिकार्थ एव सम्पन्न इति प्रातिपदिकार्थे प्रथमैव। सापि संख्याविशेषाभावान्न सर्वा किन्त्वेकवचनमेव तस्यौत्सर्गिकत्वात्। तथा चोक्तम्—एकवचनमुत्सर्गः करिष्यत इति' (द्र०—गण० पृ० २३) इति वर्धमानेनोक्तं तदापाततोऽरमणीयं प्रथमाविधायके सूत्रे मात्रग्रहणात्। यत्र प्रातिपदिकार्थे लिङ्गसंख्याद्याधिक्यं सम्भवति तत्रैव तेन सूत्रेण प्रथमाविधानात्, अलिङ्गसंख्येभ्योऽव्ययेभ्यः प्रातिपदिकार्थनिबन्धनप्रथमाविभक्तेरप्राप्तेः।

यदप्युक्तम्—'ओदकान्तात् प्रियं पान्थमनुव्रजेद् इति द्वितीयाद्युदकान्तानुव्रज्या न ज्यायसी, तस्मात् प्रथमातिक्रमे प्रयोजनाभावात् प्रथमैकवचनमेवाव्ययेभ्यः' (द्र०—गण० पृ० २४) इति तदप्ययुक्तम् 'अव्ययादाप्सुपः' (अ० २।४।८२) इति सूत्रे प्रत्याहारग्रहणवैयर्थ्यापत्तेः 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः', 'तृतीयासप्तम्योर्बहुलम्' (अ० २।४।८३, ८४) इत्यनयोः पञ्चम्यादिग्रहणस्य निर्विषयत्वापत्तेश्च। इत्यलम्। इति स्वरादिः॥१९॥

[अथ त्यदादिः]

'त्यदादीनि सर्वैर्नित्यम्' (अ० १।२।७२)। सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्त इति तदर्थः। तत्रापेक्षितास्त्यदादय एकेन पद्येन संगृह्यन्ते—

त्यत्तद् यदद्श्चैतदिदमदसेकद्वयस्तथा।
युष्मदस्मद्भवतुकिं क्रमादेते त्यदादयः॥२०॥

त्यत्तदित्यादि। स च देवदत्तश्च तौ। त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते शब्दपरविप्रतिषेधात्। स च यश्च यौ। त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि। सा च देवदत्तश्च तौ। तच्च देवदत्तश्च यज्ञदत्तश्च तानि। पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते। इति त्यदादिः॥२०॥

[अथ अयस्मयादिः]

'अयस्मयादीनिच्छन्दसि' (अ० १।४।२०)। एतानि छन्दसि यथा प्रयु-

क्तानि तथैव साधूनीति तदर्थः। उभयसंज्ञाधिकारादेका संज्ञा संज्ञाद्वयं वा तत्र बोध्यम्। तथा च वार्त्तिकम्—'उभयसंज्ञान्यपीति वक्तव्यम्' (सि० कौ० ५२१५) इति। यत्र भसंज्ञाप्रयुक्तं पदसंज्ञाप्रयुक्तं चेत्युभयकार्यं दृश्यते तानि वैदिकशब्दरूपाणि अयस्मयादिगणे बोध्यानीति तदाशयः। अयस्मयं वर्म। लोहमयमित्यर्थः। अयस्मयानि पात्राणि। अत्र 'स्वादिष्वसर्वनामस्थाने' (अ० १।४।१७) इत्यनेन प्राप्तां पदसंज्ञां बाधयित्वा भसंज्ञैव, तेन रुत्वादि न। 'स सुष्टुभा स ऋक्वता गणेन' (ऋ० ४।५०।५)। अत्र ऋक्शब्दस्य पदत्वात् कुत्वं भत्वाज्जश्त्वाभावः।

'उपदेशेऽजनुनासिक इत्' (अ० १।३।२) इत्यादि सौत्रप्रयोगा अपि अयस्मयादित्वात् साधवः 'छन्दोवत् सूत्राणि' (महा० १।१।१) इत्यतिदेशात्। आकृतिगणोऽयम्। इति **अयस्मयादिः**॥

## [ अथ चादिः ]

**'चादयोऽसत्त्वे'** (अ० १।४।५७)। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युरिति तदर्थः। लिङ्गसंख्यान्वितं द्रव्यं सत्त्वपदार्थः। असत्त्वार्थकानां चादीनां निपातत्वाद् अव्ययत्वम्, अव्ययत्वाद् विभक्तिलुक्। तत्रापेक्षिताश्चादयः पद्यचतुष्टयेन संगृह्यन्ते चवाहेत्यादिना—

**च वा हाहैव नूनं नेच्चेदेवं युगपत् कुवित्।**
**कूपत् सूपद् यत्र कच्चिन् माकिर्माकीं नकिर्नकिम् ॥२१॥**

**आकींशश्वद्भूयसश्चण् नह हन्त स्ममाङ्नञः।**
**त्वै न्वै द्वै रै स्वधा स्वाहा श्रौषड् वौषट् किलाथ तुम् ॥२२॥**

चेति समुच्चयान्वाचयेतरेतरयोगसमाहारविनियोगतुल्ययोगितावधारणेषु। चैत्रः पचति च पठति च। भिक्षामट गां चानय। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। पाणी च पादौ च पाणिपादम्। अहं च पुत्रश्च गच्छावः। 'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः' (सुभाषित० पृ० १०५ श्लो० ११८)। 'अतीतः पन्थानं तव च महिमा वाङ्मनसयोः।' हे देव यस्तव महिमा स वाङ्मनसयोः पन्थानमतीतश्चोल्लङ्घितवानित्यर्थः। पादपूरणेऽपि—'पिता माता तथैव च।'

वा इति विकल्पानवक्लृप्त्युपमाद्वन्द्वसमुच्चयेषु। 'व्रीहिभिर्यजेत

यवैर्वा ।"[1] 'को वा युवा भविष्यति धन्यः, परिणीय तां रुचिरगात्रीम् ।' 'जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम् ।' 'सतां माने ग्लाने मरणमथवा दूरगमनम् ।' न तृतीयं सम्मतमस्तीत्यर्थः । वायुर्वा दहनो वा ।

ह अह इतीमौ विनियोगे । त्वं ह ग्रामं गच्छ, अहायमरण्यं गच्छतु । आचारातिक्रान्तेऽपि—स्वयं ह ओदनं भुङ्क्ते, उपाध्यायं सक्तून् पाययति । स्वयं ह रथेन याति उपाध्यायं पदातिं गमयति । ह पादपूरणेऽपि । 'इति ह स्माहुराचार्याः ।' अहेति पूजायामपि—अह माणवको ब्रवीति । क्षमार्थेऽपीति शाश्वतः[2] ।

एवेति नियमौपम्योत्प्रेक्षासु । 'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः' (सा० द० १।२) । 'चन्द्र एव मुखं तन्व्या नेत्रे इन्दीवरे इव ।' 'उमास्तनोद्भेदमनुप्रवृद्धो मनोरथो यः प्रथमो बभूव । तमेव मेनादुहितुः कथंचिद् विवाहदीक्षातिलकं चकार ॥' तमेव मनोरथमेव तिलकत्वेनोत्प्रेक्ष्यते । अनवक्लृप्तावपि—क्वेव भोक्ष्यसे ।

नूनमिति वितर्कनिश्चयोत्प्रेक्षासु । 'नूनं शरदाफुल्लाः काशा आकाशममलं नभश्च ।' 'नूनं क्षत्रियपोतोऽयं यतो युद्धे व्यपेतभीः ।' 'त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ।'

नेदिति शङ्कायाम् । तथा च श्रूयते—'नेज्जिह्मायन्त्यो नरकं पताम' (निरु० १।११) इति । प्रतिषेधविचारसमुच्चयेष्विति शाकटायनः । पादपूरणेऽपीति एके ।

चेदिति यद्यर्थे । पथ्यं चेदौषधेन किम् ।

एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिश्चयाङ्गीकारेषु । 'एवं वादिनि देवर्षौ ।' एवं कुरु । मैवं मंस्थाः । यथा गुरौ बहुमान एवं गुरुपुत्रेऽपि युज्यते । एवं पठ । एवमेतत् कः सन्देहः । एवं करोमि ।

युगपदित्येककाले । 'राजंस्तवासिर्वैरी च कम्पते युगपद् युधि ।'

कुविदिति भूर्यर्थे प्रशंसायां च । 'कुविदङ्ग धनाढ्योऽयं श्रेष्ठी त्वोपकरिष्यति ।' कुविद्धनाढ्य इत्यस्य भूरिधनसम्पन्नः प्रशस्तधनवानिति वार्थः ।

कूपत् सूपदितीमौ प्रश्नवितर्कप्रशंसासु । कुविदियं गायति । एवं सूपत् ।

---

१. अनुपलब्धमूलं वचनम् । अस्मिन् विषये विविधाः पक्षा आप० श्रौ० (६।२१।१३-१४) द्रष्टव्याः ।

२. कोशनाम एतत् ।

यत्र इति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। यत्र भवान् वृषलं याजयेत्। नावक्लृपयामि न मर्षयामि गर्हे आश्चर्यं वैतत्। 'यच्चयत्रयोः' (अ० ३।३।१४८) इत्यादिना लिङ्।

कच्चिदिति प्रश्ने। 'कच्चिन्मृगीणामनघा: प्रसूतिः।'

माकिर्माकीं नकिरिति त्रयोऽपि वर्जने। तथा च श्रूयते कृष्णयजुर्वेदे—'माकिरेतत्परिष्ठाद्द्विद्मा हि त्वा वसुपतिं वसूनामिति' (तै० सं० १।७।१३।३)। 'नकिष्टं घ्नन्त्यन्तितो न दूरात्' (तै० सं० २।१।११।४) इति च।

नकिमाकीमित्येतौ सम्भावनायाम्। 'हंसावलक्षपक्षत्वान्नकिमेते विहङ्गमाः' ॥२१॥ आकीमेते विहङ्गमा वा।

शश्वदिति पौनःपुन्ये नित्ये संहार्थे च। 'पण्डितस्तु सकृद्द्वक्ति शश्वद्द्वक्ति कुशिक्षितः।' 'श्रेयः समादिशतु शाश्वतिकं मुकुन्दः।' 'ज्ञानेन शश्वद्द्वसति स्म शान्तिः।'

भूयरिति पुनरर्थे। 'लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।'

चणिति चेदर्थे। 'यद्यदार्थे च हेतौ च विचारे यदि चेच्चणः[1]।' इति सुबोधिन्यां स्वरप्रकरणेऽभिधानाद् अस्य णित्करणं 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्तम्' (अ० ८।१।३०) इत्यत्र विशेषणार्थम्। अतश्चेदित्यस्यार्थे वर्त्तमानो णकारेत्संज्ञक एव चशब्दस्तत्र सूत्रे गृह्यते।

नहेति प्रत्यारम्भे। प्रतिषेधयुक्तारम्भे इति यावत्। नह भोक्ष्यसे। पूर्वं भूङ्क्ष्व इत्युक्ते पश्चात् क्रोधोपहासेन वा यः पुनः पुनः प्रतिषेधयुक्तं पृच्छ्यते —'भोजनं करिष्यसि?' इति स एवमुच्यते। अत्र नहेति निपातयुक्तस्य भोक्ष्यसे इति तिङन्तस्य 'नह प्रत्यारम्भे' (अ० ८।१।३१) इति सूत्रेण निघातस्वरप्रतिषेधः।

हन्तेति हर्षविषादानुकम्पावाक्यारम्भेषु। हन्त जीविताऽस्मः। हन्त हताः पथिकगेहिन्यः। पुत्रक हन्त ते धानाः। हन्त ते कथयिष्यामि।

स्म इत्यतीते वाक्यपूरणे च। यजति स्म युधिष्ठिरः। अङ्ग स्म विद्वन्निमं माणवकमध्यापय।

माङ्नञौ स्वरादिगणे व्याख्यातौ। चादिष्वनयोः पाठान्निपातत्वेनाद्यु-

---

१. 'यद्यदार्थे च हेतौ च विचारे यदि चेच्चणः।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥'
(सि० कौ० सुबो० ५९१३)

दात्तत्वं सिद्धयतीति प्राञ्चः। फिट्स्वरेणैव[1] आद्युदात्तत्वे सिद्धे उभयत्र पाठस्य फलं चिन्त्यम्[2]।

त्वै इति विशेषतर्कयोः। अयं त्वै करिष्यते। कस्त्वै एषोऽभिगच्छति। द्वै इति वितर्के पादपूरणे च। न्वै इत्यपि पाठान्तरम्। को न्वै एष प्रकाशते। रै दाने अनादरे च। रै करोति। ददातीत्यर्थः। त्वं रै किन्तु करिष्यसि।

स्वधा कव्यदाने। स्वाहा श्रौषड् वौषड् एते हविर्दाने उदाहृताः[3]। एषामनेकाचामुभयत्र पाठः स्वरभेदार्थः।

किलेत्यागमारुचिन्त्यक्करणसम्भाव्यहेत्वलीकेषु। 'जघान वृत्रं किल देवराजः।' एवं किल केचिदाहुः। त्वं किल राधेय योत्स्यसे पार्थेन। स किल कविरेवमुक्तवान्। गोत्रस्खलितं किलाश्रुतं कृत्वा।

अथेति मङ्गलानन्तर्यारम्भप्रश्नकात्स्न्यधिकारप्रतिज्ञासमुच्चयपक्षान्तरेषु। अयं स्वरादावपि वेदितव्यः। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिद्धयति। तथा च श्रीहर्षः—

'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे।
यथा कुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्॥'
(नैष० १५।१९)

इति। अथ स्नपयाम्बभूवेत्यस्य मङ्गलस्नानं कारयामासेत्यर्थः। स्वरादावस्यानुल्लेखस्तु कौमुद्यनुरोधेन। यद्यपि अम् आम् इत्याभ्यां पूर्वं क्वचित् पुस्तके 'अथ'शब्दपाठः कौमुद्यामपि दृश्यते, तथापि प्रौढमनोरमायां स्वरादौ तस्य व्याख्यानाभावात् चादिगणस्थस्याथशब्दस्य व्याख्यावसरे— अयं स्वरादिरपि। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वम्' (प्रौढ० पू० पृ० १७९) इतिलेखाच्च कौमुद्यां स्वरादिगणेऽथशब्दपाठः प्रक्षिप्त इति भाति[4]।

---

१. 'निपाता आद्युदात्ताः' (फि० सू० ४।१२)।

२. 'माङ्नञौ स्वरादिषु उक्तौ। इह पाठस्तु निपातत्वार्थः। तेनाद्युदात्तत्वं सिद्धयतीति प्राञ्चः। तच्चिन्त्यम्। फिट्स्वरेणापीष्टसिद्धेः। यदप्याहुः—सत्त्ववचनानामपि अव्ययसंज्ञार्थं स्वरादिपाठ इति। तदपि चिन्त्यम्। लक्ष्मीवाचकस्यापि 'मा'शब्दस्याव्ययत्वापत्तेः। तस्मादुभयत्र पाठे फलं चिन्त्यम्।' (प्रौढ० पू० पृ० १७९)।

३. द्र०—पृ० १८, पं० १४-१५।

४. स्वरादावपि 'अथ' शब्दस्य पाठ उपलभ्यते। (द्र०—द गण० पृ० ७८)।

चादिरथशब्दस्तु श्रुत्यैव मङ्गलमाचष्टे मृदङ्गध्वनिवत्। आनन्तर्ये यथा—'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मत यथा' (पा० शि०)। वेदाध्ययनानन्तरमध्येतव्यां शिक्षां प्रवक्ष्यामीत्यर्थः। अत्रानन्तर्यार्थपरत्वेन प्रयुज्यमानोऽप्यथशब्दः श्रुत्या मङ्गलमपि सम्पादयत्येव। 'अथ शब्दानुशासनम्' (महा० पस्प०)। अत्र शब्दानुशासस्य शास्त्रस्य प्रारभ्यमाणताऽथशब्दसन्निधानात् प्रतीयते। प्रश्ने यथा—अथ गच्छामि ? कार्त्स्न्ये—अथ शक्नोति भोक्तुम्। अधिकारे—अथ कृपूपर्यन्ता अनुदात्तेतः। प्रतिज्ञायाम्—अथ ब्रूमो गौडो भवानिति। समुच्चये—ईश्वरमथ गुरुं भजस्व। पक्षान्तरे यथा—नित्यः शब्दोऽथानित्यः।

तुमिति तुङ्कारे तिरस्कारे इति यावत्। गुरुं तुङ्कृत्य हुङ्कृत्य ॥२२॥

यावत्तावत् सुष्ठु खलु तथाहिशुकमादहाः।
यथाकथाच पशु पुत् घ विष्वेकपदेऽङ्ग हे ॥२३॥
पाट् प्याडये है भो आतो विभक्तिप्रतिरूपकाः।
स्वरोपसर्गप्रतिमाः शब्दाश्चादिगणे स्मृताः ॥२४॥

यावत्तावदितीमौ साकल्यावधिमानावधारणेषु। साकल्ये—यावत् कार्यं तावत् कृतम्। 'अवधौतावदस्य प्रतिष्ठास्तु यावच्चन्द्रदिवाकरौ।' माने—यावद् दत्तं तावद् भुक्तम्। अवधारणे—यावदमत्रं तावतो ब्राह्मणानामन्त्रयस्व।

सुष्ठु इति प्रशंसायाम्। सुष्ठूक्तं तेन विदुषा। स्वरादौ पठितस्याप्यस्य पुनः पाठः स्वरभेदार्थः।

खल्विति निश्चये निषेधे वाक्यालङ्कारे च। 'प्रवृत्तिसाराः खलु मादृशां धियः।' 'निर्धारितेर्थे लेख्येन खलूक्त्वा खलु वाचिकम्।' अत्राद्यः खलु शब्दो निषेधे। अर्थे सन्दिष्टार्थे लेख्येन निर्धारितेऽवगते सति वाचिकं सन्देशवचनमुक्त्वा खलु न वक्तव्यमित्यर्थः। 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (अ० ३।४।१८) इत्यनेन क्त्वाप्रत्ययः। अत्रैव द्वितीयः खलु शब्दो वाक्यालङ्कारे।

तथाहीति निदर्शने।

'दुर्गुणाद्द्र भवति त्याज्यो विशिष्टगुणवानपि।
तथाहि लशुनो गन्धादुग्रात् सद्भिर्न गृह्यते॥'

शुकमिति शैघ्रये । शुकं व्रजति जङ्घालः ।

आदहेति हिंसोपक्रमकुत्सनेषु । **'आदह क्रामति गजं मृगराजो बलोत्कटः ।'** अत्रादहेत्यस्य सन्निधानादाक्रमणं हिंसारूपं द्योत्यते । आदह प्रासादोऽत्र विधीयते । अत्र क्षेत्रे प्रासादकमकं विधानमुपक्रान्तमित्यर्थः ।

यथाकथाचेत्यनादरे । **'यथाकथाचाविवेकी भूपालः सेव्यते जनैः ।'** अनादरेण सेव्यत इत्यर्थः ।

पश्विति सम्यगर्थे । तथा च श्रूयते—**'लोधं नयन्ति पशु मन्यमाना'** (ऋ० ३।५३।२३) इति ।

पुदिति कुत्सायाम् । पुत् कुत्सितं कसति गच्छतीति पुत्कसश्चाण्डालः । पृषोदरादित्वात् (द्र०— अ० ६।३।१०९) पुल्कसोऽपि ।

घेति हिंसाप्रातिलोम्यपादपूरणेषु । घ हिनस्ति मृगं व्याधः ।

विष्विति सर्वतोभावे । विषु सर्वतोऽञ्चतीति विश्वक् ।

एकपदे इत्यकस्मादित्यर्थे । अयमेकपदे तया वियोगः ।

अङ्ग हे ॥२३॥ पाट् प्याट् अये है भो इत्येते सम्बोधने । अङ्ग देवदत्त शृणु मे वचः । इत्याद्युदाहर्त्तव्यम् ।

आत इति इतोऽपीत्यर्थे । **'अभीष्टमातश्च धनं नराणामिदं हि सर्वस्य बलस्य बीजम् ।'**

सुप्तिङोर्विभक्तिरिति संज्ञा, ततश्च सुब्विभक्त्यन्तस्य तिङ्विभक्त्यन्तस्य च प्रतिरूपका आनुपूर्व्या सदृशाः शब्दाश्चादिगणे बोध्या इत्यर्थः ।

तत्र सुबन्तप्रतिरूपका यथा—अहमित्यहङ्कारे । अहं यातीति अहंयुः । अहङ्कारवान् । **'अहंशुभमोर्युस्'** (अ० ५।२।१४०) इत्यनेन युस् प्रत्ययः । अहं भावः अहंता । शुभमिति कल्याणे । शुभंयुः । शुभमावह । चिरेण, अन्तरेण, चिराय, चिररात्राय एते व्याख्याताः । अकस्मादित्यतर्कितोपनते । अकस्माद् भवमाकस्मिकम् । ममेति प्रत्यगात्मसम्बन्धे । ममेत्यस्य भावो ममता । एकपदे, मात्रायाम्, रात्रौ एते व्याख्याताः । एवमेते अहमादयो यथाक्रमं प्रथमादिविभक्त्यन्तप्रतिरूपका वेदितव्याः । एवमन्यान्यपि शिष्टप्रयोगानुसारेण सुब्विभक्त्यन्तप्रतिरूपकाण्यव्ययानि ज्ञेयानि ।

तिङ्विभक्तिप्रतिरूपकाः शब्दा यथा—अस्तीति विद्यमानार्थे । अस्तिक्षीरा मदीया गौः । अस्मि इत्यहमर्थे । **'त्वामस्मि वाचो विदुषां समवायोऽत्र**

तिष्ठति ।' 'अविद्यास्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः'(योग० २।३) इति पातञ्जलयोगसूत्रे 'अस्मिता'शब्दोऽहन्तापर्याय एव । स्यादित्यनेकान्ते पक्षान्तरसम्भावनादौ च । स्याद्वादिनो जैनाः । आसेति बभूवेत्यस्यार्थे । 'शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ।'

'असु क्षपणे' इति दिवादेरेव धातूनामनेकार्थतया सत्तार्थवृत्तेर्लिटि सिद्धेन आसेति तिङन्तप्रतिरूपकनिपाताभ्युपगमो विफल इति केचित् ।

गणरत्नमहोदधौ—

'आस ब्रूहि नयाति पश्यतयुतौ यात्यादहौ वर्तते,
स्यादातङ्कनवर्ततेभवतयो मन्येऽस्तुनास्त्यस्मयः ।
आदङ्केह्यसि पूर्यतेऽस्तिभवतू शङ्के तथा विद्यते,
पश्याहाविह कीर्त्तितौ मतिमता सङ्ख्ये निपाताह्वये ॥'
(गण० पृ० १६)

इति पठ्यते । तत्र विचारे क्रियमाणे सर्वाण्येतानि तिङन्तप्रतिरूपकाणीति न सिद्ध्यति । तथा हि—आसेति तिङन्तमित्युक्तमेव, आदहेति न तिङन्तप्रतिरूपकं तादृशतिङन्तस्यैवाभावात् । दहेत्यस्य तिङन्तत्वेऽपि आदहेति समुदायस्य तत्त्वाभावात् । अत एव चादिष्वस्य प्रातिस्विक एव पाठः । एवमातङ्कादङ्केत्यनयोरपि सत्यभिधाने आकृतिगणत्वेनैव निपातत्वम् ।

ब्रूहीति प्रैषावज्ञावसरेषु । ब्रूहि ब्राह्मणाः । पश्यतेति पूजाश्चर्ययोः । पश्यत माणवकोऽयं भुङ्क्ते । यातीति शक्यत इत्यर्थे इत्यादि यद्वर्धमानेन व्याख्यातं (द्र०—गण० पृ० १६) तत्र 'ब्रूहि ब्राह्मणा' इति प्रयोगो लोके असाधुरेव, तथाविधशिष्टप्रयोगस्यादर्शनात् । यदि तु क्वचिद् वेदे उपलब्धो भवेत्, तदा 'व्यत्ययो बहुलम्' (अ० ३।१।८५) इत्यनुशासनाद् वचनव्यत्ययेनान्वाख्येयः । अङिता माशब्देन मास्तु मा भवतु इत्यनयोः सिद्धौ तयोर्निपातत्वाङ्गीकारोऽपि विफलः । तस्मादास,ब्रूहि, नयाति, पश्यतेत्यादीनि तत्र तत्र वाक्येषु तिङन्तान्येव । धातूनामनेकार्थत्वाच्च नार्थासङ्गतिरिति दिक् ।

स्वरोपसर्गप्रतिमाः । तत्र स्वरप्रतिरूपका अ आ इ ई उ ऊ ए ऐ ओ औ इत्यादयः सम्बोधनभर्त्सनानुकम्पाप्रतिषेधपादपूरणाद्यर्थेषु यथासम्भवं वर्तन्ते । अ अपेहि । इ इन्द्रः । उ उत्तिष्ठ । उ ऊषरे बीजं वपसि । ए इतो भव । ऐ वाचं देहि । ओ श्रावय । ऋ लृ औ इत्येते मन्त्रस्तोभवचनाः । अत्र सर्वत्र 'निपात एकाजनाङ्' (अ० १।१।१४) इति प्रगृह्यसंज्ञायां प्रकृतिभावः ।

आङ् तु न प्रगृह्यः, अनाङिति ङित आकारस्य पर्युदस्तत्वात्। प्रयोगे ङिद-ङिद्विवेकस्य दुर्विज्ञेयत्वात् सन्देहनिवृत्तयेऽभियुक्तैरुक्तम्—

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥'

(महा० १।१।१४)

इति ईषदुष्णमोष्णम्। क्रियायोगे—आ इहि एहि। मर्यादायाम्—ओदकान्तात् प्रियं पान्थमनुव्रजेत्। अभिविधौ—ओदधंर्भूलोकः। वाक्ये—आ एवं नु मन्यसे। स्मरणे—आ एवं किल तत्। अनयोरर्थयोर्वर्त्तमानस्य ङित्वाभावाद् अनाङिति पर्युदासाप्रवृत्त्या प्रगृह्यत्वे प्रकृतिभावः।

उपसर्गप्रतिरूपकाः शब्दा यथा—प्रदत्तम्, अवदम्, निदत्तम्, सुदत्तमित्यादि। नात्र प्रादय उपसर्गाः। तथात्वे 'अच उपसर्गात्तः' (अ० ७।४।४७) इत्यस्य प्रवृत्त्या प्रत्तम् अवत्तम् इत्येव स्यात्, न तूक्तरूपाणीति ध्येयम्॥२४॥

**चादिराकृतिगणस्तेनाहो स्वित् सुकं नुकम्।**
**दिष्ट्येव बत ही हुं फट् नन्वाद्याः सम्मता इह॥२५॥**

आहो इति वितर्के। स्थाणुरयमाहो पुरुषः।

'अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः॥'

(का० प्र० १०।४४६)

स्विदिति प्रश्नवितर्कयोः। तथा च श्रूयते—'कः स्विदेकाकी चरति' (यजु० २३।१०)। 'अधः स्विदासीदुपरि स्विदासीत्' (यजु० ३३।७४)।

सुकमित्यतिशये। सुकं शोभते।

नुकमिति वितर्के। अहिर्नुकं रज्जुर्नुकम्।

दिष्ट्येत्यानन्दे। दिष्ट्या वर्धामहे।

इवेतीषदर्थोत्प्रेक्षोपमावाक्यालङ्कारेषु। 'शोणमिव कुतो नयनं निरागसि प्रेयसि तवेदम्।' ईषद् रक्तमित्यर्थः।

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥' (मृच्छ० १।३४)

पूर्वार्द्धे उत्प्रेक्षा, उत्तरार्धे उपमा। कथमिवैतद् भविष्यति। अत्रेवशब्दो वाक्यमेवालङ्करोति। इवार्थे वशब्दोऽपि—'नालिके रासवं योधाः शात्रवं व पपुर्यशः।'

बतेति हेतुखेदानुकम्पासन्तोषविस्मयामन्त्रणेषु। एवं बतात्र ज्ञेयम्। अहो बत महत् कष्टम्। अहो बत वराकोऽसौ। बत प्राप्तः पारः। अहो बतासि स्पृहणीयवीर्यः। 'बत बहुवित्तोऽयं तोयवाहो नितान्तम्।'

हीति विस्मयविषादयोः। 'हत विधिललितानां ही विचित्रो विपाकः।' 'शतकृत्वोऽप्यधीयाना ही न विद्मो जडा वयम्।'

हुमित्यनिच्छाभयस्मरणभर्त्सनकोपेषु। हुं हुं मुञ्च। हुं राक्षसोऽयम्। हुं तदेव किल। हुं निर्लज्ज अपसर। हुं न मां जानासि।

फडिति विघ्नप्रतिहाने उत्सारणे च। हुं फट् प्रतिहतमङ्गलम्। फड् दुर्वृत्त इतोऽपेहि।

नन्विति परमतापेक्षानुज्ञैषणापृष्टप्रतिवचनप्रश्ननयेषु। 'ननु वक्तृविशेषनिःस्पृहागुणगृह्यावचने विपश्चितः।' नन्वनुजानीहि मां नगरगमनाय। ननु अकार्षीः कटं देवदत्त ? ननु करोमि भोः। एवं प्रश्ननययोरप्युदाहार्यम्।

आद्यग्रहणात्—किंकिलेति क्रोधाश्रद्धयोः। किंकिल तत्र भवान् वृषलं याजयिष्यति।' अथकिम् इत्यभ्युपगमे। देवदत्त ! करोषीदं कार्यम् ? अथकिम्। ओमित्यर्थः। अहो इति सम्बोधनाश्चर्ययोः। अहो ईषाः संकटान्मां मोचयध्वमनागसम्। 'अहोभाग्यमहोभाग्यं नन्दगोपव्रजौकसाम्।' इत्यादय आदिश्वनुसन्धेयाः।

केऽप्येषां द्योतकाः, केचिद् वाचकाः, केऽप्यनर्थकाः, 'आगमा इव केऽपि स्युः सम्भूयार्थस्य साधकाः।'

तत्र द्योतकाः—च वाहैवादयः। वाचकाः—शश्वत् प्राह्णे प्रगे इत्यादयः। अनर्थकाः—कमिमीद्वित्यादयः। सम्भूयार्थस्य साधकाः—नह वै आहोस्वित् मा स्मेत्यादयः।

अत्रायं विवेकः—स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषां निपातस्वर आद्युदात्त[1] इष्यते ते चादिषु, तदितरे स्वरादिषु। स्वरद्वयभाजस्तूभयत्रेति। [इति] चादिः ॥२५॥

---

१. 'निपाता आद्युदात्ताः' (फि० सू० ४।१२)।

## [अथ प्रादिः]

**'प्रादयः, उपसर्गाः क्रियायोगे, गतिश्च'** (अ० १।४।५८,५९,६०) । अद्रव्यार्थाः प्रादयो निपातसंज्ञा भवन्ति, क्रियायोगे तु सतोमे निपातसंज्ञाः सन्त उपसर्गसंज्ञा गतिसंज्ञाश्च भवन्तीति त्रयाणामर्थः। तत्रापेक्षिताः प्रादय एकेन पद्येन संगृह्यन्ते प्रपरेत्यादिना—

**प्रपरापात्रसमोऽनुर् निस्निर्दुस्दुर्विनिस्वतिप्रतयः ।**
**अभ्याङावुपपर्यप्यभ्युद एते स्मृता गणे प्रादौ ॥२६॥**

प्रेति प्रकर्षे गत्याद्यर्थे च । **'प्रणम्य परमानन्दं वक्ष्ये धर्मान् सनातनान् ।'** अत्र प्रशब्देन धात्वर्थभूतायां नतौ प्रकर्षो द्योत्यते, तथा च क्रियायोगे सत्युपसर्गत्वाद् **'उपसर्गादसमासेऽपि'** (अ० ८।४।१४) इति णत्वम्, गतित्वाच्च **'कुगतिप्रादयः'** (अ० २।२।१८) इति समासे क्त्वो ल्यबादेशः[1]। निपातत्वेनास्य प्रशब्दस्याव्ययत्वम् । एवं यथायथं सर्वत्र गत्यादिसंज्ञाफलमूहनीयम् ।

प्रगत आचार्यः प्राचार्य्यः । एवमाद्युदाहरणेषु प्रशब्दो गताद्यर्थः **'प्रादयो गताद्यर्थे प्रथमया'** (सि० कौ० ११११९) इति वार्त्तिकेनात्रार्थविशेषे समासाभिधानात् । एतच्च वार्त्तिकं **'कुगतिप्रादयः'** (अ० २।२।१८) इत्यस्यैव प्रपञ्चभूतम् ।

परेति धर्षणप्रातिलोम्यवियोगविक्रमवधेषु । तत्र धर्षणप्रातिलोम्ययोर्यथा—**'दस्यवोऽस्य प्रतापेन पराभूता निलिल्यिरे ।'** शत्रवस्तु पराभूता सत्वरं शरणं ययुः । वियोगे—**'स्वान्तं पुराणपुरुषान्न परांचतान्नः ।'** वियुक्तं मा भूदित्यर्थः । [विक्रमे—] **'वीराः पराक्रमेणैव कुर्वन्ति स्ववशं जगत् ।'** वधे—**'विन्ध्याटव्यां वराहेण स नृशंसः पराहतः ।'**

अपेति वर्जनवियोगविपर्ययापकृष्टार्थेषु । अपहरेः संसारः । हरिं वर्जयित्वेत्यर्थः । परस्परस्मान्मेषावपसरतः । वियुक्तौ भवत इत्यर्थः । उत्सर्गस्यापवादोऽयम् । विपरीतो वादोऽपवादः । **'अपमृत्युभयं न स्यान्मृत्युञ्जयसपर्यया ।'** अपकृष्टो मृत्युरपमृत्युरकालमृत्युरित्यर्थः ।

अवेति निश्चयाधारज्ञानसम्यक्त्वविपर्ययतिरस्कारावकृष्टार्थेषु । अवधारणम् । अवकाशः । अवगमः । अवबोधः । अवरोहः । अवज्ञानम् । अवकृष्टः कोकिलयाऽवकोकिलः ।

---

१. **'समासेऽनञ्पूर्वे क्त्वो ल्यप्'** (अ० ७।१।३७) ।

समिति सम्यगर्थे भूषणे आनुकूल्ये सङ्गे च। 'संशोधयति नितान्तं स्वान्तं लोकस्य विद्यैव।' संस्कुर्वन्त्यलय: पद्मम्। स्मृत्यथ श्रुतिसंवादः। श्रुतेर्वेदस्य संवादोऽनुकूलोक्तिरित्यर्थः। 'धनुष्यमोघं समधत्त सायकम्।' संश्लिष्टमकरोद् इत्यर्थः।

अन्विति पश्चात्सादृश्यसमीपायामहीनार्थेषु लक्षणेत्थम्भूताख्यानभागवीप्सासु च। उपाध्यायमनुगच्छन्ति छात्राः। 'अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः।' सदृशं वदतीत्यर्थः। अनुभूपमात्या उपविशन्ति। अनुगङ्गं वाराणसी। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता इत्यर्थः। अनुवेदमन्यानि प्रमाणानि। वेदाद्धीनानीत्यर्थः। द्रुममनु विद्योतते चपला। अत्र विद्युद्विद्योतनं लक्ष्यं द्रुमो लक्षणम्। भक्तोऽयं शङ्करमनु। इत्थम्भूत इत्यर्थः। सुकृतिनोऽनुयशो जगति ध्रुवम्। यशः सुकृतीनां भाग इत्यर्थः। कर्मप्रवचनीयेनानुशब्देन[1] योगात् सुकृतिन इति द्वितीयाबहुवचनान्तम्[2]। वीप्सायाम्—वृक्षं वृक्षमनु सिञ्चति।

निस् निर् इति द्वावपि निश्चयनिषेधयोः। 'निर्यान्ति स्म नाराचाः कान्तादृवपातकैतवात्।' निश्चयेन गच्छन्तीत्यर्थः।

'आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।
महारम्भा अपि ज्ञानास्तिष्ठन्ति च निराकुलाः॥'
(द्र०—शिशु० २।७९)

अनाकुला इत्यर्थः। सान्तस्य रान्तस्य च यथानिमित्तं रुत्वादिषु कृतेषु तुल्यरूपत्वेऽपि रान्तस्य 'निलयते, निलय' इत्यादि, कृतरेफसान्तस्य तु 'निरयते, निरय' इत्यादिरूपाणीति विशेषः। एवं दुस्दुरोरपि 'दुलयते, दुरयते' इत्यादिरूपमनुसन्धेयम्। 'उपसर्गस्यायतौ' (अ० ८।२।१९) इति सूत्रेणायतिपरोपसर्गरेफस्य लत्वं विधीयते तच्च न रुत्वनिष्पन्नस्य भवति। तद्दृष्ट्या रुत्वस्यासिद्धत्वात्। एवं सान्तत्वरान्तत्वयोरन्यान्यपि सन्ति प्रयोजनानि, परं विस्तरभियान्नेह कीर्त्यन्ते।

दुस् दुर् इतीमौ निषेधे दुष्टार्थे च। 'दैवादापतितं कष्टं दुर्निवारं प्रचक्षते।' अनिवार्यमित्यर्थः। दुर्मेधसां सङ्गतिरेव मा भूत्। दुष्टा मेधा येषां ते दुर्मेधसः।

---

१. 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (अ० १।४।९०) इति कर्मप्रवचनीयसंज्ञा। २. 'कर्मप्रवचनीययुक्ते द्वितीया' (अ० २।३।८)।

वीति विशेषविरोधगताद्यर्थेषु । 'विभाति विद्यया विप्रः प्रतापेन तु भूपतिः ।' 'विनाऽपि कारणं मन्दा विवदन्ते परस्परम् ।' 'एकाकी हयमारुह्य जगाम विजनं वनम् ।'

नीति भृशार्थनित्यार्थनिवारणनिक्षेपेषु । 'नेत्रे निमीलयति भीतिवशात् कुरङ्गी ।' भृशं मीलयतीत्यर्थः । काश्यां विश्वेश्वरो निवसति । नित्यं वसतीत्यर्थः । 'निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः ।' निवारितैरपीत्यर्थः । 'निचखान जयस्तम्भान् गंगास्रोतोऽन्तरेषु च ।' निक्षिप्तवानित्यर्थः ।

सु इति पूजायाम् । सु सिक्तम् । सु स्तुतम् ।

अतीति पूजातिक्रमाद्यर्थेषु । 'अतिप्रकाशते चन्द्रमण्डलं शरदागमे ।' सुष्ठु प्रकाशत इत्यर्थः । 'अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् ।' निजां देवतामतिक्रम्य यजेत अन्यदेवतापूजां कुर्याद्यदीत्यादिरर्थः ।

प्रतीति प्रतिदानाभिमुख्यप्रतिनिधीत्थम्भूताख्यानाद्यर्थेषु । तिलेभ्यः प्रतियच्छति माषान् । तिलान् गृहीत्वा तत्स्थाने माषान् ददातीत्यर्थः । उत्तरं प्रत्युत्तरम्, नायकः प्रतिनायक इत्यादौ द्वन्द्विभावेनाभिमुख्यं प्रतिशब्दार्थः । अस्ति प्रतिपितुः पुत्रः । पितुः प्रतिनिधिः पुत्र इत्यर्थः । इत्थम्भूताख्यानादौ भक्तोऽयं राघवं प्रति इत्यादि पूर्ववदुदाहार्यम् ।

अधीत्यधिकारैश्वर्ययोः । 'राजमण्डलमध्यस्थो भूपोऽयमधिराजते ।' अधिकं शोभत इत्यर्थः । यदत्र मामधिकरिष्यतीति, विनियोक्ष्यत इत्यर्थः, इह विनियोक्तुरीश्वरत्वं गम्यते ।

आङीषदर्थेऽभिव्याप्तावाभिमुख्ये मर्यादायां च । 'आताम्रनेत्रयुगलोऽम्बुधिमाचामति मुनिः कलशजन्मा आयाति विपिनप्रहृतामप्यविचारेण वर्तमानानाम्' अत्र आताम्रेत्यस्येषद्रक्तेत्यर्थः । आचामति इत्यस्याभिव्याप्य पिबतीत्यर्थः । सकलं पिबति इति यावत् । आयातीत्यस्याभिमुखं यातीत्यर्थः । मर्यादायाम्—आमुक्तेः संसारः ।

उपेति अधिकार्थे हीनार्थे समीपे च । उपपरार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । । उपहरिं सुराः । हरेर्हीना इत्यर्थः । उपवृक्षं गावश्चरन्ति । वृक्षस्य समीप इत्यर्थः ।

परीति सर्वतोभावे वर्जने लक्षणादौ च । परिषिञ्चति भूमिमम्बुदः । सर्वतः सिञ्चतीत्यर्थः । 'दुःखत्रयपरिक्लिष्टा जना ब्रह्मविदः परि ।' ब्रह्म-

साक्षात्कारवन्तं वर्जयित्वा सर्वेऽपि जना दुःखत्रयभाज इत्यर्थः। लक्षणादौ —वृक्षं परि विद्योतते विद्युदित्याद्युदाहार्यम्।

अपीति प्रश्नसम्भावनान्ववसर्गगर्हा[1]समुच्चयेषु। प्रश्ने—अपि वेत्सि व्याकरणम्? सम्भावनायाम्—अपि गिरिं शिरसा भिन्द्यात्। शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिरियम्। अन्ववसर्गः कामचारानुज्ञा। यथा—अपि तिष्ठापि वा गच्छ। समुच्चये—अपि सिञ्चापि वा स्तुहि। शङ्कायामपि दृश्यते—अप्ययं धूर्तो भवेत्।

अभीति वीप्सालक्षणभागाभिमुख्येषु। वृक्षं वृक्षमभि सिञ्चति। अत्राभेः कर्मप्रवचनीयत्वेन[2] अनुपसर्गत्वात् षत्वं न। लक्षणे—'तां वृक्षशाखामभि चन्द्र उद्गतः।' भागे—यदत्र मामभिष्यात् तद् दीयताम्। 'अभिरभागे' (अ० १।४।९१) इति सूत्रेण भागार्थकस्याभेः कर्मप्रवचनीयत्वस्य पर्युदासादुपसर्गसंज्ञात्वेन 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (अ० ८।३।८७) इत्यनेनात्र षत्वम्। आभिमुख्ये यथा—प्रियमभिसरति मृगाक्षी विदलती कटकांस्तमसि। धर्षणेऽपि दृश्यते—श्येनो वर्त्तिकामभिभवति।

उदिति प्रकाशप्राबल्योर्ध्वभावेषु। 'उद्गन्धि पद्मं सलिलं च दत्त्वोत्तापं सरः पान्थजनस्य हन्ति।' उद्गन्धि प्रकाशगन्धवत्। उत्तापं प्रबलपरितापम्। उत्पतन्ति विहगा वियति द्राक्। ऊर्ध्वं गच्छन्तीत्यर्थः।

'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।
अनेकार्थाः स्मृतास्तेषामर्थवादो निदर्शनम्॥'

तथा हि प्रभवति पराभवति सम्भवत्यनुभवति, प्रहरति संहरति व्याहरतीत्यादौ ये विलक्षणा अर्थविशेषास्ते धातुवाच्या अपि उपसर्गसन्निधानेन प्रतीयमानात् सन्तो द्योतकत्वमेवोपसर्गाणां साधयन्ति, न चोपसर्गा एव तत्तदर्थविशेषाणां वाचकाः। धातवस्तु द्योतका इति विपरीतं किं न स्यादिति वाच्यम्, शत्रवः पराभूयन्ते इत्यादौ कर्मणि लकारापत्तेः। एवं च धातूपस्थाप्यानेकार्थद्योतकत्वनिबन्धन एवोपसर्गाणामनेकार्थत्वव्यवहार इति दिक्। [इति] प्रादिः ॥२६॥

---

१. गर्हार्थे नोद्धृतमुदाहरणम्।

२. 'अभिरभागे' (अ० १।४।९१) इति कर्मप्रवचनीयत्वाद् एकसंज्ञाधिकारान्नोपसर्गसंज्ञा। तेन 'उपसर्गात् सुनोति०' (अ० ८।३।६५) इति षत्वं न भवति।

## [अथ ऊर्यादिः]

'ऊर्यादिच्विडाचश्च' (अ० १।४।६१)। ऊर्यादयः शब्दाश्च्विप्रत्ययान्ता डाच्प्रत्ययान्ताश्च शब्दाः क्रियायोगे गतिसंज्ञका भवन्तीति तदर्थः। 'कुगतिप्रादयः' (अ० २।२।१८) इत्यनेन समासो गतिसंज्ञाप्रयोजनम्। तत्रापेक्षिता ऊर्यादयः शब्दाः संगृह्यन्ते पद्यद्वयेन।

ऊरी भ्रंशकलोररी गुलुगुधा धूली स्वधाविः सजू-
र्धूसी ध्वंसकला फलू मसमसा विक्लीफलीमस्मसाः।
ताली संशकला तथैव शकला स्वाहावषट्श्रौषटो
वौषट् श्रत्सहितो गणोऽत्र पठितावत्यूमसामश्मशौ ॥२७॥

ऊरी इत्यङ्गीकारे विस्तारे च। ऊरीकृत्य। अङ्गीकृत्य विस्तारं कृत्वेति वार्थः। केचिद् अनुकरणविस्तारयोरिति पठन्ति।

भ्रंशकलेति हिंसायाम्। भ्रंशकलाकृत्य। हिंसित्वेत्यर्थः क्रोडित्वेति वा।

धूलीति रोगान्यनिमित्तकव्याकुलीभावे। धूलीकृत्य। विज्वरां व्याकुलतां कृत्वेत्यर्थः।

स्वधेति कव्यदाने। स्वधाकृत्य पितृभ्यः। कव्यं सम्प्रदायेत्यर्थः।

आविरिति प्राकाश्ये। आविष्कृत्य। प्रकाश्येत्यर्थः। अस्य गतिसंज्ञकत्वात् 'ते प्राग् धातोः' (अ० १।४।८०) इत्यनुशासनेन धातोः प्रागेवाव्यवहितः प्रयोगो न तु परतो नापि व्यवहित इति स्थितम्। 'वारुणीमदविशंकमथाविष्चक्षुषोऽभवदसाविव रागः' (शिशु० १०।१९) इत्यादिकविप्रयोगास्तु प्रामादिक एव।

सजूरिति सहार्थे। सजूःकृत्य। सहितं साहित्येन वा कृत्वेत्यर्थः। सहार्थत्वादयं कृभ्वस्तिभिर्युज्यत एव। प्राकाश्यत्वादाविः शब्दोऽपि।

धूसीति विस्तारे। धूसीकृत्य। विस्तार्येत्यर्थः। कान्ताविति तु शाकटायनः। कान्तिरिच्छा।

ध्वंसकला भ्रंशकलावत्। फलू इति क्रियासम्पत्तौ। फलूकृत्य। क्रियां सम्पाद्येत्यर्थः।

मसमसा मस्मसाऽत्यूमसा मश्मशेत्येते हिंसार्थाः । मसमसाकृत्य । हिंसित्वेत्यर्थः ।

विक्ली फली ग्राक्ली[1] इत्येते विकारे । विक्लीकृत्येत्यादि । विकृतं कृत्वेत्यर्थः । ग्राक्ली विक्लीत्येतौ विचारे इति अपरे । तन्मते विचार्येत्यर्थः ।

तालीति विज्वराकुलीभावे । उत्तमार्थे विस्तारे वेति परे । तालीकृत्य । विज्वरां व्याकुलतां कृत्वेति, उत्तमं विस्तृतं वा कृत्वेत्यर्थः ।

संशकला शकलेतीमौ भेदनार्थौ । संशकलाकृत्य, शकलाकृत्य । विदार्येत्यर्थः ।

स्वाहादयश्चत्वारो हविःप्रदाने । स्वाहाकृत्येत्यादि । देवेभ्यो हविःप्रदायेत्यर्थः ।

श्रदिति श्रद्धाने । श्रद्धाय । श्रद्धां कृत्वेत्यर्थः । दधातिना एवायं प्रायो युज्यते । श्रुत् इति केचित् पठन्ति । श्रुत्कृत्य । शीघ्रं कृत्वेति च व्याचक्षते ॥२७॥

प्रादुस्तन्थी बन्धा केवास्याक्ली तथैव केवाली ।
वेताली शेवाली वर्षाल्यालोष्ठी पर्याली ॥२८॥

प्रादुरिति प्राकट्ये । प्रादुर्भवति विचित्रम् । प्रादुर्भूय । अस्य कृभ्वस्तिभिर्योगः । प्रादुष्कृत्य । प्रकटं कृत्वेत्यर्थः ।

तन्थीप्रभृतयः सर्वे हिंसार्थाः । वर्षाली पर्यालो शब्दौ प्राकाश्ये इति परे । वार्दाली पार्दालीति केचित् पेठुः । इति ऊर्यादिः ॥२८॥

[अथ साक्षादादिः]

'साक्षात्प्रभृतीनि च' (अ० १।४।७४) । साक्षादित्येवमादीनि शब्दरूपाणि कृञि वा गतिसंज्ञकानि भवन्तीति तदर्थः । 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्'(द्र०—सि० कौ० १११३)इति वार्त्तिकोक्तेश्च्व्यर्थे वर्त्तमानानामेवैषां गतिसंज्ञा । 'कुगतिप्रादयः' (अ० २।२।१८) इत्यनेन समासो गतिसंज्ञाप्रयोजनम् । तत्रापेक्षिताः साक्षादादयः संगृह्यन्ते पद्यद्वयेन ।

साक्षान्मिथ्या चिन्ता भद्रास्था रोचना लवणमुष्णम् ।
प्राजरुहा बीजरुहाऽद्धामार्थे प्राजया च वीजर्या ॥२९॥

---

१. 'ग्राक्ली' इति पदमग्रिमे श्लोके विद्यते ।

साक्षादिति प्रत्यक्षे। साक्षात्कृत्य। असाक्षाद्भूतं साक्षात्कृत्वेत्यर्थः। एवं सर्वत्र च्व्यर्थोऽनुसन्धेयः।

मिथ्येत्यसत्ये। मिथ्याकृत्य। चिन्तेति मानसव्यापारे। चिन्ताकृत्य गतः। अचिन्तितं चिन्तितं कृत्वेत्यर्थः। आदन्तत्वं निपातनात्। एतेन निपाताधिकारे पाठादेषां निपातत्वेनाव्ययत्वाद् 'अव्ययादाप्सुपः' (अ० २।४।८२) इत्याब्लोपे चिन्ताकृत्येत्यादिप्रयोगाः कथमिति मुह्यन्तः समाहिताः। एवं शकलाकृत्येत्यादिषु ऊर्यादिगणोदाहरणेष्वपि बोध्यम्। तेषामपि निपाताधिकारे पाठाद् अव्ययत्वाविशेषात्।

भद्रेत्यालोचनप्रशंसामङ्गलेषु। इदमप्यादन्तमव्ययं पूर्ववत्। तेनासमासेऽपि भद्रा करोतीत्येव भवति। अप्रशस्तं प्रशस्तं करोतीत्यर्थः। एवं चिन्ता करोतीत्याद्यपि बोध्यम्।

आस्थेति श्रद्धाऽऽदरयोः। आदन्तत्वं प्राग्वत्।

रोचनेति श्रद्धोत्पादनप्रशंसयोः। रोचनाकृत्य गतः। श्रद्धामुत्पाद्य प्रशस्येति वार्थः।

लवणमिति रुच्यर्थे। लवणङ्कृत्य। अपरुचितं रुचितं कृत्वेत्यर्थः।

उष्णमित्युत्तेजने रुच्यर्थे च। उष्णङ्कृत्य। अनुत्तेजितमुत्तेजितं कृत्वेत्यर्थः। मान्तत्वमनयोर्निपातनात्।

प्राजरुहा बीजरुहेतीमौ रुहिक्रियार्थौ। प्राजरुहाकरोति, बीजरुहाकरोति। वृक्षादि रोपयतीत्यर्थः। शोभायामिमाविति अन्ये।

अद्धेति स्फुटावधारणयोः। अद्धाकृत्य। स्फुटं निश्चितं वा कृत्वेत्यर्थः।

अमाऽन्तिकसहार्थयोः। अमाकृत्य। असमीपं समीपं कृत्वेत्यर्थः।

अर्थे इति प्रयोजनवति। अर्थेकृत्य वदति। अप्रयोजनं कृत्वा वदतीत्यर्थः। एदन्तत्वं यणे निपातनात्।

प्राजया वीजयेति द्वौ जरणक्रियार्थौ, शोभायामिति अन्ये। प्राजयाकृत्य, बीजयाकृत्य वा धनं गतः। जरयित्वोपभोगेन क्षयं नीत्वेत्यर्थः ॥२६॥

संसर्याग्नावदकं शीतार्द्रं विकसने प्रहसने च।
प्रादुर्वर्शे प्रतपने नम इत्याकृतिगणोऽयमुन्नेयः ॥३०॥

संसर्येति संसरणक्रियार्थः। संसर्याकृत्य।

अग्नाविति तापे कर्मविशेषे च। अग्नौकृत्य। तापयित्वेत्यर्थः। पितृयज्ञाङ्गमग्नौ करणं कृत्वेति वार्थः। तैक्ष्ण्ये इति शाकटायनः। औकारान्तत्वं सप्तम्या अलुग्वा निपातनात्।

उदकमित्युत्साहे सामर्थ्ये च। मान्तत्वं निपातनात्।

शीतमिति आर्द्रमिति च मान्तं निपातद्वयं मिथ्यार्थकम्। शीतङ्कृत्य, आर्द्रङ्कृत्य। अनादरे इति शाकटायनः।

विकसने प्रहसने इत्यदन्तं निपातद्वयमुत्साहे सामर्थ्ये च।

प्रादुरिति प्राकाश्ये। प्रादुश्चकार। ऊर्यादौ पठितस्यास्यात्र पाठश्च्व्यर्थविवक्षायां कृञ्योगे विभाषया गतित्वार्थः। प्रादुष्कृत्य, प्रादुष्कृत्वा। अप्रकाशं प्रकाशं कृत्वेत्यर्थः।

वशे इत्यस्वातन्त्र्ये। वशेकृत्य। स्वतन्त्रमस्वतन्त्रं कृत्वेत्यर्थः। प्रतपने इति सन्तापे।

नम इति प्रह्वीभावे। नमस्कृत्य गणाधीशम्। 'नमस्पुरसोर्गत्योः' (अ० ८।३।४०) इति सत्वम्। गतिसंज्ञाभावपक्षे नमः कृत्वेत्येव। यत्तु 'नमस्पुरसोः' इतिसूत्रस्थशब्देन्दुशेखरे नमस्करोतीति नमः करोतीति मूलोक्तप्रयोगद्वयसाधनाय 'ऊर्यादित्वाद् गतित्वं स्वरादिपठितस्य तु गतित्वाभावः' इत्युक्तं तच्चिन्त्यम्, काशिकावृत्तिगणरत्नादिग्रन्थेषूर्यादौ नमःशब्दस्यापाठात्। न च साक्षात्प्रभृतिषु च्व्यर्थवचनात् तदर्थस्यात्र सम्भवाभावाद् ऊर्यादित्वं कल्प्यत इति वाच्यम्, च्व्यर्थवचनस्य प्रायिकत्वात्। अत एव 'अग्नौकरणहोमश्च कर्तव्य उपवीतेन' (द्र०—निर्णयसिन्धौ, पृ० ८७७, सम्पादकः-दौलतरामगौडः, संवत् २०१७) इति निर्णयसिन्धुधृतछन्दोगपरिशिष्टवचने तथा हेमाद्रिलिखिते 'अग्नौकरणवत् तत्र होमो विप्रकरो भवेत्' इति यमवचने च च्व्यर्थाभावेऽपि समस्तम् 'अग्नौकरण' इति प्रयुक्तं सङ्गच्छते। अनमस्कृतानां नमस्करणकर्मत्वं 'देवं न नमस्करोति' इत्यादौ च्व्यर्थोऽपि सम्भावयितुं शक्यते। तस्मादस्योर्यादित्वकल्पनमयुक्तम्, साक्षात्प्रभृतित्वं तु सर्वप्रामाणिकसम्मतमेवेति दिक्।

औकृतिगणोऽयम्। तेन सहेति सम्बद्धार्थो, सहकृत्येत्यादि सिद्ध्यतीति केचित्।

इति श्रीमदगस्तिमहर्षिवंशस्य भट्टयज्ञेश्वरस्य कृतौ स्वीयगणरत्नावलीविवृतौ
॥ प्रथमोऽध्यायः ॥

# ॥ अथ द्वितीयोऽध्यायः ॥

## [अथ तिष्ठद्गुप्रभृतिः]

'तिष्ठद्गुप्रभृतीनि च' (अ० २।१।१७) । तिष्ठद्गु इत्येवमादीनि शब्दरूपाण्यव्ययीभावसंज्ञानि निपात्यन्ते इति सूत्रार्थः । तत्रापेक्षितास्तिष्ठद्गुप्रभृतयः संगृह्यन्ते सार्धपद्यत्रयेण ।

तिष्ठद्गु वहद्ग्वायत्याद्यं गवमायतीसमं प्राह्णम् ।
पूताच्च पूयमानाल्लूनाद्यवमपि च लूयमानात्तत् ।
संहियमाणखलेसंहृतशब्देभ्यो यवं बुसं च परम् ॥१॥

तिष्ठन्ति गावो यस्मिन् दोहायेति तिष्ठद्गु । दोहनकालः । प्रथमो रात्रेरर्द्धघटीरूपः ।

'तिष्ठद्गुप्रभृतीनि च' (अ० २।१।१७) इति चकारोऽवधारणार्थः । तेनैषां समासान्तरे घटकतया प्रवेशो न । 'आतिष्ठद्गु जपन् संध्यां पश्चिमामायतीगवात्' (द्र०—भट्टि० ४।१४) इति भट्टिकाव्ये 'आ—तिष्ठद्गु, आ आयतीगवाद्' इति पृथक् पदे ।

वहन्ति गावो यत्रेति वहद्गु । कालविशेषः ।

आङ्पूर्वादिणः शतरि ङीपि चायती इति रूपम् । तदाद्यं गवमायतीगवम् । विग्रहस्तु आयत्यो गावो यस्मिन्निति आयतीगवम् । सायङ्काल इत्यर्थः । अत्र प्रथमासामानाधिकरण्यादप्राप्तः शत्रादेशः, तत्पुरुषाभावादप्राप्तष्टच् । समानाधिकरणे स्त्रीलिङ्गे गोशब्दे उत्तरपदे प्राप्तस्य पुंवद्भावस्य विरहश्च निपात्यते ।

आयती समा हायनोऽत्रेति आयतीसमम् । कालविशेषः । वसन्त इति केचित् ।

प्रगतमहो यत्रेति प्राह्णम् । मध्याह्नसमयः । अत्र समासान्तपरत्वाभावेऽपि निपातनादह्लादेशः ।

---

१. 'पूताच्च पूयमानाल्लूयमानाद्यवमपि' इति पाठोऽपलभ्यते हस्तलेखे ।

पूता यवा यत्रेति पूतयवम् । पूयमाना यवा यत्रेति पूयमानयवम् । एवं लूनयवम्, लूयमानयवम्, संह्रियमाणयवम्, खलेयवम्, संहृतयवम्, संह्रियमाणबुसम्, खलेबुसम् । खले इति सप्तम्या अलुग् एदन्तत्वं वा निपातनात् । खलं च धान्यावापस्थानम् ॥१॥

समभूमि समपदाति प्ररथं सुषमं च विषमं च ।
एवं दुःषममपसममथ निःषममपरदक्षिणं प्रोढम् ॥२॥

समा भूमिर्यत्रेति भूमेः समत्वमिति वा समभूमि । एवं समपदाति । प्रगता रथा यत्रेति प्ररथम् । शोभनाः समा यत्र काले युगे वेति सुषमम् । शोभनत्वं समाया इति वा सुषमम् । विगतं समं यस्मात्तद् विषमम्, विगतत्वं समस्येति वा । दुष्टा समा यत्रेति, दुष्टत्वं समाया इति वा दुःषमम् । अपगता समा यत्रेति; अपगतत्वं समाया इति वा अपसमम् । निर्गता समा यस्मादिति, निर्गतत्वं समाया इति वा निःषमम् । सर्वत्र षत्वं निपातनात् ।

अपरा दक्षिणा यत्रेति अपरदक्षिणम् । प्रगतमूढं यस्मात् प्रोढम् ॥२॥

पुण्यसमं पापसमं प्रदक्षिणं प्रमृगमिच् समासान्तः ।
सम्प्रत्यसम्प्रतीति ज्ञेयाः शब्दा गणेऽत्र बुधैः ॥३॥

पुण्याः समा यत्र काले युगे वेति पुण्यसमम् । एवं पापसमम् । प्रस्तुता दक्षिणा दिग् यत्रेति; प्रस्तुतत्वं दक्षिणस्या इति वा प्रदक्षिणम् । प्रगता मृगा यत्रेति प्रमृगम् ।

'इच् कर्मव्यतिहारे' (अ० ५।४।१२७) इति सूत्रविहितः समासान्त इच् प्रत्ययोऽत्र गणे वेदितव्यः । तेन तदन्तस्याव्ययीभावत्वं यथा—दण्डादण्डि, केशाकेशि इत्यादि ।

सम्प्रति इति प्रादिसङ्घातो वर्तमानकाले वर्तते । स एव नञ्पूर्वोऽसम्प्रतीति ।

इदमत्रावधेयम् । तिष्ठद्गुप्रभृति संहृतबुसमित्यन्ताः शब्दाः कालविशेषे वृत्तय एवात्र गणे बोध्याः । तेनार्थान्तरे वर्तमाना नैतेऽव्ययीभावसंज्ञां लभन्ते किन्तु बहुव्रीहिसंज्ञामेव । यथा—तिष्ठन्ति गावो यत्र स तिष्ठद्गुर्ग्रामः । वहन्ति गावो यामिति वहद्गुर्हलपङ्क्तिः । पूतयवा लूयमानयवा वा क्षत्रभक्तिरित्यादि ।

समभूमि समपदाति इत्यादयस्तु कालभावयोरेव वर्तमाना अत्र वेदितव्याः। तेन समा भूमिर्यस्मिन् स समभूमिर्ग्रामः पन्था वा, समपदातिः सेना; प्ररथः सङ्ग्राम इत्येवंरीत्याऽव्ययीभावे एवैते इति विवेकः ॥३॥ इति तिष्ठद्गुप्रभृतिः॥

[अथ शौण्डादिः]

'सप्तमी शौण्डैः' (अ० २।१।४०)। सप्तम्यन्तं शौण्डादिप्रकृतिकसुबन्तैः सह समस्यते स चायं समासस्तत्पुरुषसंज्ञ इति तदर्थः। तत्रापेक्षिताः शौण्डादयं एकेन पद्येन संगृह्यन्ते शौण्डप्रवीणेत्यादिना—

शौण्डप्रवीणकितवा धूर्तव्याडान्तरोऽधिसंवीतौ।
पटुपण्डितचपलकुशलनिपुणाः शौण्डादिके ज्ञेयाः ॥४॥

अक्षेषु शौण्डोऽक्षशौण्डः। यत्त्वत्र समासवृत्तावासक्तिक्रियान्तर्भवति तद्द्वारा सामर्थ्यं मन्यमानाः प्राञ्चः अक्षेषु प्रसक्तः शौण्ड इति विग्रहं प्रदर्शयन्ति, तन्न युक्तम्; वृत्तौ तस्यार्थस्याप्रतीतेः, अधिकरणकारकस्य कर्तृकर्मद्वारैव क्रियान्वयसत्वेन शौण्डादिभिः सामर्थ्यस्याभिव्यक्तत्वाच्च। शौण्डशब्दो यद्यपि मद्ये रूढस्तथाप्यत्र लक्षणया प्रवीणो दुर्व्यसनी वाऽनेन भण्यते।

शास्त्रे प्रवीणः शास्त्रप्रवीणः। अक्षकितवः। अक्षधूर्तः। शस्त्रव्याडः। 'व्याडो हिंस्रपशौ सर्पे' (मे० डद्विके २५) इति मेदिन्यादिप्रामाण्याद् व्याघ्रादिवाचकोऽपि व्याडशब्दोऽत्र लक्षणया शूरमभिधत्ते।

अन्तःशब्दो मध्ये इत्यर्थकोऽधिकरणशक्तिप्रधानमव्ययम्। तद्योगेऽवयविनोऽधिकरणत्वविवक्षया 'वृक्षे शाखा' इतिवत् सप्तमी। वने अन्तः वनान्तरधिवसति।[1] अयमाधेयार्थकोऽपि। ईश्वरे आधेय ईश्वराधीनः। 'ईश्वर ङि अधि' इत्यलौकिकं प्रक्रियावाक्यम्। तत्राधिशब्देन समासे 'अषडक्षा०' (अ० ५।४।६) इत्यादिना खप्रत्ययः। एवमेव स्वाधीनः, पराधीन इत्यादि व्याख्येयम्। स्वातन्त्र्येण प्रयोगार्हे आधेयार्थकोऽधीनशब्दस्तु अनभिधानान्नास्त्येव। अधिकरणशक्तिप्रधानस्याधिशब्दस्य त्वव्ययीभावे एव। यथा—देहल्यामित्यधिदेहलि बालं उपविशति।

---

१. इतोऽग्रे पाठस्त्रुटितः सम्भाव्यते।

लोकसंवीतः लोके व्याप्त इत्यर्थः । पटुपटुः । सम्पण्डितः कर्मकुशलः आचार्यः निपुणः ॥४॥ इति शौण्डादिः ॥

[अथ पात्रेसमितादिः]

'पात्रेसमितादयश्च' (अ० २।१।४८) । पात्रेसमित इत्येवमादयः शब्दा निपात्यन्ते तत्पुरुषसञ्ज्ञकाश्च ते भवन्तीति तदर्थः । चकारोऽवधारणार्थ एषां समासान्तरे घटकतया प्रवेशं वारयति, तेन परमाः पात्रेसमिता इति वाक्यमेवावतिष्ठते । तत्रापेक्षिताः पात्रेसमितादिशब्दाः संगृह्यन्ते पद्यचतुष्टयेन ।

पात्रेसमिताः पात्रेबहुलाश्चोदुम्बरात्कृमिमशकौ
कूपादवटात्कच्छप इति ।
मण्डूकस्तु कूपकुम्भाभ्यामुदपानादथ काकौ
नगराद्वौ नगरवायसश्चैव ॥५॥

पात्रे समिताः सङ्गताः पात्रेसमिताः । अप्रचितक्षीरा गावो दोहनमात्रसङ्गतिमात्रपर्यवसितव्यापाराः सत्य एवमुच्यन्ते । तथा क्षीरादिफलरहिता अपि भावाः पात्रे बाहुल्येन संघट्टनात् पात्रेबहुला इत्युच्यन्ते । यद्वा पात्रे एव समिताः सम्प्राप्ताः बहुलाः प्रचुरा न त्वन्यत्र कार्ये ते पात्रेसमिताः, पात्रेबहुला इति चोच्यन्ते । पात्रशब्देनात्र स्वाद्वन्नपूरितं भोजनपात्रं विवक्षितम् । एवं च भोजनकाले एव सङ्गता न तु कार्यकाले इति तात्पर्यम् ।

उदुम्बरे एव वर्त्तमानः कृमिर्मशकश्चोदुम्बरकृमिः, उदुम्बरमशकः, स च तद्रसादुत्कृष्टमन्यं रसं न जानातीत्यर्थः ।

कूपे एव अवटे गर्त्ते एवावस्थितः कच्छपः कूपकच्छपः, अवटकच्छपः । एवं कूपमण्डूकः, कुम्भमण्डूकः, उदपानमण्डूकः । उदपानं निपानम् ।

कूपकच्छपादिर्हि सरःसागरादिसदृशं जलस्थानं न पश्यतीति केचित् । उदुम्बरे मशक इव, कूपे मण्डूक इवेति विग्रहं प्रदर्श्य, उदुम्बरमशको यथा उदुम्बरफलरसादन्यं विशिष्टरसं न वेत्ति, यथा च कूपमण्डूकः कूपादन्यज्जलस्थानं सरःसागरादिकं न पश्यति, तथा यो ग्रामविशेषे नगरविशेषे शास्त्रविशेषे वा प्रतिबद्धस्ततोऽन्यदधिकं विशिष्टं न मन्यते स एवमुच्यत इत्याहुः ।

नगरे काक इव नगरकाकः, नगरवायसः । यः स्वार्थनिष्ठः परवञ्चना-

निपुणः स एवमुच्यते। यद्वा नगरकाको न क्वचित्तिष्ठति किन्तु सर्वत्र परिभ्रमति तथा योऽनवस्थितः स कापुरुष एवमुच्यते ॥५॥

ङ्यन्तात् पितुतो गेहाद् गोष्ठाच्छूरः परस्तथा पिण्ड्याः।
मातरि पुरुषो गेहान्ङ्यन्तान्नर्दी च मेही च ॥६॥

ङ्यन्तात् सप्तम्येकवचनान्तात् पितुः पितृशब्दाद् गेहाद् गोष्ठाच्च परः शूरः शूरशब्दः। एवं च पितरिशूर इत्यादि [गेहेशूरः गोष्ठेशूरः] शब्दत्रयं वेदितव्यम्। तथा पिण्ड्याः परः शूरः पिण्डीशूरशब्द इत्यर्थः। ङ्यन्तादिति न पिण्ड्या इत्यस्य विशेषणं भिन्नलिङ्गत्वात्। तत्र यस्ताडनतर्जनादिना पितर्येव पौरुषमवलम्बते न तु शत्रुषु स पितरिशूर इत्युच्यते। गेहे एव गोष्ठे एव वा शूरः प्रगल्भोऽन्यत्र तु भीरुः स गेहेशूरो गोष्ठेशूर इति चोच्यते। पिण्ड्यां खादितव्ये वस्तुनि शूरः [कलहादिकं कृत्वापि खाद्यं] खादति स पिण्डीशूरः।

यः प्रतिषिद्धसेवनेन सदाचारमर्यादां भिनत्ति स मातरिपुरुष इत्युच्यते। गेहे एव नर्दति अन्यत्र वाचमपि नादत्ते स गेहेनर्दी, गेहेमेही। योऽवश्यकार्यार्थमपि न बहिर्निःसरति स एवमुच्यते ॥६॥

क्ष्वेडी दाही व्याडो धृष्टो दृप्तश्च विजिती च।
गोष्ठान्ङ्यन्तात् क्ष्वेडी पण्डितपटुविजितिनः प्रगल्भश्च ॥७॥

क्ष्वेडीत्यादिषु गेहान्ङ्यन्तादित्यस्य पूर्वतोऽनुवृत्तिः। यो गेहे एव क्ष्वेडति विक्रमं दर्शयति, अन्यत्र तु भीरुः स गेहेक्ष्वेडी। गेहेदाही। गेहे एव दहनशीलः। गेहे एव यः क्रूरः स गेहेव्याडः। एवमेव गेहेधृष्टः, गेहेदृप्तः, गेहेविजिती। विजितमनेनेति विजिती। गोष्ठेक्ष्वेडी, गोष्ठेपण्डितः, गोष्ठेपटुः, गोष्ठेविजिती, गोष्ठेप्रगल्भः ॥७॥

आखनिकबको गर्भेतृप्तोऽथ च कर्णतो ङ्यन्तात्।
टिरिटिरचुरुचुरशब्दावावन्तावित्ययं गणः प्रोक्तः ॥८॥

आखनिको जलस्रोतःखातं तस्मिन् बक इव आखनिकबकः। आत्मीये आखनिके यत्किञ्चिल्लभ्यते तन्मात्रं भक्षयन् बको यथान्यत्र न गच्छति तथा आत्मीये गृहे यत्किञ्चिद् वर्तते तद्भक्षयन्नान्यत्र गच्छति स एवमुच्यते। अथवा आखनिके स्थितो बको यथा जलाशयस्थक्षुद्रजन्तुभक्षणानुसन्धानेन सकुचितात्मा बद्धलक्ष्यो भवति तद्वदाचरन् धूर्त आखनिकबक इत्युच्यते।

यः स्वमात्राऽऽहृतेनाहारेण गर्भे एव तृप्तो गर्भान्निर्गत्य तु न कदाचिद् यथेष्टमुदरभरणं कृतवान् स गर्भेतृप्तो दरिद्रः ।

टिरिटिरेति चुरुचुरेति अनर्थकवाक्यस्यानुकरणम् । कर्णे टिरिटिरेव चुरुचुरेव वा यानुचिता क्रिया सा कर्णेटिरिटिरा, कर्णेचुरुचुरा । चापलेनाऽनुष्ठीयमानानुचिता चेष्टोभाभ्यां शब्दाभ्यामुच्यते ।

शाकटायनः तु कर्णेटिरिटिरिः, कर्णेचुरुचुरुरित्याह । तदित्थं व्याख्येयम्—टिरिटिरि, चुरुचुरु इत्यनुकरणशब्दावेतौ लक्षणया तत्कारिणि व्यवह्रियेते । एवं च कर्णे किमपि जल्पित्वाऽयं पिशुनो जीवति, नास्यान्यः कश्चिद् विक्रमोऽस्तीत्याक्षेपबोधकौ कर्णेटिरिटिरिः कर्णेचुरुचुरुरित्येतौ शब्दाविति ।

आकृतिगणोऽयं तेन नगरसारमेयो गृहकलविङ्कः इत्यादयो ज्ञेयाः । ॥८॥ [इति पात्रेसमितादिः] ॥

[अथ व्याघ्रादिः]

'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (अ० २।१।५६) । उपमेयं व्याघ्रादिभिः सह समस्यते स चायं समासस्तत्पुरुषसंज्ञको भवतीति तदर्थः । तत्रापेक्षिता व्याघ्रादिशब्दा एकेन पद्येन संगृह्यन्ते ।

व्याघ्रर्षभसिंहर्क्षाश्चन्दनवृकवृषवराहहस्तितरु ।
रुरुपुण्डरीकपल्लवमृषिकलशाद्या इहाकृतिगणे स्युः ॥९॥

पुरुषो व्याघ्र इव पुरुषव्याघ्रः । शौर्यादिभिर्गुणैर्व्याघ्रसदृशः पुमानेवमुच्यते । पुरुषर्षभः, पुरुषसिंहः, पुरुषर्क्षः । क्रौर्यादिना भयङ्कराकारादिना वा ऋक्षसदृशः पुरुष एवमुच्यते ।

पुरुषचन्दनः । स्वसौरभसम्पत्त्या चन्दनो यथा पिषतोऽप्यानन्दयति तथा यो लोभनीयैर्निजसद्गुणैर्द्विषतोऽपि धिनोति स पुरुष एवमुच्यते । एवं सर्वत्र यथायथमुपमानोपमेयभाव उन्नेयः ।

पुरुषवृकः, पुरुषवृषः, पुरुषवराहः, पुरुषहस्ती, वंशतरुः, पुरुषरुरुः, मुखपुण्डरीकम्, पाणिपल्लवः, राजा ऋषिरिव राजर्षिः, कुचकलशौ ।

आकृतिगणोऽयम् । तेन दोर्दण्डो मुखपद्मम् इत्यादि सिद्ध्यति । सूत्रे सामान्याप्रयोगे इत्युक्तेः पुरुषो व्याघ्र इव शूर इत्यादौ न समासः ।

अथ कथं 'भाष्याब्धिः क्वातिगम्भीरः' (प्रदीपारम्भे श्लो० ६) इति कैयटः प्रायुङ्क्त, 'अतिगम्भीर' इत्यस्य साधारणधर्मवाचकपदस्य प्रयोगाद्

उपमितसमासाप्राप्तेरिति चेत्, 'अत्र गाम्भीर्येण सादृश्यं न विवक्षितं किन्तु विततत्वदुरवगाहित्वादिना तस्य चाप्रयोगोऽस्त्येति निर्बाधः समासः' (द्र०–प्रौढ० पू० पृ० ३२२) इति प्रौढमनोरमाकृत आहुः ।

भाष्यमेवाब्धिर्भाष्याब्धिरिति मयूरव्यंसकादित्वात् (अ० २।१।७२) समास इति शब्देन्दुशेखरकृतः । युक्तं चैतत् । अनुपात्तधर्मेण साम्यविवक्षायां साधारणधर्मवाचकपदप्रयोगस्य वैयर्थ्यापत्तेः, उपात्तधर्मसत्त्वे तेनैव साम्यप्रतीतेरनुभवसिद्धत्वाच्च ।

अयमुपमितसमासो व्याघ्रादीनामुपमानत्वे एव, उपमेयवाचकपदसमानलिङ्गकत्वे एव च भवति । अत एव 'परवल्लिङ्गम्' (अ० २।४।२६) इति सूत्रे 'द्वन्द्वैकदेशिनोः' (महा० २।४।२६) इति न्यासं कृत्वा भाष्यकृता कृतं तत्पुरुषग्रहणप्रत्याख्यानं सङ्गच्छते । अर्द्धमेव पिप्पली अर्द्धपिप्पलीत्येवंरीत्या व्यपदेशिवद्भावेनावयवमात्रे समुदायरूपत्वारोपेण समानाधिकरणसमासमाश्रित्य 'अर्द्धं नपुंसकम्' (अ० २।२।२) इत्येकदेशिसमासविधायकमपि तत्र प्रत्याख्यातम् । यदि भिन्नलिङ्गयोरप्युपमितसमासो भवेत्तदा मुखेन्दुर्वाग्वज्र इत्यादौ दृश्यमानपरवल्लिङ्गतासिद्ध्यर्थं तत्पुरुषग्रहणस्यावश्यकत्वे भाष्योक्ततत्प्रत्याख्यानासङ्गतिः स्पष्टैव । तस्मान्मुखमेवेन्दुर्मुखेन्दुः, भाष्यमेवाब्धिर्भाष्याब्धिरित्येवमादयो मयूरव्यंसकादित्वेन साधनीयाः । एवंविधेषु रूपमेव नोपमालङ्कारः ।

न चैवं विशेषणसमासेन सिद्धौ मयूरव्यंसकत्वादित्वकल्पनमयुक्तमिति वाच्यम्, उपमानस्येन्दुप्रभृतेर्मुखप्रभृत्युपमेयपरिच्छेदकत्वाद् विशेषणनिश्चयेन पूर्वनिपातापत्तेः । मयूरव्यंसकादिसमासस्य त्वन्यो राजा राजान्तरमित्यादौ पूर्वपदार्थप्रधानतायाः परवल्लिङ्गतायाश्च दृष्टत्वेन तदाश्रयणात् सर्वेष्टसिद्धिरिति विभावनीयम् ॥९॥ इति व्याघ्रादिः ॥

## [अथ श्रेण्यादिः, कृतादिः]

'श्रेण्यादयः कृतादिभिः' (अ० २।१।५९) । श्रेण्यादयः शब्दाः कृतादिभिः समस्यन्ते स च समासस्तत्पुरुषसंज्ञ इति तदर्थः । तत्रापेक्षिताः श्रेण्यादयः कृतादयश्च पद्यचतुष्टयेन संगृह्यन्ते ।

श्रेणिः पूगः कुन्दुमराशी निचयो विशेषनिपुणौ च ।
पर इन्द्रदेवमुण्डश्रमणाध्यापकवदान्यपटुकुशलाः ॥१०॥

क्षत्रियचपलब्राह्मणमभिरूपकपण्डितौ विशिष्टश्च ।
भूतो विधानकृपणावित्याकृतिगण उदीरितः प्राज्ञैः ॥११॥
कृतमतमितसम्भावितयुक्ता भूतोक्तवृष्टकलिताश्च ।
संसेवितावधारितनिराकृतोपाकृताः समाम्नातः ॥१२॥
उदितश्च समाज्ञातोदाहृतविश्रुतसमाख्याताः ।
दलितश्चोपकृतो ह्यवकल्पित इति गदित एष गणः॥१३॥

'श्रेण्यादिषु च्व्यर्थवचनम्' (सि० कौ० १०६६) इत्युक्तत्वात् च्व्यर्थान्तभवि‍न समासः। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः पुरुषास्तिष्ठन्ति। एवमग्रेऽपि विग्रहवाक्ये च्व्यर्थः प्रदर्शनीयः।

पूगकृतः। पूगः सङ्घः। कुं भूमिं दुनोति स कुन्दुः उन्दुरुस्तं मीनाति हिनस्तीति कुन्दुमो मार्जारः। अकुन्दुमाः कुन्दुमा इत्यवकल्पिताः कुन्दुमावकल्पिताः।

राशिकृताः, निचयोक्ताः, विशेषकलिताः, निपुणसम्भाविताः, परावधारिताः, इन्द्रविश्रुताः, देवसंसेविताः, मुण्डसम्भाविताः, श्रमणोदाहृताः,[1] कुशलभूताः, क्षत्रियभूताः, चपलदलिताः, ब्राह्मणभूताः, अभिरूपकख्याताः, पण्डितसमाम्नाताः, विशिष्टवृष्टाः, भूतोत्सारिताः,[2] विधानभूतानि वचांसि सुभ्रुवाम्, कृपणोपकृताः।

श्रेण्यादिः कृतादिश्चाकृतिगणः। तेनातूलास्तूला इति सम्भावितास्तूलसम्भाविता इत्यादि सिद्धयति। सर्वैः कृतादिभिरविशेषेण श्रेण्यादयः समस्यन्ते। यत्र च सामर्थ्यं नावगम्यते तत्रेतिशब्दाध्याहारो वेदितव्यः॥१०,११,१२,१३॥ इति श्रेण्यादयः कृतादयश्च ॥

## [अथ श्रमणादिः]

'कुमारः श्रमणादिभिः' (अ० २।१।७०)। कुमारशब्दः समानाधिकरणैः श्रमणादिभिः समस्यत इति तदर्थः। तत्रापेक्षिताः श्रमणादय एकेन पद्येन संगृह्यन्ते।

१. इतोऽग्रे 'अध्यापक, वदान्य, पटु' इत्येते कृतसमासाः शब्दास्त्रुटिताः स्युः।
२. 'उत्सारित'शब्दो नोद्ध्रियते कृतादौ लेखकेन।

**श्रमणा प्रव्रजिता मृद्वध्यापकबन्धकीचपलनिपुणाः ।**
**पट्वभिरूपकपण्डितकुशला दासीह गर्भिणी ज्ञेया ॥१४॥**

इह गणे श्रमणा प्रव्रजिता बन्धकीत्यादीनां स्त्रीलिङ्गानां पाठोऽन्यथानुपपत्त्या 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (सि० कौ० २६७) इति परिभाषां ज्ञापयति । तेन कुमारी श्रमणा कुमारश्रमणा इति सामानाधिकरण्यम् । 'पुंवत् कर्मधारय' (अ० ६।३।४२) इति पुंवद्भावः । या तपश्चरणेनात्मानं श्रमयति सा श्रमणेत्युच्यते ।

प्रव्रजिता योगिनी । कुमारी प्रव्रजिता कुमारप्रव्रजिता । कुमारश्चासौ मृदुश्च कुमारमृदुः । कुमाराध्यापकः । कुमारी बन्धकी कुमारबन्धकी, बन्धकी पुंश्चली । कुमारचपलः, कुमारनिपुणः, कुमारपटुः, कुमाराभिरूपकः, कुमारपण्डितः, कुमारकुशलः । कुमारी दासी कुमारदासी । कुमारी गर्भिणी कुमारगर्भिणी ॥१४॥ इति श्रमणादिः ॥

**[अथ मयूरव्यंसकादिः]**

**'मयूरव्यंसकादयश्च'** (अ० २।१।७२) । मयूरव्यंसक इत्येवमादयस्तत्पुरुषा निपात्यन्त इति तदर्थः । तत्रापेक्षिता मयूरव्यंसकादिशब्दाः संगृह्यन्ते दशभिः पद्यैः ।

**मयूरव्यंसकश्छात्रव्यंसकोऽथ च गृह्ययुक् ।**
**हस्तः पादश्च लाङ्गूलं पुनर्दायेत्यृषौ भवेत् ॥१५॥**

मयूर इव व्यंसको रमणीयाकारदेहनेपथ्योपेतत्वाद् विगतांसको मयूरव्यंसकः । यो दोर्दण्डव्यापारसाध्यपुरुषकारविकलः स एवं प्रतिक्षिप्यते । यद्वा व्यंसयति वञ्चयतीति व्यंसको धूर्त्तः । गृहीतशिक्षो मयूरो यथान्यान् मयूरान् वञ्चयति तथा यः पुमान् ऋजुबुद्धीन् जनान् वञ्चयति स विप्रलम्भक एवमुच्यते ।

छात्रवद् व्यंसकश्छात्रव्यंसकः । छात्रो यथा लब्धभिक्षामात्रवृत्तिसन्तुष्टो निर्व्यापारतया कार्यतो व्यंसको बाहुव्यापारसाध्यपौरुषविहीनस्तद्वदन्योऽप्यलस एवमुच्यते ।

अथानन्तरं गृह्येति ल्यबन्तेनोत्तरपदेन युज्यत इति गृह्ययुक् । हस्तः पादो लाङ्गूलं चेत्यन्वयः । हस्तेन हस्ताभ्यां वा गृहीत्वेति हस्तगृह्य, पाद-

गृह्य, लाङ्गूलगृह्य । पुनर्दाय । पुनर्दत्त्वेत्यर्थः । इमे चत्वारस्तत्पुरुषाश्छन्दस्येव भवन्ति ॥१५॥

लोके तु मुण्डशब्दान्तः कम्बोजो यवनस्तथा ।
एहीडाद्या अन्यपदस्यार्थे तत्पुरुषा इह ॥१६॥

लोकेति ऋषावित्यस्यानुवृत्तिशङ्कानिरासाय । कम्बोज इव यवन इव च मुण्डः कम्बोजमुण्डो यवनमुण्डः । 'दीक्षितेन मुण्डितव्यम्' इति हि शास्त्रम् । कम्बोजा यवनाश्चादीक्षिता मुण्डा भवन्ति । एवं वृथामुण्डो विप्रादिरेवमुच्यते । 'इडा तु बुधयोषिति' (मे० डद्विके १) इति मेदिनीकोशाद् इडाशब्दश्चतुरङ्गनावचनः । 'एहि आगच्छ इडे चतुरवनिते' इति यत्राभिधीयते तद् 'एहीडम्' । विवाहादिकर्म शास्त्राध्यायादिको वा ग्रन्थप्रविभागः । अन्यपदार्थस्यान्यलिङ्गत्वेऽपि 'एहीडम्' क्लीबमेव, गणे तथैव निपातनात् शब्दशक्तिस्वभावाच्च ।

आद्यशब्दाद् एहियवम् इत्यादयो द्रष्टव्याः । 'एहियव' इति यत्र कर्मणि तद् 'एहियवम्' ॥१६॥

एह्यपेहिप्रेहिपूर्वा वाणिजा स्वागता तथा ।
द्वितीया च कटा सेयमाहराद्यापि सम्मता ॥१७॥

द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धः । एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा । अपेहि अपसर वाणिजेति यस्यां सा अपेहिवाणिजा । प्रेहि म्रियस्व वाणिजेति यस्यां सा प्रेहिवाणिजा । प्रोपसृष्ट एतिः प्रेत इत्यादौ मरणार्थको दृष्टः । यद्वात्रोदाहरणे स प्रकृष्टगत्यर्थको बोध्यः ।

एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । एवमपेहिस्वागता, प्रेहिस्वागता । एहिद्वितीयेति यस्यां क्रियायां सा एहिद्वितीया, अपेहिद्वितीया, प्रेहिद्वितीया । एहिकटेति यस्यां सा एहिकटा, अपेहिकटा, प्रेहिकटा ।

सेयं कटेतीयमानुपूर्वी आहराऽनय कटमिति यत्राभिधीयते सा आहरकटा ॥१७॥

प्रेहिप्रोहेतिशब्दाभ्यां कर्दमा विधमेत्यतः ।
चूडोद्धरेत्यतश्चापि चूडाथो आहरेत्यतः ॥१८॥

वसना वनिता सेना चेलालङ्कृतविचक्षणा ।
उद्धरावसृजा चाथोद्धरपूर्वोत्सृजा मता ॥१९॥

प्रेहि कर्दममुने पुरुषविशेष वेति यत्राभिधीयते सा प्रेहिकर्दमा । प्रोहस्व वितर्कय कर्दमेति सा प्रोहकर्दमा । निपातनाद् वृत्तौ स्वेत्यस्य लोपः । यद्वा पङ्कपर्यायकर्दममिति च यत्राभिधीयते सा प्रेहिकर्दमा, प्रोहकर्दमा ।

विधमेति तिङन्ताच्चूडाशब्दः । विधम चूडां शिखामिति यस्यामभिधीयते सा क्रिया विधमचूडा । एवम् उद्धरचूडा ।

आहर ॥१८॥ वसनं वनितां सेनां चेलं वेति यस्यामभिधीयते सा आहरवसना, आहरवनिता, आहरसेना, आहरचेला । कृतं छिन्द्धि हे विचक्षणेति यस्यामभिधीयते सा कृतविचक्षणा । उद्धर कोष्ठादवसृज देहीति यत्राभिधीयते सा उद्धरावसृजा । उद्धरोत्सृजा । अर्थः प्राग्वत् ॥१९॥

उद्धमाद् विधमाथैवमुत्पचाद् उत्पतात् क्रमात् ।
निपचा निपताथ स्याद् उच्चावचंनखप्रचम् ॥२०॥

उद्धमविधमा । उत्पच उत्कृष्टं पच, निपच निकृष्टं पचेति यस्यामभिधीयते सा उत्पचनिपचा, एवमुत्पतनिपता । उच्चं च तदवचं चोच्चावचमिति एके । उचितं चावचितं चोच्चावचमिति केचित् । उदक् चावाक् चोच्चावचमिति परे । तथा च 'प्रयुज्यते कविभिः—'भिन्नेषु रत्नकिरणैः किरणेष्विवेन्दोरुच्चावचैरुपगतेषु सहस्रसंख्याम्' इति । नखैः प्रचितं परिचितं लूनं वा नखप्रचम् ॥२०॥

निश्चप्रचं चाचपराचमकिञ्चन इत्यपि ।
आचोपचं चोच्चनीचं स्नात्वाभुक्त्वेत्यतः क्रमात् ॥
कालकः सुहितः पीत्वास्थिरकश्चेहपञ्चमी ॥२१॥

निश्चितं च प्रचितं च निश्चप्रचम् । आचितं च पराचितं चेति, अवाक् च परस्ताच्चेति वा विग्रहे आचपराचम् । नास्ति किञ्चनं यस्य सोऽकिञ्चनः । आचितं चोपचितं च आचोपचम् । उच्चं च नीचं चोच्चनीचम् । स्नात्वाऽपि कालकः कृष्णो मलिन इति यावत् स स्नात्वाकालकः । भुक्त्वासुहितः । पीत्वास्थिरकः । इह पञ्चमी यस्यां क्रियायामभिधीयते सा इहपञ्चमी ॥२१॥

इहद्वितीया प्रोष्यादिः पापीयान् पाकलेति तु ।
उत्पत्याद्यं निपत्याद्या रोहिण्यथ निषण्णतः ।
श्यामाथो एहिविघसा चापेहिप्रघसा तथा ॥२२॥

इहद्वितीया । अर्थः प्राग्वत् । अतिशयेन पापः पापीयान्, प्रोष्य प्रवासं कृत्वा पापीयान् प्रोष्यपापीयान् । यथा भट्टिकाव्ये सीतां प्रति रावणवाक्ये–'राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम्'(भट्टि० ५।९१) इति । उत्पत्य आकाशे गत्वा या पाकला पाण्डुरा सोत्पत्यपाकला । निपत्य भूमौ पतित्वा या रोहिणी लोहितवर्णा भवति सा निपत्यरोहिणी । निषण्णा सती या श्यामा सा निषण्णश्यामा । एहि विघसविशेषेण अद्धीति यत्राभिधीयते सा एहिविघसा । एवमपेहिप्रघसा । घस्लृ अदने इत्यस्यासार्वत्रिकेऽपि भ्वादिगणे परस्मैपदिषु पाठाल्लिङ्गात् परस्मैपदे शप्यस्य प्रयोगो निर्विशङ्क एवेति ध्येयम् ॥२२॥

कर्तर्यर्थे बहुलं समस्यते कर्मणा जहीत्येतत् ।
आख्यातेनाख्यातं सातत्येऽन्यक्रियापदस्यार्थे ॥२३॥

कर्मणा कर्मकारकवाचकपदेन जहीत्येतद् बहुलं समस्यते कर्तरि तद्वाक्यप्रयोक्तरि अर्थेऽभिधेये सति । जहि जोडमिति जहि स्तम्बमिति वा य आह स जहिजोड इति जहिस्तम्ब इति वोच्यते ।

आख्यातं तिङन्तमाख्यातेन तिङन्तेन समस्यत अन्यस्य क्रियापदस्यार्थे सातत्ये गम्यमाने । अश्नीत पिबतेति सततं यत्राभिधीयते सा अश्नीतपिबता । एवं खादतमोदता, पचतभृज्जता । अनेनैव सिद्धे उद्धरावसृजेत्यादीनां पूर्वत्र पाठोऽसातत्यार्थः ॥२३॥

अविहितलक्षणकस्तत्पुरुषोऽत्राकृतिगणे समुन्नेयः ॥२४॥

अविहितं न प्रणीतं लक्षणमनुशासनं यस्य स तथाविधः समासोऽत्र मयूरव्यंसकादावाकृतिगणे तत्पुरुषसंज्ञकः समुन्नेयः । तद्यथा—अहो पुरुषोऽहमित्यस्य भाव आहोपुरुषिका । अत्राहोपुरुषशब्दान् मनोज्ञादित्वाद् (अ० ५।१।१३३) वुञ् । अहं पूर्वमहं पूर्वमिति यस्यामभिधीयते साऽहम्पूर्विका । अहं शक्तोऽहं शक्त इति यत्राभिधीयते सा क्रिया अहमहमिका । या चासौ ऋच्छा च यदृच्छा । चिदेव चिन्मात्रम् । अन्यो राजा राजान्तरम् । दृगेवाब्जं दृग-

ब्जम् । गुण इति बुद्धिः गुणबुद्धिः । नास्ति कुतोऽपि भयं यस्य सोऽकुतोभय इत्यादि ।

मयूरव्यंसकादयश्चेति चकारोऽवधारणार्थं एषां समासासान्तरे प्रवेशं वारयति । तेन परमो मयूरव्यंसक इति वाक्यमेवावतिष्ठते ॥२४॥ इति **मयूरव्यंसकादिः** ॥

## [अथ याजकादिः]

**'याजकादिभिश्च'** (अ० २।२।९) । **'तृजकाभ्यां कर्तरि'** (अ० २।२।१५) इति निषेधे प्राप्ते प्रतिप्रसवोऽयम् । याजकेत्येवमादिभिः समर्थैः सुबन्तैः षष्ठ्यन्तं समस्यते स तत्पुरुष इति तदर्थः । तत्रापेक्षिता याजकादयः संगृह्यन्ते सार्धश्लोकेन ।

**याजकः पूजको भर्त्ता स्नापकः परिषेचकः ।**
**उत्साहकाध्यापकावुद्वर्त्तकः परिचारकः ॥**
**गणकान्तौ पत्तिरथौ होतैते याजकादयः ॥२५॥**

ब्राह्मणस्य याजको ब्राह्मणयाजकः । देवानां पूजको देवपूजकः । एवं भूभर्त्ता, राजस्नापकः, वृक्षपरिषेचकः, सैनिकोत्साहकः, राजन्याध्यापकः, शरीरोद्वर्त्तकः, नृपपरिचारकः, पक्षिगणकः, रथगणकः । ब्राह्मणस्य होता ब्राह्मणहोता ।

अथ कथं 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह' इति 'कुलदीपक एष पूरुष' इत्यादि च । शेषषष्ठ्या समास इति कैयटोपाध्यायाः । 'तृजकाभ्यां' (अ० २।२।१५) इति कर्तृषष्ठ्या प्राप्तस्य समासस्य निषेधकमिति तदाशयः ॥२५॥ इति **याजकादिः** ॥

## [अथ राजदन्तादिः]

**'राजदन्तादिषु परम्'** (अ० २।२।३१) । एषु पूर्वप्रयोगार्हं परं योज्यमिति तदर्थः ।

**राजदन्तोऽग्रेवणं च शूद्रार्यं लिप्तवासितम् ।**
**अर्पितोतमवक्लिन्नपक्वं भृष्टविलुञ्चितम् ॥२६॥**

दन्तानां राजा राजदन्तः । मुखे दृश्यमानं प्रमुखं दन्तद्वयम् । षष्ठीसमासे षष्ठ्यन्तमुपसर्जनत्वात् पूर्वप्रयोगार्हम् । यदा तु राजा चासौ दन्तश्चेति विग्रहस्तदा नासौ नियमः ।

वनस्याग्रे अग्रेवणम् । निपातनात् सप्तम्या अलुग् वननकारस्य णत्वं च । अर्यश्च शूद्रश्च शूद्रार्यम् । अर्यशब्दो वैश्यपर्याय इत्यभ्यर्हितत्वाद् अजाद्यदन्तत्वाद्वा पूर्वनिपातार्हः । आदौ वासितं पश्चाल्लिप्तं लिप्तवासितम् । 'पूर्वकालैक०'(अ० २।१।४९) इत्यादिना कर्मधारयः । तत्र वासितशब्दः पूर्वकालार्थकत्वात् पूर्वनिपातार्हः । एवमग्रेऽपि पूर्वमुतम् आतानवितानीकृतं पश्चादर्पितम् अर्पितोतम् । यथा ज्योत्स्नापटे तुहिनदीधितिनाऽर्पितोते द्यौरास नग्नमुषितेव हृतेऽरुणेन । पूर्वं पक्वं पश्चादवक्लिन्नमार्द्रं तदवक्लिन्नपक्वम् । भृष्टविलुञ्चितम् । पूर्वं विलुञ्चितं वितुषीकृतं पश्चाद् भृष्टं केवलवह्निना पक्वमित्यर्थः ॥२६॥

दृषदुपलं नग्नमुषित उलूखलान्मुसलमर्थशब्दौ च ।
सिक्तात् संसृष्टं परमर्थस्तु परोऽत्र शब्दकामाभ्याम् ॥२७॥

दृषच्चोपलं च दृषदुपलम् । अजाद्यदन्तत्वाद् उपलशब्दः पूर्वनिपातार्हः । पूर्वमुषितः पश्चान्नग्नो नग्नमुषितः । उलूखलं च मुसलं चोलूखलमुसले । अल्पाच्तरत्वान्मुसलशब्दः पूर्वनिपातार्हः । पूर्वं संसृष्टं पश्चात् सिक्तं सिक्तसंसृष्टम् । अर्थश्च शब्दश्च अर्थशब्दौ शब्दार्थौ । कामश्चार्थश्च कामार्थौ ।

उत्तरश्लोके धर्मार्थौ, अर्थधर्मौ अर्थकामौ च वक्ष्यति । एतेष्वनियतः पूर्वनिपातः ॥२७॥

चित्ररथाद्वाल्हीकोऽथोप्ताद् गाढं च तण्डुलात् किण्वम् ।
धर्मार्थावन्त्यश्मकमर्थाद् धर्मश्च कामश्च ॥२८॥

चित्ररथश्च वाल्हीकश्च चित्ररथवाल्हीकौ राजानौ । अत्र वाल्हीकोऽल्पाच्तरः । पूर्वं गाढमालोडितं हलेन पश्चादुप्तं क्षेत्रम् उप्तगाढम् । यथा—'व्योमोप्तगाढमिव भानुमरीचिसस्यैः ।'

तण्डुलाश्च किण्वानि च तण्डुलकिण्वम् । किण्वशब्दो मद्यबीजे वर्तते स चाल्पाच्तरः । धर्मार्थौ चावन्त्यश्मकं चेति समाहारद्वन्द्वः, तेन शब्दद्वयसंग्रहः । एवमर्थाद् धर्मश्च कामश्चेति वाक्येनापि । अवन्तयश्च अश्मकाश्च जनपदा अवन्त्यश्मकम् । अजाद्यदन्तत्वादश्मकशब्दः पूर्वनिपातार्हः । धर्मार्थावित्यादि तु प्राग् व्याख्यातम् । 'धर्मादिष्वनियमः' (सि० कौ० १२९४) इति दर्शयितुं गणे उभयविधाः शब्दाः पठ्यन्ते ॥२८॥

विष्वक्सेनार्जुनावक्षिभ्रुवं दारगवं तथा ।
गोपालधानीपूलासम् आरद्वायनिबान्धकी ॥२९॥

विश्वक्सेनार्जुनौ। अजाद्यदन्तत्वादर्जुनः पूर्वनिपातार्हः। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। प्राण्यङ्गत्वान्नित्यः समाहारद्वन्द्वः। अल्पाच्तरत्वाद् भ्रूशब्दः पूर्वनिपातार्हः। 'अचतुर'(अ० ५।४।७७) इत्यादिना समासान्तोऽच्-प्रत्ययः। दाराश्च गावश्च दारगवम्। प्रक्रिया प्राग्वत्। गोपालनामा कश्चिद् राजा स धीयतेऽत्रेति गोपालधानी नगरविशेषः स्थानविशेषो वा। पूला बद्धास्तृणादिसमुच्चया अस्यन्ते क्षिप्यन्तेऽत्रेति पूलासो ग्रामविशेषः। द्वयोः समाहारद्वन्द्वे गोपालधानीपूलासम्। पूलासशब्दोऽल्पाच्तरः। क्वचिद् गोपालधानपूलासमिति पठ्यते। तत्रापि स एवार्थः। आरटतीत्यारटो नाम कश्चित्, तस्यापत्यमारट्टायनिः। तिकादित्वात् (अ० ४।१।१५४) फिञ्। बन्धकस्यापत्यं बान्धकिः। 'अत इञ्'(अ० ४।१।९५)। द्वयोर्द्वन्द्वे आरट्टायनि-बान्धकी। क्वचित् पुस्तके आरट्टायनिबान्धनी इति पाठः। तत्र बन्धनो नाम कश्चित्, तस्यापत्यं बान्धनिरित्यूहनीयम् ॥२९॥

वैकारिमतं जायापती च भार्यापती च पुत्रपशू।
स्नातकराजानावथ सिञ्जास्थं गाजवाजं च ॥३०॥

विकारस्यापत्यं वैकारिः कश्चित्, कश्चिच्च मतः, अनयोः समाहार-द्वन्द्वः। वैकारिमतम्। मतशब्दोऽल्पाच्तरः। जाया च पतिश्च जायापती। एवं भार्यापती, पुत्रपशू। एषु पतिपशुशब्दौ घ्यन्तत्वात् पूर्वनिपातार्हौ। स्नातकराजानौ। राजन्शब्दोऽल्पाच्तरः। सिञ्जनं भूषणरवः सिञ्जा, आस्थानमास्था। सिञ्जा चास्था [च] सिञ्जास्थम्। अत्रानियमे प्राप्ते आस्थाशब्दस्यैव परनिपातः। वाजः पक्षः, गजः=गर्व एव गाजः। अनयोः समाहारद्वन्द्वो गाजवाजम्। यद्वा गाजं गजानां समूहो[1] वाजं वाजिसमूहः ॥३०॥

पूलासकुरण्डं च स्थलपूलासं च चित्रया स्वातिः।
पुत्रपती अथ जम्पतिदम्पतिशब्दौ तथा निपात्येते॥३१॥

पूलासकुरण्डम्। पूलासः कुरण्डश्च, ग्रामविशेषः। स्थलपूलासम्। स्थलं स्थानविशेषो ग्रामविशेषो वा। चित्रा च स्वातिश्च चित्रास्वाती। स्वातिशब्दो घिसंज्ञः पूर्वनिपातार्हः। एवमुत्तरेषु त्रिषु बोध्यम्। गणे निपातनाज् जायाशब्दस्य जम्भावो दम्भावश्च ॥३१॥

---

१. अयं पाठश्चिन्त्यः। 'गजसहाभ्यां चेति वक्तव्यम्' (सि० कौ० १७६९) इत्युपसंख्यानाद् 'गजता' इति भाव्यम्। अथवा निपातनादेवात्राण् प्रत्ययो द्रष्टव्यः।

गुणवृद्धी वृद्धिगुणौ केशश्मश्रू तथैव च ।
अन्तादी सर्पिर्मधुनी आद्यन्तौ मधुसर्पिषी ॥
शिरोजानू शीरबीजमित्याद्या अत्र कीर्तिताः ॥३२॥

गुणवृद्ध्यादौ धर्मार्थादिवदनियमः । शिरोजान्विति पृथक्पदं समाहारद्वन्द्वः । स्पष्टमन्यत् ॥३२॥ इति राजदन्तादिः ॥

[अथ आहिताग्न्यादिः]

'वाहिताग्न्यादिषु' (अ० २।२।३७) । आहिताग्नीत्येवमादिषु निष्ठान्तं वा पूर्वं प्रयोज्यमिति तदर्थः । तत्रापेक्षिता आहिताग्न्यादयः शब्दाः सार्धपद्येन संगृह्यन्ते ।

आहिताग्निर्जातपुत्रो जातश्मश्रुरथो घृतात् ।
तैलान्मद्याच्च पीतोऽथ प्रगतार्थोढभार्यकौ ॥
गडुकण्ठप्रभृतयोऽप्यत्राकृतिगणे स्मृताः ॥३३॥

आहिताग्नयो येन स आहिताग्निः, अग्न्याहितः । जातः पुत्रो यस्य स जातपुत्रः, पुत्रजातः । एवं जातश्मश्रुः, श्मश्रुजातः । पीत घृतं येन स घृतपीतः, पीतघृतः । एवं तैलपीतः, पीततैलः, मद्यपीतः, पीतमद्यः । प्रगतोऽर्थोऽस्मात् स प्रगतार्थः, अर्थप्रगतः । ऊढा भार्या येन स ऊढभार्यः, भार्योढः ।

आकृतिगणोऽयम् । तेनोद्यतासिः, अस्युद्यत इत्यादि ज्ञेयम् । गडुकण्ठप्रभृतयोऽप्यत्र गणे स्मृताः ।

अयं भावः—'सप्तमीविशेषणे बहुव्रीहौ, निष्ठा' (अ० २।२।३५,३६) इति सूत्रद्वयबोधितस्य पूर्वनिपातनियमस्य साधारणेन विकल्पः प्रकृतसूत्रेण विधीयते । तेन प्रियगुडः, गुडप्रियः । गडुः कण्ठे यस्य स गडुकण्ठः, कण्ठगडुरित्यादि सिद्ध्यति ।

अस्याकृतिगणत्वेऽपि न यथेष्टं प्रयोगाः कार्याः, किन्तु शिष्टेष्टप्रयोगानुसारेणैव । तेन मौलाविन्दुर्यस्य स मौलीन्दुः । एवं शशिशेखरः, दण्डपाणिः, पाशहस्तः, पद्मनाभः, कण्ठेकालः, वहेगडुरित्यादयो नियतपूर्वपदका एव वेदितव्याः ॥३३॥ इति आहिताग्न्यादिः ॥

[अथ कडारादिः]

'कडाराः कर्मधारये' (अ० २।२।३८) । कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्या इति तदर्थः । तत्रापेक्षिताः कडारादयः संगृह्यन्ते पद्यद्वयेन ।

**कडारः पिङ्गलः पिङ्गः खलतिर्गौरभिक्षुकौ ।**
**काणः खञ्जः खोडवृद्धौ गडुलः कुण्टबर्बरौ ॥३४॥**

कडारश्चासौ जैमिनिः कडारजैमिनिः, जैमिनिकडारः । एवं पिङ्गलमाण्डव्यः माण्डव्यपिङ्गलः, पिङ्गगार्ग्यः गार्ग्यपिङ्गः । खलतिर्निष्केशशिराः । स चासौ बाभ्रव्यश्च खलतिबाभ्रव्यो बाभ्रव्यखलतिः, गौरगौतमः गौतमगौरः, भिक्षुकदाक्षिः दाक्षिभिक्षुकः, काणद्रोणः द्रोणकाणः, खञ्जवात्स्यः वात्स्यखञ्जः, खोडकडोहः कडोहखोडः, वृद्धमनुः मनुवृद्धः । गडुलगालवः गालवगडुलः, कुण्टकाश्यपः काश्यपकुण्टः । बर्बरश्चासौ भौरिकिश्च बर्बरभौरिकिः, भौरिकिबर्बरः ॥३४॥

**तनुर्जडश्च मठरो बठरो बधिरस्तथा ।**
**कडारादिगणे शब्दानेतानाहुर्मनीषिणः ॥३५॥**

तनुतृणबिन्दुः, तृणबिन्दुतनुः । तनुरत्र कृशपर्यायः । जडजाबालिः जाबालिजडः, मठरमाणवः माणवमठरः, बधिरवार्द्धकिः वार्द्धकिबधिरः ।

कर्मधारय इत्युक्तेः कडारो जैमिनिर्यस्मिंस्तत् कडारजैमिनिकं गृहमित्यादिबहुव्रीहौ कडारादेर्विशेषणत्वात् पूर्वनिपात एव ॥३५॥ इति कडारादिः ॥

## [अथ गवाश्वादिः]

'गवाश्वप्रभृतीनि च' (अ० २।४।११) । एतानि समाहारद्वन्द्वतामापन्नानि यथैवोच्चारितानि तथैव साधूनीति तदर्थः । एतानि कतीत्यपेक्षायां संगृह्यन्ते पद्यचतुष्टयेन ।

**गवाश्वाजाविके कुब्जवामनं च गवाविकम् ।**
**श्वचाण्डालं दर्भशरं स्त्रीकुमारं[1] तृणोपलम् ॥३६॥**

गौश्चाश्वश्च गवाश्वम् । अजश्चाविकश्चेति, अजा चाविका चेति वा विग्रहे अजाविकम् । अजश्छागोऽविस्तु मेषः । अविरेवाविकः स्मृतः[2] । तृणं चोपलश्च तृणोपलम् । उपलस्तृणजातिविशेषः । स्पष्टमन्यत् ॥३६॥

---

१. 'कुब्ज······कुमारम्' इत्ययं पाठो व्याख्यायां नास्ति । त्रुटितः सम्भाव्यते ।

२. द्र०—'तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन ।' (महा० ४।१।८८) ।

दासीदासगवैडकदासीमाणवकपुत्रपौत्राणि ।
कुब्जकिरातोष्ट्रखरे मूत्रपुरीषं यकृन्मेदः ॥३७॥

दासी च दासं च दासीदासम् । अत्र पुमान् स्त्रिया (अ० १।२।६७) इत्येकशेषो न । गावश्चैडकाश्च गवैडकम् । एवं दासीमाणवकम्, पुत्रपौत्रम् । कुब्जश्च किरातश्च कुब्जकिरातम्, उष्ट्रख म्, [मूत्रपुरीषम्] । यकृच्च मेदश्च यकृन्मेदः ॥३७॥

शाटीपट्टिकशाटीप्रच्छदतृणकाष्ठमुष्ट्रशशकं च ।
मूत्रशकृद् भागवतीभागवतमथो कुटीकुटं ज्ञेयम् ॥३८॥

शाटी च पट्टिका च शाटीपट्टिकम् । शाटी च प्रच्छदश्च शाटीप्रच्छदम् । तृणं च काष्ठं च तृणकाष्ठम् । द्वन्द्वत्रयस्य समाहारद्वन्द्वः । उष्ट्रश्च शशकश्च उष्ट्रशशकम् । मूत्रं च शकृच्च मूत्रशकृत् । भगवत्या इयं भागवती, अयं भागवतः । द्वयोर्द्वन्द्वे भागवतीभागवतम् । अत्र 'पुमान् स्त्रिया'(अ० १।२।६७) इत्येकशेषो निपातनाद् वार्यते । एव कुटीकुटम् इत्यत्रापि । कुटी कुम्भदासी, कुटः कुम्भः । यद्वा कुटी पर्णशाला, कुटो गृहम् ॥३८॥

अर्जुनशिरीषमर्जुनपुरुषं दर्भादि पूतिकशशं च ।
कथितं च मांसशोणितमत्र गणे शब्दतत्त्वज्ञैः ॥३९॥

अर्जुनश्च शिरीषं चार्जुनशिरीषम् । द्वावपि वृक्षविशेषवाचिनौ । अर्जुनः पार्थः, पुरुषो वासुदेवोऽर्जुनपुरुषम् । यद्वा अर्जुनः सप्तच्छदः, पुरुषः पुन्नागः । दर्भश्च पूतिका च दर्भपूतिकम् । पूतिका वनौषधिविशेषो या सोमवल्लीप्रतिनिधित्वेनोपादीयते । दर्भाश्च शशाश्च दर्भशशम् । यदा दर्भाङ्कुरभक्षणाय शशाश्चरन्ति तदैषां वने सहावस्थानविवक्षयैवं प्रयुज्यते कविभिः । यद्वा शशो लोध्रपादपः । मांसं च शोणितं च मांसशोणितम् ॥३९॥ इति **गवाश्वादिः** ॥

**[अथ दधिपयआदिः]**

न दधिपयआदीनि' (अ० २।४।१४)। एतानि नैकवद् भवन्तीति तदर्थः । नैषां समाहारद्वन्द्वो भवतीति यावत् । तान्येतानि संगृह्यन्ते पद्यत्रयेण ।

दधिपयसी ऋक्सामे वाङ्मनसे आदिपूर्वमवसानम् ।
श्रद्धामेधे सर्पिर्मधुनी मधुसर्पिषी चैव ॥४०॥

दधि च पयश्च दधिपयसी। ऋक् च साम च ऋक्सामे। वाक् च मनश्च वाङ्मनसे। 'अचतुर०'(अ० ५।४।७७)इत्यादिनोभयत्र समासान्तोऽच्प्रत्ययः। आदिशब्दः पूर्वो यस्मात् तथाविधमादिपूर्वमवसानमवसान इति शब्दः। आदिश्चावसानं चाद्यवसाने। अन्यदतिरोहितम् ॥४०॥

**दीक्षामेधाश्रुतश्रद्धाऽध्ययनेभ्यः परन्तपः।**
**ब्रह्मप्रजापती इध्मावर्हिषी शिवकेशवौ ॥४१॥**

दीक्षादिभ्यः परं तपस्तपः शब्द इत्यर्थः। दीक्षा च तपश्च दीक्षातपसी। एवं मेधातपसी, श्रुततपसी, श्रद्धातपसी, अध्ययनतपसी। ब्रह्मा च प्रजापतिश्च ब्रह्मप्रजापती। इध्मं च बर्हिश्च इध्माबर्हिषी। निपातनात् पूर्वपदान्तस्य दीर्घः। शिवश्च केशवश्च शिवकेशवौ ॥४१॥

**प्रवर्ग्योपसदौ स्कन्दविशाखौ किं च कौशिकः।**
**परिव्राजकपूर्वोऽत्रोलूखलान् मुसलं परम् ॥४२॥**

परिव्राजकशब्दः पूर्वो यस्मात् तथाविधः कौशिकः। एवं च परिव्राजकश्च कौशिकश्च परिव्राजककौशिकौ। स्पष्टमन्यत्।

आकृतिगणोऽयम् इति बहुसम्मतम्। तेन येषामितरेतरयोग एव द्वन्द्वो लोके वेदे वा दृश्यते तेषामिह पाठोऽनुसन्धेयः। तथाहि—सूर्याचन्द्रमसौ, सौमरुद्रौ, नारदपर्वतौ, इन्द्राबृहस्पती, मित्रावरुणौ, रामलक्ष्मणावित्यादि ॥४२॥ इति **दधिपयआदिः** ॥

## [अथ अर्द्धर्चादिः]

'अर्द्धर्चाः पुंसि च'(अ० २।४।३१)। बहुवचननिर्देशाद् आद्यर्थावगतिः। अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च भवन्तीति तदर्थः। तत्रापेक्षिता अर्द्धर्चादयः संगृह्यन्त द्वादशभिः पद्यैः।

**अर्द्धर्चध्वजकुञ्जशीधुमधवो वर्चस्ककूर्चाढकाः**
**पङ्कानीकपिनाकनिष्ककपटाष्टङ्कः किरीटः कुटः।**
**पद्मप्रोथपिधानदाडिमहिमद्वीपान्धकारा मठः**
**शंखद्यूतकषायगोमयगृहाः कार्षापणाष्टापदौ ॥४३॥**

अर्द्धश्चासौ ऋक् चार्द्धर्चः, अर्द्धर्चम्। यत्तु ऋचोऽर्द्धमिति विग्रहं केचि-

दूचुस्तन्न युक्तम् । चतुर्विंशत्याद्यक्षरगायत्र्याद्यृङ्मन्त्रेषु समाक्षरयोः पूर्वोत्तरार्द्धयोरभावेऽपि तत्र षोडशाक्षरादिरूपेऽवयवविशेषे सर्वसम्मतार्द्धर्चव्यवहारेण विरुद्धत्वात्, 'अर्द्धं नपुंसकम्' (अ० २।२।२) इति सूत्रेण समांशवाच्यर्द्धशब्दस्यैवैकदेशिसमासविषयतायाः प्रतिपादनात्, 'भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके' (अमर० का० १, व० ३, श्लो० १७) इत्यनुशासनेन समांशवाचिन एवार्द्धशब्दस्य नपुंसकत्वाभिधानाच्च ।

नन्ववयवावयविनोस्तादात्म्याभावात् कथं विशेषणसमास इति चेदत्रोच्यते—अवयवेऽवयवित्वमारोप्य सामानाधिकरण्यमुपपादनीयमिति । यथा अग्रमात्रेऽवयवे अग्रहस्त इति । एवं च 'अर्द्धं नपुंसकम्'(अ० २।२।२) इत्यस्य भाष्योक्तप्रत्याख्यानेनापि न विरोध इति दिक् ।

ध्वजः पताका । कुब्जो वनखण्डो गजदन्तश्च । शेते हिताहितप्रतिपत्तिविषये मुह्यत्यनेनेति शीधु मद्यम् । मधु द्राक्षादिमद्यम् । वर्चस्कं शकृत् । कूर्चो दीर्घश्मश्रुः । आढकं मानविशेषः । पङ्कः कर्दमः । आनीकं सेना । पिनाकं त्र्यम्बकं धनुः । निष्क आभरणं सुवर्णमानविशेषश्च, 'निष्ककण्ठचः सुवासः, निष्कं सुवर्णाश्चत्वारः' इत्युभयत्र दर्शनात् ।

कपटश्छलम् । टङ्कः पाषाणच्छेदनः । [किरीटं मुकुटम् ।] कुटो गृहं घटश्च । पद्मः कमलम् । यथा—

'रवितप्तो गजः पद्मांस्तद्गृह्यान् बाधितुं ध्रुवम् ।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥'
(कुव० ४७)

निधिवचनः पद्मशब्दस्तु नार्द्धर्चादिर्नियतपुल्लिङ्गत्वात् ।

प्रोथोऽश्वादीनां नासा । पिधानः संवरणम् । दाडिमः फलविशेषश्च । हन्ति हिनस्ति वा पद्मकुलमिति हिमस्तुहिनम् । द्विर्गता आपो यस्मिन्निति द्वीपमन्तरीपः । अन्धं करोतीत्यन्धकारो ध्वान्तम् । मठश्छात्रादिनिलयः । शङ्खः कम्बु । निधिवाची तु पुंसि नियत इति नार्द्धर्चादिः । द्यूतो दुरोदरम् । कषायस्तु वराख्यो रसः, रागविशेषः, निर्यासविशेषश्च । गोमयो गोर्विकारः शकृल्लक्षणः । गृहं सदनम् । कार्षापणं हिरण्यमानविशेषः । अष्टसु लोहेषु पदं यस्येत्यष्टापदं सुवर्णम् ॥४३॥

शिखिरतिमिरवज्राः पुस्तबुस्तोपवासा-
श्चमसदिवसकंसा वारवाणं सुवर्णम् ।

समरदरविहारा भूषणेष्वासशुष्का
नखनखरचपालाः कर्म धर्मो विशालः ॥४४॥

शिखरोऽद्रिशृङ्गं द्रुमाङ्गं च। तिमिरोऽन्धकारोऽक्षिरोगविशेषश्च। वज्रः शक्रशस्त्रं हीरकश्च। पुस्तः पुस्तकं लेख्यशिल्पक्रिया च। बुस्तं मांसशष्कुली। उपवासोऽनशनम्। चमसो यज्ञपात्रविशेषः। दिवसो दिनम्। कंसो मानविशेषस्तैजसद्रव्यं च। वारं छादकं वाणमस्येति वारवाणो गजप्रावरणवर्णकम्बलः। सुवर्णं हेम। समरो रणः। दरः शङ्खः। विहारः क्रीडा, यज्ञभूमिका भिक्षुस्थानं च। भूषणमलङ्कारः। इषवोऽस्यन्ते क्षिप्यन्तेऽनेनेति इष्वासश्चापः। शुष्कं निर्जलप्रदेशः। नखः पाणिजः। नखरो नखं नखाग्रं वा। चषालो यज्ञाङ्गम्। कर्म क्रिया कारकप्रभेदश्च। वर्मेति केचित् पठन्ति, तस्य कवचमर्थः।

धर्मः पुण्यम्, यमः, न्यायः, स्वभाव आचारश्च। तत्र पुण्यवाची धर्मशब्दोऽर्द्धर्चादिः। तथा च श्रूयते—'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' (यजु० ३१।१६) इति। अन्यार्थवाची तु नियतपुल्लिङ्ग इति ज्ञेयम्। विशालो विशङ्कटम्[1] ॥४४॥

खण्डोद्योगविडङ्गशृङ्गसरकाः पुञ्जव्रजौ मोदकः
शाको मस्तकमण्डदण्डकमुखा मूलं फलं तण्डुलाः।
कर्पासच्छलपार्श्वयोधपटहा, वृत्तापराह्णस्तनाः
शूलस्थूलशरावमूलकबला राष्ट्रं शरीरं पुरम् ॥४५॥

खण्डः शकलमिक्षुविकारश्च। उद्योग उद्यमः। विडङ्गः कृमिघ्नापरपर्याय ओषधिविशेषः। अभिज्ञवाची तु विशेष्यनिघ्नस्त्रिषु लिङ्गेषु वर्त्तते। शृङ्गः शिखरम्, विषाणम्, चिह्नं जलक्रीडायन्त्रं च। सरकः शीधुपात्रं मद्यं च। पुञ्जव्रजौ समूहपर्यायौ। मोदको लड्डुकापरपर्यायो भक्ष्यविशेषः। शाकः कूष्माण्डवृन्तकादिफलपत्रपुष्पकन्दमूलादिलक्षणो भक्ष्यविशेषः। मस्तको मूर्द्धा। मण्डयतीति मण्डोऽलङ्कारो यूषश्च। दण्डकश्छन्दोविशेषः। मुखं वदनं प्रारम्भश्च। मूलं प्रतिष्ठा। फलं कुसुमादिभवं प्रयोजनं च। तण्डुल ओदनप्रकृतिः प्रसिद्धः।

१. 'विशकण्ठम्' इति हस्तलेखे।

कर्पासं मूलकारणम् । छलं कपटम् । पार्श्वं कक्षयोरधोभागः । योधः सुभटो यथा—

'योधानि योधैर्बध्यन्ते क्रोधान्धैः सिन्धुरैर्गजाः ।
न गण्यते स्वपक्षोऽपि धिक्क्रोधमसमञ्जसम् ॥'

पटहो डिण्डिमः । वृत्तो वर्त्तुलोऽतीतोऽधीतश्च । अत्र वर्त्तुलवाचो पुन्नपुंसकः । अन्यार्थस्तु विशेष्यलिङ्गकः । अपराह्णश्चतुर्थाविभक्तदिनचतुर्थभागः । स्तनः पयोधरः । शूल आयुधविशेषो रोगविशेषश्च । स्थूलं कृशप्रत्यनीकं दृढश्च । शरावः पात्रविशेषः । मूलकः शाकविशेषः । बलं शक्तिः सैन्यं च । राष्ट्रं राज्यमुपद्रवश्च । शरीरः कायः । पुरं नगरम् ॥४५॥

सखलहलमृणाला मङ्गलाकाशनाला
मुसलकलशशालाः पात्रपात्रीकपूर्वाः ।
रणचरणविटङ्कद्रोणवर्णा विमान-
श्चषकपिटकवप्रा वस्त्रवल्मीकवर्षाः ॥४६॥

खलो धान्यावापस्थानम् । हलं सीरम् । मृणालं बिसम् । मङ्गलं प्रशस्तम् । आकाशं नभः । नालो दण्डः पुष्करादेः । मुसलमायुधविशेषो गृहोपकरणं च । कलशो घटः । अयं स्त्रियामपि दृश्यते । शालो वृक्षविशेषः । पात्रं भाजनम् । पात्रीकं यज्ञोपकरणम् । पूर्वशब्दः प्राक्प्रतिपादितेऽर्थे यथा—पूर्वं स्नातः पश्चादनुलिप्तः । अत्र सत्त्वां विवक्षायां पूर्वः स्नात इत्यपि भवति । दिक्कालयोगे तु विशेष्यनिघ्नः । यथा—पूर्वः पर्वतः, पूर्वा वापी, पूर्वं वनमित्यादि ।

रणः सङ्ग्रामः । चरणोऽङ्घ्रिः । विटङ्कः पक्षिपञ्जरः । द्रोणः परिमाणविशेषः । वर्णः स्वरव्यञ्जनलक्षणः पदावयवः, ब्राह्मणादिजातिचतुष्टयम्, शुक्लादिगुणो गजप्रावरणकम्बलश्च । विमानं नभो यानम् । चषको मद्यपात्रम् । पिटको मञ्जूषा । विस्फोटकवाची तु त्रिलिङ्गत्वान्नैतद् गुणानुगुणः । वप्रस्तटम्, प्राकारः, रेणुः क्षेत्रं च । वस्त्रं वसनम्, वल्मीको वामलूरो यः पिपीलिकानां दुर्गः । वर्षो वृष्टिर्वत्सरश्च ॥४६॥

दण्डकमण्डलुमण्डपताण्डवगाण्डीवकुण्डपा नीडः ।
खण्डलमण्डलमूषिककण्टककर्पटनटणसक्तुघृताः ॥४७॥

दण्डो यष्टिः । कमण्डलुः कटकम् । मण्डपो जनाश्रयः । ताण्डवं शुद्धान्तनृत्तं तृणविशेषश्च । गाण्डीवोऽर्जुनधनुः । कुण्डपः क्रतुभेदः । नीडः पक्षिसदनम् । खण्डलं खण्डः । मण्डलं बिम्बं भूभागविशेषश्च । मूषिक उन्दुरुः । कण्टको बब्बुलादिद्रुमाङ्गम्, क्षुद्रशत्रुः, मत्स्यादि कीकसश्च । कर्पटो जीर्णपटखण्डः । नटः कुशीलवः । ऋणम् अवश्यं देयम् । सक्तु भृष्टयवादिपिष्टम् । घृतं सर्पिः ॥४७॥

भवनारण्यविषाणप्रवालपुलिनानि शीलमुकुलौ च ।
तृणकुसुमकुमुदकुण्डलवसन्तदिनदैवतार्बुदक्षीरम् ॥४८॥

भवनमगारम् । अरण्यं विपिनम् । विषाणं शृङ्गम् । प्रवालो विद्रुमः किसलयश्च । पुलिनं सैकतम् । शीलं चरित्रम् । मुकुलः कुड्मलः । तृणं घासः । कुसुमं पुष्पम् । कुमुदं कुवलयम् । कुण्डलं कर्णवेष्टनम् । वसन्त ऋतुविशेषः । दिनमहः । दैवतं देवता । अर्बुदो मांसकीलो दश कोटयश्च । क्षीरं पयः ॥४८॥

लोहितलोहप्रतिसरलोमशशूर्पाङ्कुशाः शपथतीर्थौ ।
शूकक्षेमक्षेत्रा वल्कलवसुवालशकटदृढभूताः ॥४९॥

लोहितः शोणितम् । गुणवचनोऽयं पुंस्येव, गुणिवचनस्तु विशेष्यनिघ्नः । लोहोऽयःप्रभृति सर्वं तैजसं द्रव्यम् । प्रतिसरः कङ्कणम्, वाहिनी जघनं च । लोमशो लोमान्वितो मेषः कम्बलादिश्च । शूर्पं मानविशेषो धान्यशोधकं गृहोपकरणं च । अङ्कुशः सृणिः । शपथः सत्यङ्कारः । तीर्थं पुण्यस्थानम् । शूकं धान्यादेस्तूलम् । क्षेमं कुशलम् । क्षेत्रं सस्यप्रसूभूमिः, शरीरम्, कलत्रं सिद्धस्थानं च । वल्कलं तरुत्वक् । वसु धनम् । वालः केशः शिशुश्च । शकटं गोरथः । दृढः स्थूलो बलवांश्च । भूतः पिशाचः । अतीतवाची तु विशेष्यलिङ्गकः ॥४९॥

याननिधननिर्यासाः कवचकपित्थकपाटककुदानि ।
तोरणतोमरमञ्चकपञ्चकपिण्याकसाररजतानि ॥५०॥

यानो वाहनम् । निधनं मृत्युः । निर्यासो वृक्षादेर्निःस्पन्दः । कवचस्तनुत्रम् । कपित्थो वृक्षविशेषः । कपाटो द्वारपिधानकम् । ककुदः प्रधानकम्, राजचिह्नं शृङ्गं च । तोरणं वन्दनमाला । तोमर आयुधविशेषः । मञ्चकः

पर्यङ्कः। पञ्चको विस्तारः। 'पचि व्यक्तीकरणे' (धातु० १।१०५) इत्यस्माण्ण्वुल्। पिण्याकः तिलकल्कः, समधुसल्लकी धूपश्च। सारो बलं स्थिरांशश्च। रजतो रौप्यम् ॥५०॥

औषधकबन्धसैन्धवषष्टिकशतमानमानकर्षाश्च ।
निगडक्ष्वेडितजृम्भप्रग्रीवाश्रमतडागमाषाः स्युः ॥५१॥

औषधि भेषजम्। कबन्धो रुण्डः। सैन्धवो लवणः। अयं चाश्ववाची पुल्लिङ्गः सिन्धुभववस्तुवाची तु विशेष्यलिङ्गकः। यथा—सैन्धवो वाजी, सैन्धवः शङ्खः, शुक्तिः सैन्धवी, जलं सैन्धवम्। षष्टिको व्रीहिप्रभेदो यः षष्टिरात्रेण पच्यते। शतमानो रूप्यपलम्। तथा च स्मर्यते—

'द्वे कृष्णले रूप्यमाणो धरणं षोडशैव ते।
शतमानं तु दशभिर्धरणैः पलमेव च॥'

इति। मानं दर्पः। कर्षं पलचतुर्थांशः।

निगडः पादबन्धनम्। क्ष्वेडितो मुखध्वनिविशेषः। जृम्भो जृम्भणं मुखविकास इति यावत्। प्रग्रीवं वातायनम्। आश्रमो मुनिजनस्थानम्। तडागं सरः। माषः पञ्चगुञ्जात्मको मानविशेषो धान्यविशेषश्च ॥५१॥

कलहखलीनौ रेणुस्थाणू देहौदनोद्यानाः।
दाससहस्रौ पुङ्खः पुच्छश्चक्रश्च शीकरो मध्यः॥५२॥

कलहो युद्धकालः खङ्गकोशश्च। खलीनं हययन्त्रणम्। रेणुर्धूलिः। स्थाणुः कीलकः। देहः शरीरम्। ओदनो भक्तः। उद्यान आक्रीडकः। दासः सेवकः। सहस्रः संख्याविशेषः। पुङ्खः शरपुच्छम्। पुच्छो लाङ्गूलम्। चक्रो रथाङ्गम्। शीकरः सलिलबिन्दुः। मध्योऽन्तरमुदरं च ॥५२॥

सूत्रार्द्रहस्तकुट्टिमकुक्कुटबिम्बाम्बरास्तमालश्च ।
धनुरैरावतसङ्गमविटपपवित्रस्वरस्नेहाः ॥५३॥

सूत्रं तन्तुर्व्यवस्था च। आर्द्रः कन्दविशेषो यः शुष्कः सन् शुण्ठी भवति। हस्तः पाणिः करिकरश्च। कुट्टनेन निर्वृत्तः कुट्टिमो बद्धभूमिभागः। कुक्कुटस्ताम्रचूडः। बिम्बो मण्डलम्। अम्बर आकाशो वस्त्रं च। तमालस्तरुप्रभेदः। धनुः शरासनम्। ऐरावतो महेन्द्रगजः। सङ्गमो नद्यादिमेलनम्। विटपः स्कन्धादूर्ध्वं तरोः शाखा। पवित्रः पावनः कुशादिः। स्वरः षड्जमध्यमादिरुदात्तादिश्च। स्नेहः सौहार्दम् ॥५३॥

**कटककुतपकुणपफलककोशाः सौधोऽथ गूथयूथौ च ।**
**यौवनविषाणषण्डा ज्ञेया आकृतिगणेऽत्र बुधैः ॥५४॥**

कटकोऽद्रिनितम्बः करिदन्तमण्डनं च । कुतपो दिनस्याष्टमोंऽशो मुहूर्त्तः । कुणपः शरीरम् । फलकः खटकश्चित्रलेखनाधारः । कोशो धनसमुच्चयः, कुड्मलम्, खड्गपिधानकम्, शब्दादिसंग्रहः पेशी च । यद्यपि कोश इति षान्तममरसिंहोऽभिदधौ, तथापि मेदिन्यादिकोशेषु शान्तमध्येऽयं पठित इति द्विरूपताऽस्य ज्ञेया । सौधं सुधारम्, जितं धवलागारम् । गूथो विष्टा । यूथ. पशुसङ्घः । यौवनं तारुण्यं यूनां समूहश्च । विषाणः शृङ्गम् । खण्ड इक्षुविकारः शकलं च । [षण्डं कमलसमूहः ।]

अस्याकृतिगणत्वाद् वक्रहरिचन्दननूपुरमञ्जीरादयोऽप्यत्रैव ज्ञेयाः । वक्रं लपनम्, अनुष्टुप्छन्दःप्रभेदश्च । हरिचन्दनं सुरतरुः । नूपुरो मञ्जीरश्च पादभूषणम् ॥५४॥ इति अर्द्धर्चादिः ॥

## [अथ पैलादिः]

'पैलादिभ्यश्च' (अ० २।४।५९) । पैल इत्येवमादिभ्यः शब्देभ्यो युवप्रत्ययस्य लुग् भवतीति तदर्थः । तत्रापेक्षिताः पैलादयः संगृह्यन्ते पद्यद्वयेन ।

**पैलौदञ्ची राहवी रावणिश्च दैवस्थानी राणिराहःक्षिती च ।**
**औदाद् भृज्जिर्मैधिमज्जी च शुद्धिः सात्यङ्कामिः पैङ्गलोदायनिश्च॥५५॥**

पीलाया गोत्रापत्यं पैलः । 'पीलाया वा' (अ० ४।१।११८) इत्यण्, तस्माद् 'अणो द्व्यचः' (अ० ४।१।१५६) इति युवापत्ये फिञ् । तस्य लुक्, पैलः पिता पुत्रश्च । उदञ्चोऽपत्यमौदञ्चिः । बाह्वादित्वाद् (अ० ४।१।९६) इञ्, ततो युवापत्ये 'यञिञोश्च' (अ० ४।१।१०१) इति विहितस्य फको लुक्, औदञ्चिः पिता पुत्रश्च । राहोर्गोत्रापत्यं युवापत्यं वा राहविः पिता पुत्रो वा । प्रक्रिया प्राग्वत् । रावणस्य गोत्रापत्यं रावणिः । 'अत इञ्' (अ० ४।१।९५), ततो युवार्थे (अ० ४।१।१०१) फक्, तस्य लुक्, रावणिः पिता रावणिः पुत्रः । देवस्थानस्य गोत्रलक्षणं युवलक्षणं चापत्यं दैवस्थानिः पिता पुत्रश्च । [राणिः ।] रहसि क्षितो हिंसितो रहःक्षितः, तस्योभयविधमप्यपत्यं राहःक्षितिः ।

उदके भृज्जतीत्युदभृज्जः । मूलविभुजादित्वात् (सि० कौ० ३८९०) कः ।

तस्योभयविधमपत्यमौदभृज्जिः पिता पुत्रश्च । एवम् उदमेघादेरुभयविधमपत्यमौदमेघिः, औदमज्जिः, औदशुद्धिः । सत्ये कामोऽस्य सत्यं कामयत इति वा सत्यङ्कामः । तस्योभयविधमपत्यं सात्यङ्कामिः पिता पुत्रश्च । पिङ्गलोदायनस्योभयविधमपत्यं पैङ्गलोदायनिः ॥५५॥

**शालङ्किसात्यकी तद्राजाणन्तं तथौज्जिहानिश्च ।**
**औदुगाहमानिरौदनिभौलिम्यौदव्रजीति पैलादिः[1] ॥५६॥**

शालङ्कस्य सत्यकस्य चोभयविधमपत्यं शालङ्किः सात्यकिश्च पिता पुत्रश्च । अङ्गस्योभयविधमपत्यमाङ्गः पिता पुत्रश्च । 'द्व्यञ्मगध०' (अ० ४।१।१७०) इत्यादिना तद्राजसंज्ञकोऽण्, ततः 'अणो द्व्यचः' (अ० ४।१।१५६) इति फिञ्, तस्य लुक् । उज्जिहानस्यापत्यमुभयविधम् औज्जिहानिः ।

अत्र गणे पैलात् तद्राजाणन्ताच्चान्ये सर्वे इञन्ताः । तेभ्यः 'इञः प्राचाम्' (अ० २।४।६०) इत्येव सिद्धे 'पैलादिभ्यश्च' (अ० २।४।५९) इति लुग्विधानमप्रागर्थम् । तेन पैलादिभिन्नं यदुदीचां गोत्र ततो न युवप्रत्ययस्य लुक् । यथा—दाक्षिः पिता, दाक्षायणः पुत्रः ॥५६॥ इति [पैलादिः] ॥

[अथ तौल्वल्यादिः]

**'न तौल्वलिभ्यः'** (अ० २।४।६१) । तौल्वलीत्येवमादिभ्यः परस्य युवप्रत्ययस्य **'इञः प्राचाम्'** (अ० २।४।६०) इति सूत्रेण प्राप्तो लुङ् न भवतीति तदर्थः । तत्रापेक्षितास्तौल्वल्यादयः पद्यत्रयेण संगृह्यन्ते ।

**तौल्वलिधारणिपारणिपौष्पिरावणिवार्कलिदैवतिवैङ्कि-**
**नैवकिबैल्वकिवान्धकयश्च नैमिषि[2]वैरकिवैहतयश्च ॥५७॥**

तुल्वलो नाम कश्चिन् महर्षिस्तस्यापत्यं तौल्वलिः । **'अत इञ्'** (अ० ४।१।९५), ततो युवापत्ये **'यञिञोश्च'** (अ० ४।१।१०१) इति फक् । तस्य **'इञः प्राचाम्'** (२।४।६०) इत्यनेन प्राप्तो लुङ् **'न तौल्वलिभ्यः'** (२।४।६१) इत्यनेन निषिध्यते । तौल्वलिः पिता, तौल्वलायनः पुत्रः । धारणस्य गोत्रापत्यं धारणिः युवापत्यं धारणायनः । एवं पारणिः पिता, पारणायनः पुत्रः । पुष्पस्य पौष्पिः, पौष्पायणः । रवणस्य रावणी, रावणायनः । वृकलस्य वार्कलिः

---

१. श्लोकस्योत्तरार्द्धं व्याख्यायां नोपलभ्यते ।

२. 'बैल्वकि······नैमिषि' इति पाठो व्याख्यायां नोपलभ्यते ।

वार्कलायनः। दैवतस्य दैवतिः, दैवतायनः। विङ्कस्य गोत्रापत्यं वैङ्किः पिता, वैङ्कायनः पुत्रः।

नितकस्य गोत्रापत्यं नैवकिः। तस्यापत्यं नैवकायनः। वीरकस्य वैरकिः, वैरकायनः। विहृतस्य वैहृतिः, वैहृतायनः ॥५७॥

दैलीपिदैवयज्ञी पौष्करसाद्यानुती तथाऽहिंसिः।
चाफट्टकिदैवमती प्रादोहन्यासिनासिनैमिश्रिः ॥५८॥

दिलीपस्य दैलीपिः, दैलीपायनः। देवयज्ञस्य दैवयज्ञिः, दैवयज्ञायनः। पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्य गोत्रापत्यं पौष्करसादिः, युवापत्यं पौष्करसादायनः। अनुषतिकादित्वाद् (अ० ७।३।२०) उभयपदवृद्धिः। आसमन्ताद् नुतः स्नुत आनुतः, तस्य गोत्रापत्यमानुतिः, युवापत्यमानुतायनः। नास्ति हिंसा यस्य सोऽहिंसः, तस्य गोत्रापत्यमाहिंसिः, युवापत्यमाहिंसायनः।

चफट्टकशब्दोऽनुकरणम्, तदुच्चारणात् पुरुषोऽपि चफट्टकः। तस्यापत्यं चाफट्टकिः पिता, चाफट्टकायनः पुत्रः। देवमतस्यापत्यं दैवमतिः पिता, दैवमतायनः पुत्रः। प्रकृष्टं दोहनमस्य स प्रदोहनः। तस्यापत्यं प्रादोहनिः पिता, प्रादोहनायनः पुत्रः। असिरिव नासा यस्य सोऽसिनासः। तस्यापत्यमासिनासिः पिता, आसिनासायनः पुत्रः। निश्चयेन मिश्रो निमिश्रः। तस्यापत्यं नैमिश्रिः पिता, नैमिश्रायणः पुत्रः ॥५८॥

आनुरोहतिवैशीती आसुरिश्चासिबन्धकिः।
कारेणुपालिवैकर्णी प्राडाहत्यातुराहती ॥५९॥

उरसा हतस्ताडित उरोहतः, न उरोहतोऽनुरोहतः। तस्यापत्यमानुरोहतिः पिता, आनुरोहतायनः पुत्रः। विशीतस्य वैशीतिः, वैशीतायनः। असुरस्यासुरिः, आसुरायणः। बध्नातीति बन्धकः, असेर्बन्धकोऽसिबन्धकः। शेषशष्ठ्या समासः। तस्यापत्यमासिबन्धकिः पिता, आसिबन्धकायनः पुत्रः।

करेणुं गजीं पालयतीति करेणुपालः, तस्य कारेणुपालिः, कारेणुपालायनः। विशिष्टः कर्णोऽस्य विकर्णः। तस्य वैकर्णिः, वैकर्णायनः। पृच्छतीति प्राट्, स चासौ आहतश्च प्राडाहतः। तस्यापत्यं प्राडाहतिः पिता, प्राडाहतायनः पुत्रः। आतुरेणाहत आतुराहतः। तस्यापत्यमातुराहतिः पिता, आतुराहतायनः पुत्रः ॥५९॥ इति तौल्वल्यादिः ॥

[अथ यस्कादिः]

'यस्कादिभ्यो गोत्रे' (अ० २।४।६३) । पूर्वसूत्राद्[1] 'बहुषु तेनैवास्त्रियाम्' इत्यनुवर्तते । तथा च यस्क इत्येमादिभ्यो विहितस्य गोत्रप्रत्यस्य लुक् स्यात् तत्कृते बहुत्वे, न तु स्त्रियामिति तदर्थः । तत्रापेक्षिता यस्कादयः शब्दाः सगृह्यन्ते त्रिभिः पद्यैः ।

यस्कोत्कासभलन्दनाश्च खरपो जङ्घारथो मित्रयुः,
पर्णाटोपरिमेखलौ विषपुटः कर्णाढको मन्थकः ।
द्रुह्यो वर्षुकभण्डिलौ भडिलत्रिश्री चाजबस्तिर्बहि-
र्योगः पुष्करसच्च लह्यकेटुकौ रक्षोमुखो भण्डितः ॥६०॥

यच्छति निगृह्णाति पापमिति यस्क ऋषिः । तस्य गोत्रापत्यानि पुमांसो यस्काः । अत्र गोत्रप्रत्ययस्य शिवाद्यणो लुक्[2] । बहुत्वे इत्युक्ते र्यस्कस्य गोत्रापत्यं पुमान् यास्कः, यास्कौ । नात्र लुक् ।

तत्कृते इति किम् ? प्रियो यास्को येषां ते प्रिययास्काः । नात्रापत्यकृतं बहुत्वम् । अस्त्रियामित्येव--यस्कस्य गोत्रापत्यानि स्त्रियो यास्क्यः । गोत्रप्रत्ययस्येति किम् ? यास्काश्छात्राः ।

उत्कसतीत्युत्कासः । तस्यापत्यान्युत्कासाः । अत इञो (अ०४।१।९५) लुक् । भलन्दनस्य भलन्दनाः । शिवाद्यणः (अ० ४।१।११२) । खरान् पातीति खरपः, तस्य खरपाः । नडादिफकः (अ० ४।१।९९) । जङ्घे एव रथो यस्य स जङ्घारथः, तस्यापत्यानि जङ्घारथाः । अत इञो (अ० ४।१।९५) लुक् । मित्रयोरपत्यानि मित्रयवः, 'तस्यापत्यम्'(अ० ४।१।९२) इत्यौत्सर्गिकस्याणो लुक् ।

पर्णार्थमटतीति पर्णाटः, तस्य पर्णाटाः । उपरि ग्रीवायां मेखला यस्य स उपरिमेखलः, तस्योपरिमेखलाः । विषं पुटे ओष्ठयोर्यस्य तस्यापत्यानि विषपुटाः । कर्णस्याढकं यस्य स कर्णाढकः, तस्य कर्णाढकाः । मथ्नातीति मन्थकः, तस्यापत्यानि मन्थकाः । एभ्योऽत इञो (अ० ४।१।९५) लुक् ।

द्रुह्यस्यापत्यानि द्रुह्याः । शिवाद्यणः (अ० ४।१।११२) । वर्षतीत्येवं

---

१. 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (अ० २।४।६२) ।
२. 'शिवादिभ्योऽण्' (अ० ४।१।११२) इत्यनेन विहितस्याणो लुगिति भावः ।

शीलो वर्षुकः, तस्यापत्यानि वर्षुकाः । अत इञः(अ० ४।१।९५)। भण्डिलस्य भण्डिलाः, भडिलस्य भडिलाः। आभ्यामश्वादिफञः (अ० ४।१।११०)। विश्रेरपत्यानि विश्रयः, अजबस्तेरजबस्तयः। आभ्यां गृष्टयादिढञः (अ० ४।१।१३६)। बहिर्योगोऽस्य बहिर्योगः, तस्य बहिर्योगाः। अत इञः (अ० ४।१।९५)।

पुष्करसदोऽपत्यानि पुष्करसदः। बाह्वादीञः (अ० ४।१।९६)। लह्यस्य लह्याः। शिवाद्यणः (४।१।११२)। कटुकस्य कटुकाः। रक्षस इव मुखं यस्य स रक्षोमुखः, तस्यापत्यानि रक्षोमुखाः। आभ्यामत इञः (अ० ४।१।९५)। भण्डितस्य भण्डिताः। अश्वादिफञः (अ० ४।१।११०) ॥६०॥

**तृणकर्णायःस्थूणौ पिण्डीजङ्घः सदामत्तः।**
**कम्बलहारः पदकः कुद्रिश्च क्रोष्टुपादबकसक्थौ ॥६१॥**

तृणं कर्णो यस्य स तृणकर्णः,तस्यापत्यानि तृणकर्णाः। अयोमयी स्थूणा यस्यासावयःस्थूणः, तस्यापत्यान्ययःस्थूणाः। आभ्यां शिवाद्यणः (अ० ४।१।११२)। पिण्डीयुक्ते जङ्घे यस्य स पिण्डीजङ्घः, तस्य पिण्डीजङ्घाः। सदामत्तस्य सदामत्ताः। कम्बलं हरतीति कम्बलहारः, तस्य कम्बलहाराः। पदानि वेत्त्यधीते वा पदकः, तस्य पदकाः। एभ्योऽत इञः (अ० ४।१।९५)। कुद्रेरपत्यानि कुद्रयः। गृष्टयादिढञः (अ० ४।१।१३६)। क्रोष्टोरिव पादावस्य स क्रोष्टुपादः। गणपाठसामर्थ्यान्नात्र समासान्तः पादस्य लोपः। बकस्य सक्थिवत् सक्थिनी यस्य स बकसक्थः, तस्यापत्यानि बकसक्थाः। आभ्यामत इञो (अ० ४।१।९५) लुक् ॥६१॥

**क्रोष्टुमानः क्रोष्टुमायः शीर्षमायोऽत्र पठ्यते।**
**भडितश्चेति यस्कादिगण उक्तो मनीषिभिः ॥६२॥**

क्रोष्टोरिव मानो यस्य स क्रोष्टुमानः। क्रोष्टुं मिमीते क्रोष्टोरिव मायाऽस्येति वा क्रोष्टुमायः, तस्यापत्यानि क्रोष्टुमायाः। शीर्षं मिनातीति शीर्षमायः, तस्य शीर्षमायाः। एभ्योऽत इञः (अ० ४।१।९५)। भडितस्यापत्यानि भडिताः। अस्मादश्वादिफञो (अ० ४।१।११०) लुक्।

यत्त्वत्र गणरत्नमहोदधौ[1] अत्रेरपत्यानि अत्रयः। एवं भृगोर्भार्गवः, कुत्साः, वसिष्ठाः, गोतमाः, अङ्गिरस इत्युदाहृतं तत्तु 'अत्रिभृगुकुत्सवसिष्ठ-

१. द्र०—गण० पृ० ३०—३१।

गोतमाङ्गिरोभ्यश्च' (अ० २।४।६५) इति सूत्रेणैव सिद्धमिति नात्र गणे तेषां पाठः पाणिनीयव्याकरणानुगुण इति बोध्यम् ।।६२।। इति **यस्कादिः** ।।

## [अथ गोपवनादिः]

**'न गोपवनादिभ्यः'** (अ० २।४।६७)। गोपवनेत्येवमादिभ्यः शब्देभ्यो विहितस्य गोत्रप्रत्ययस्य लुग् न भवतीति तदर्थः। **'यञञोश्च'**(अ० २।४।६४) इत्यनेन प्राप्तो लुगनेन प्रतिषिद्धयते। [तत्रापेक्षिता गोपवनादयः संगृह्यन्त एकेन पद्येन।]

**गोपवनश्यामाकश्यापर्णा भाजनश्च विन्दुश्च।**
**श्यामकशिग्रू अश्वावतान इत्युदित एष गणः ।।६३।।**

गां वाचं सत्येन, भूमिं वा देवयजनेन पुनातीति गोपवनः। निपातनात् कर्मण्यणं (अ० ३।२।१) बाधित्वा ल्युट्। गोपवनस्यापत्यानि गौपवनाः। बिदाद्यन्तर्गणोऽयं गोपवनादिस्ततश्चाञ्। श्यामा लताः कामयतीति श्यामाकः,तस्य गोत्रापत्यानि श्यामाकाः। श्यामानि पर्णानि यस्य स श्यापर्णः। निपातनान्मलोपः। तस्यापत्यानि श्यापर्णाः। भाजयति भाजनस्तस्य भाजनाः। विन्दतीति विन्दुस्तस्य वैन्दवाः। श्याम एव श्यामकः, तस्य श्यामकाः। शिग्रुरिव शिग्रुर्निःसारः कश्चित्, तस्य शैग्रवाः। अश्वानवतनोतीत्यश्वावतानः, तस्य गोत्रापत्यान्याश्वावतानाः ।।६३।। इति **गोपवनादिः** ।।

## [अथ तिकादिः, कितवादिः]

**'तिककितवादिभ्यो द्वन्द्वे'**(अ० २।४।६८)। तिकादिभ्यः कितवादिभ्यश्च सति द्वन्द्वे गोत्रप्रत्ययस्य लुग्भवति, गोत्रप्रत्ययकृते बहुत्वे।

**तिककितवा उपकलमकवङ्खरभण्डीरथाः पफकनरकाः।**
**बकनखगुदपरिणद्धा दशेरका अग्निवेशपूर्वाः स्युः ।।६४।।**

तैकायनयश्च कैतवायनयश्च तिककितवाः। अत्र **'तिकादिभ्यः फिञ्'** (अ० ४।१।१५४), तस्य लुक्। औपकायनाश्च लामकायनाश्चोपकलमकाः। अत्र नडादिफको (अ० ४।१।९९) लुक्। वाङ्खरयश्च भाण्डीरथयश्च वङ्खरभण्डीरथाः। प्राफकयश्च नारकयश्च पफकनरकाः। पफको विकत्थनः। बाकनखयश्च गौदपरिणद्धयश्च बकनखगुदपरिणद्धाः। अग्निवेशाश्च दाशेरकयश्चाग्निवेशदशेरकाः। दशनशीलो दशेरः सर्पः सारमेयश्च। ततः **'संज्ञायां कन्'** (अ० ५।३।७५) इति सूत्रेण स्वार्थे कन्प्रत्यये दशेरकः कश्चित्

पुरुषः। अग्निवेशशब्दस्य गर्गादित्वात् ततो बह्वपत्यार्थकस्य यञो 'यञञोश्च' (अ० २।४।६४) इत्यनेनैव लुक् सिद्धावुत्तरपदभूतदाशेरकिशब्दोपसंग्रहार्थमिह तस्योपादानम्। एभ्योऽत इञो (अ० ४।१।९५) लुक् ॥६४॥

लङ्कशान्तमुखा उब्जककुभा उत्तरात्परे।
शलङ्कटा भ्रष्टकात्तु परतोऽत्र कपिष्ठलाः।
कृष्णाजिनात् परे कृष्णसुन्दरा इत्ययं गणः ॥६५॥

लाङ्कयश्च शान्तमुखयश्च लङ्कशान्तमुखाः। अत इञः (अ० ४।१।९५)। औब्जकयश्च काकुभाश्चोब्जककुभाः। अत्रात इञः शिवाद्यणः (अ० ४।१।११२) च। औत्तरयश्च शालङ्कटयश्चोत्तरशलङ्कटाः। भ्राष्टकयश्च कापिष्ठलयश्च भ्रष्टककपिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च कृष्णाजिनकृष्णसुन्दराः। एभ्योऽत इञो लुक्।

गणरत्नमहोदधौ तु 'औरसायनश्च लाङ्कटयश्चौरसलङ्कटाः। अत्र तिकादिफिञः (अ०।४।१।१५४) अत इञः (अ० ४।१।९५) च। शाण्डिल्याश्च काशकृत्स्नयश्च शण्डिलकशकृत्स्नाः। प्राहितयश्च नारकयश्च प्रहितनरकाः। दाशेरकयश्च गाडेरकयश्च दशेरकगडेरकाः। कार्ष्णयश्च सौन्दरयश्च कृष्णसुन्दराः। पार्थोर्जकयश्च काकुभयश्च पृथोर्जककुभाः (गण० पृ० ३५-३६) इत्यधिका उदाहृताः। काशिकादौ तु न दृश्यन्ते ॥६५॥ [इति] तिककितवादिः ॥

[अथ उपकादिः]

'उपकादिभ्योऽन्यतरस्यामद्वन्द्वे' (अ० २।४।६९)। उपकेत्येवमादिभ्यो गोत्रप्रत्ययस्य लुग्वा स्यात् तत्कृते बहुत्वे द्वन्द्वे चाद्वन्द्वे चेति तदर्थः। तत्रापेक्षिता उपकादयः शब्दाः पद्यचतुष्टयेन संगृह्यन्ते।

उपकलमकौ पिष्टोदङ्कौ कुषीतककर्णकौ
केमककलशीकण्ठौ कृष्णाजिनं च सुधायुकः।
जटिलकखरीजङ्घौ चूडारकश्च कवन्तकौ
बधिरकसुपिष्टौ लेखाभ्रूः कमन्दकपर्णकौ ॥६६॥

उपकस्य गोत्रापत्यानि पुंमास उपकाः, औपकायनाः। लमकाः, लामकायनाः। अत्र नडादिफको (अ० ४।१।९९) लुक्।

उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दरा इत्येतद् द्वन्द्वत्रयं तिककितवादिषु पठ्यते, तत्र पूर्वसूत्रेण नित्यं लुक्, अद्वन्द्वे त्वनेन विभाषया । अवशिष्टाना द्वन्द्वे चाद्वन्द्वे च लुग्विकल्प इति बोध्यम् ।

पिष्टस्यापत्यानि पिष्टाः, पैष्टयः । उदङ्कस्योदङ्काः, औदङ्कयः । कृष्णाति भवबन्धनाद् आत्मानमिति कुषीतकः, तस्यापत्यानि कुषीतकाः कौषीतकयः । कर्णकस्य कर्णकाः, कर्णकयः । कमेरौणादिको वुप्रत्ययः । कामयतेऽसौ कमकः, तस्य कमकाः कामकयः । कलशी कण्ठे यस्य तस्य कलशीकण्ठाः, कालशीकण्ठयः । कृष्णमजिनमस्य तस्य कृष्णाजिनाः, कार्ष्णाजिनयः । सुधया युज्यत इति सुधायुकः, तस्य सुधायुकाः सौधायुकयः ।

जटाः सन्त्यस्य जटिलः, स एव जटिलकः । तस्य जटिलकाः, जाटिलकयः । खरीवज्जङ्घे यस्य तस्यापत्यानि खरीजङ्घाः, खारीजङ्घयः । चूडारकाः, चौडारकयः । कवन्तकस्यापत्यानि कवन्तकाः, कावन्तकयः । बधिरकस्य बधिरकाः, बाधिरकयः । सुपिष्टाः, सौपिष्टाः । अत्र शिवाद्यण् (अ० ४।१।११२) । लेखाकारे भ्रुवौ यस्य तस्यापत्यानि लेखाभ्रुवः, लैखाभ्रवेयः । अत्र शुभ्रादिढकः (अ० ४।१।१२३) । कमन्दकस्य कमन्दकाः, कामन्दकयः । पर्णकाः पार्णकयः ॥६६॥

कमन्तकाडारककृष्णपिङ्गलाः
कठेरणिः पिङ्गलकोऽप्यबन्धकः ।
निदाघपिञ्जूलककृष्णसुन्दरीः
कपिष्ठलभ्रष्टकवर्णकास्तथा ॥६७॥

कमन्तकस्यापत्यानि कमन्तकाः, कामन्तकयः । अडतीत्यडारकः । तस्यापत्यान्यडारकाः, आडारकयः । कृष्णश्चासौ पिङ्गलश्च कृष्णपिङ्गलः । तस्य कृष्णपिङ्गलाः, कार्ष्णपिङ्गलयः । कठेरणेरपत्यानि कठेरणयः, काठेरणाः । अत्रौत्सर्गिकस्याण् । पिङ्गलकस्य पिङ्गलकाः, पैङ्गलकयः । न विद्यते बन्धोऽस्येत्यबन्धकः । तस्याबन्धकाः, आबन्धकयः ।

निर्गतो दाघः सन्तापो यस्मात् स निदाघः । तस्यापत्यानि निदाघाः, नैदाघयः । पिञ्जूलकस्य पिञ्जूलकाः, पैञ्जूलकयः । कृष्णश्चासौ सुन्दरश्च कृष्णसुन्दरः । तस्य कृष्णसुन्दराः, कार्ष्णसुन्दरयः । कपीनां स्थानमिव स्थलं यस्य स कपिष्ठलः । तस्य कपिष्ठलाः, कापिष्ठलयः । भ्रष्टकस्य भ्रष्टकाः, भ्राष्टकयः । वर्णयतीति वर्णकः—गणकः । तस्य वर्णकाः, वार्णकयः ॥६७॥

मयूरकर्णानुपदापजग्धाः
पतञ्जलो जन्तुकदामकण्ठौ
वटारकश्चाथ शलाथलानु-
लोमप्रताना अपि काशकृत्स्नाः ॥६८॥

मयूराविव कर्णौ यस्य स मयूरकर्णः। तस्य मयूरकर्णाः, मायूरकर्णाः। अत्र शिवाद्यणः (अ० ४।१।११२)। अनुगतं पदमस्यासावनुपदः। तस्यानुपदाः, आनुपदयः। अपकृष्टमत्तीत्यपजग्धः, अपोपसृष्टस्यादेर्जग्धादेशः। तस्यापत्यान्यपजग्धाः, आपजग्धयः। पतन् सन् जलति घनी भवतीति पतञ्जलः, निपातनात्तकारस्य नकारः। तस्य पतञ्जलाः, पातञ्जलयः। भोजः तु पतञ्जलिशब्दमिकारान्तं मत्वा पतञ्जलयः, पातञ्जलाः, औत्सर्गिकस्याणो लुग् इत्याह। जन्तुरेव जन्तुकः। तस्य जन्तुकाः, जान्तुकयः। वर्द्धमानस्तु 'जतुकाः, जातुकयः' (गण० पृ० ३३) इत्यप्युदाजहार। दाम कण्ठे यस्य स दामकण्ठः। तस्य दामकण्ठाः, दामकण्ठयः।

वटारकाः, वाटारकयः। वडारका इति भोजः। शले शलल्यां स्थलमस्य शलाथलः। सकारलोपो दीर्घश्च निपातनात्। तस्यापत्यानि शलाथलाः, शालाथलयः। अनुगतानि लोमान्यस्यानुलोमाः, आनुलोमयः। प्रतानस्य प्रतानाः, प्रातानयः। काशाः कृत्स्नाः सर्वा यस्मिंस्तत् काशकृत्स्नं स्थलम्, तत्राश्रमं कृत्वा वसन् पुरुषोऽपि काशकृत्स्नः। तस्यापत्यानि काशकृत्स्नाः, काशकृत्स्नयः। वर्द्धमानस्तु[1] गणकारिकायां कशकृत्स्नशब्दं पठित्वा कशाभिः कृन्ततीति कशकृत्स्नः, तस्यापत्यानि कशकृत्स्नाः काशकृत्स्नय इत्युदाजहार। काशिकावृत्तौ तु काशकृत्स्नशब्दः पठ्यते। बोपदेवकृतकाव्यकामधेन्वाख्ये धातुपाठेऽपि शब्दशास्त्राचार्याणां जयवादे 'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शकटायनः पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि शाब्दिकाः' इत्यत्र काशकृत्स्नशब्दो निर्दिष्टः ॥६८॥

प्रतिलोमानभिहितौ कर्णस्तु मसुरात् परः।
पदञ्जलो मदाघश्चेत्युपकादिगणः स्मृतः ॥६९॥

प्रतिगतानि लोमान्यस्य प्रतिलोमः। तस्य प्रतिलोमाः, प्रातिलोमयः।

---

१. द्र०—गण० पृ० ३३।

अनभिहितस्यानभिहिताः, आनभिहितयः। मसुर इव कर्णौ यस्य स मसुरकर्णः। तस्य मसुरकर्णाः, मासुरकर्णाः। अत्र शिवाद्यण: (अ० ४।१।११२)।

पदे जलं यस्य पदञ्जलः। पूर्वपदस्य मुमागमो निपातनात्। पदञ्जलाः, पादञ्जलयः। मदेनाघोऽघमो मदाघः। तस्यापत्यानि मदाघाः, मादाघयः
५ ॥६१॥ इति उपकादिः॥

इति श्रीमदगस्तिमहर्षिवंश्यभट्टयज्ञेश्वरविरचितायां
स्वीयगणरत्नावलीविवृतौ
॥ द्वितीयोऽध्यायः॥

—:—

# ॥ अथ तृतीयोऽध्यायः ॥

'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' (अ० ३।१।१२)। भृशेत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भवत्यर्थे क्यङ् वा स्याद्धलन्तानामेषां लोपश्च भवतीति तदर्थः। तत्रापेक्षिता भृशादयः संगृह्यन्ते पद्यद्वयेन।

भृशशीघ्रचपलमन्दा उत्सुकपण्डितरहःसुमनसश्च।
ओजोऽजरोऽभिमनसो रेहद्वेहद्भ्रमत्सुरजसश्च ॥१॥

अभृशो भृशो भवति भृशायते। अच्वेरिति पर्युदासाद् अभूततद्भावविषय एव क्यङ्। तेनेह न 'क्व दिवा भृशा भवन्ति'। रात्रौ ये भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। एवं शीघ्रायते, चपलायते।

'दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे॥' (रघु० ४।४९)

अमन्दं सन् मन्दं भवतीत्यर्थः। अनुत्सुक उत्सुको भवत्युत्सुकायते। पण्डितायते। अरहो रहो भवति रहायते। अत्रान्त्यस्य हलो लोपः क्यङ्सन्नियोगेन। एवं सुमनायते, ओजायते। ओजःशब्दो वृत्तिविषये तद्वति वर्तते। अजरायते, अभिमनायते। लङादावभ्यमनायत स्वमनायतेत्यादि रूपं बोध्यम्।

ननु क्यङन्तस्य सुमनायाभिमनायेत्यादेः 'सनाद्यन्ता' (अ० ३।१।३२) इत्यनेन धातुसंज्ञायां ततः प्रागडाद्यागम असुमनायतेत्यादिरूपमापद्येतेति चेत्, मैवम्। उपसर्ग समानाकारस्य पूर्वपदस्य धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्करणस्य सिद्धान्तितत्वात्। एवं च परिशेषान्मनसित्यादेः क्यङ्प्रकृतित्वेन तदादितदन्तस्य 'मनाय' इत्यादेर्धातुत्वम्। स्पष्टं चेदं सोपपत्तिकम् आकरे।

रेहच्छब्दो नैर्घृण्यवृत्तिर्भिक्षाभिषवधर्मवृत्तिर्वा। रहसि वर्त्तते इति अन्ये। रेहायते। वेहद् गर्भघातिनी वेहायते। भ्रमायते, सुरजायते ॥१॥

रोहद्वर्चोदुर्मनउन्मनसः शश्वदण्डरौ च।
शुचिर्वर्चः शुचिरित्ययमुदितः प्राज्ञैर्भृशादिगणः ॥२॥

अरोहन् रोहन् भवति रोहायते। वर्चायते। वर्चः शब्दोऽयं तद्वति वर्तते। दुर्मनायते। उन्मनायते। शश्वायते, सातत्येन भवतीत्यर्थः। अण्डरायते। अण्डरो मुष्कः। शुचिर्वर्चायते। अशुचिः शुचिर्भवति शुचीयते। आकृतिगणोऽयम्। तेनान्येऽपि लक्ष्यानुसारतो ज्ञेयाः ॥२॥ [इति भृशादिः ॥]

[अथ लोहितादिः]

'लोहितादिडाज्भ्यः क्यष्' (अ० ३।१।१३)। लोहितेत्येवमादिभ्यः शब्देभ्यो डाजन्ताच्च भवत्यर्थे क्यष् प्रत्ययो भवतीति तदर्थः। अत्राच्वेरित्यनुवृत्त्याऽभूततद्भावविषयत्वं लभ्यते, तच्च लोहितशब्दस्यैव विशेषणम्, अव्यक्तानुकरणाद् द्व्यजवरार्द्धाद् विहितस्य डाचस्तु न, असम्भवात्। नहि पटपटायति पटपटायत इत्यादावभूततद्भावविषयता सम्भवति। कृभ्वस्तियोगं विनापीह डाच्, डाजन्तात् क्यषो विधानसामर्थ्यात्। क्यषन्ताद् उभयपदम्[1]। प्रकृतसूत्रेऽपेक्षिता लोहितादय एकेन पद्येन संगृह्यन्ते।

लोहितो मद्रहरितौ नीलश्चरितस्तथा।
फेनदासाविति मतोऽयमाकृतिगणो बुधैः ॥३॥

अलोहितो लोहितो भवति लोहितायति, लोहितायते। अमद्रो मद्रो भवति मद्रायते। एवं हरितायते, नीलायते, चरितायते, फेनायते, दासायते।

मद्रादिभ्यः क्यङेव। तथा च वार्त्तिकम्—'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति' (सि० कौ० ३५५१)। यत्तु गणरत्नमहोदधौ—

'लोहितश्यामदुःखानि हर्षगर्वसुखानि च।
मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी[2] ॥' (गण० पृ० २४५)

इति पठित्वा श्यामादिभ्योऽपि क्यषि पद्यद्वयमुदाहृतम्, तत्तूक्तभाष्यवार्तिकविरुद्धम्। तस्मात् तेभ्यः क्यङेवेति ध्येयम् ॥३॥ [इति लोहितादिः ॥]

[अथ सुखादिः]

'सुखादिभ्यः कर्तृवेदनायाम्' (अ०३।१।१८)। सुखेत्येवमादिभ्यः कर्मभ्यो

---

१. 'वा क्यषः' (अ० १।३।९०)इति विकल्पत्वात् परस्मैपदमात्मनेपदं चेत्यर्थः।
२. 'करुणा जिह्मचर्मणी' इति पाठो गणरत्नमहोदधौ।

वेदनायामर्थे क्यङ् स्याद् वेदनाकर्त्तुः सुखादीनि चेत् स्युरिति तदर्थः। तत्रापेक्षिताः सुखादयः शब्दा एकेन पद्येन संगृह्यन्ते।

सुखदुःखाऽस्रकृच्छ्राणि तृप्रः करुण एव च।
अलीकसोढकृपणप्रतीपाः स्युः सुखादयः ॥४॥

सुखं वेदयते सुखायते। वेदनाऽनुभवो ज्ञापनं वा। कर्तृग्रहणं किम्? परस्य सुखं वेदयते। दुःखं वेदयते दुःखायते। अस्रमश्रु रुधिरं वा वेदयते अस्रायते। कृच्छ्रं कष्टं कृच्छ्रायते। तृप्रं दुःखम्, चन्द्रं समुद्रं वा तृप्रायते। करुणं शोचनं करुणायते।

अलीकमनृतम् अलीकायते। सोढं सहनमभिवं वा वेदयते सोढायते। कृपणं दैन्यं कृपणायते। प्रतीपं प्रतिकूलं वेदयते प्रतीपायते ॥४॥ [इति सुखादिः ॥]

[अथ कण्ड्वादिः]

'कण्ड्वादिभ्यो यक्' (अ० ३।१।२७)। कण्डू इत्येवमादिभ्यो धातुभ्यो नित्यं यक् प्रत्ययो भवति स्वार्थ इति तदर्थः। तत्रापेक्षिताः कण्ड्वादयः पद्यद्वयेन संगृह्यन्ते।

कण्डूञ् मेधाचुरणचरणा दुःखरेखाहृणीङः
केलाखेलासभरभिषजस्तन्तसो मन्तुवल्गू।
एलावेलावरणमगधाः पम्पसोरोमहीडो
लेलालेटौ कुषुभमनसौ गद्गदोषःसुखानि ॥५॥

कण्डूञ् गात्रविघर्षणे। कण्डूयति, कण्डूयते। नखादिनाऽङ्गं घर्षयतीत्यर्थः। ञित्वात् कर्तृगामिनि क्रियाफले यगन्तादात्मनेपदम्, अनुबन्धस्य केवले चारितार्थ्याभावेन समुदायोपकारकत्वात्।

धातुभ्यः किम्? प्रातिपदिकेभ्यो मा भूत्। द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च। तथा चोक्तं महाभाष्ये पतञ्जलिना—

'धातुप्रकरणाद् धातुः कस्य चासञ्चनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥'
(महा० ३।१।२७)

इति । अस्याः कारिकाया अयमाशयः—यकः कित्वेन धातव इति विज्ञायते, कण्डूञ् इति दीर्घपाठेन प्रातिपदिकान्यपीति । यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे 'अकृत्सार्व०' (अ० ७।४।२५) इति दीर्घेण कण्डूयतीत्यादि सिद्धेः किं दीर्घपाठेन । द्वैविध्ये हि धातुभ्यो यकि गुणनिषेधेन कित्वं सार्थकम् । कण्डूरित्यादिपरिगृहीतरूपसिद्धया दीर्घपाठोऽपि सार्थक इति ।

मेधा आशुग्रहणे । मेधायति, मेधायते । चुरण चौर्ये । प्रहरणधारणयोरिति वर्धमानः । 'अतो लोपः' (अ० ६।४।४८) । चुरण्यति । चरण गतौ । चरण्यति । दुःख तत्क्रियायाम् । दुःख्यति । दुखमनुभवतीत्यर्थः । रेखा श्लाघासादनयोः । रेखायति । हृणीङ् रोषे लज्जायां च । हृणीयते । रुष्टो भवति लज्जते वा । केला खेला विलासे । केलायति, खेलायति । खेला स्खलने च । सपर पूजायाम् । सपर्यति । पूजयतीत्यर्थः । भिषज् चिकित्सायाम् । कुत्सायामिति एके । भिषज्यति । तन्तस् दुःखे । तन्तस्यति । मन्तु अपराधे । मन्तूयति । रोष इति एके । चन्द्रस्तु ञितमाह–मन्तूयते । वल्गु पूजामाधुर्ययोः । वल्गूयति ।

एला विलासे । वेला कालविशेषणे । वरण गतौ । मगध परिवेष्टने । नीचदास्य इति अन्ये । पम्पस् दुःखे । उरस् बलार्थः । उरस्यति । बलवान् भवतीत्यर्थः । महीङ् पूजायाम् । महीयते । पूजामधिगच्छतीत्यर्थः । लेला दीप्तौ । लोट् धौर्त्ये पूर्वभावे स्वप्ने च । कुषुभ क्षये । मनस् अवबोधने । गद्गद वाक्स्खलने । उषस् प्रभातीभावे । सुख तत्क्रियायाम् । सुख्यति । सुखमनुभवतीत्यर्थः ॥५॥

भिष्णक् तिरो लाडिषुधेरसो-
ऽगदो वेदेरजौ लेट् तुरणाररेरञः ।
पयश्चे लिट् संवरमम्बरद्रवः-
सम्भूयसोऽस्नुस्तरणं बुधैः स्मृतम् ॥६॥

भिष्णज् उपसेवायाम् । भिष्णज्यति । उपसेवत इत्यर्थः । तिरस् अन्तर्धाने । लाट् जीवने । इषुध शरधारणे । इरस् ईर्ष्यायाम् । इरस्यति । अगद नीरोगत्वे । वेद धौर्त्ये । इरज् ईर्ष्यायाम् । लेट् धौर्त्ये पूर्वभावे स्वप्ने च । तुरण त्वरायाम् । अरर आराकर्मणि । अरर्यति । अररेति प्रातिपदिकम् आरापर्यायवाचि । इरञ् ईर्ष्यायाम् । ईर्यति, ईर्यते ।

पयस् प्रसृतौ । पयस्यति । लिट् अल्पीभावे कुत्सायां च । संवर अम्बरं संवरणे । द्रवस् परितापपरिचरणयोः । सम्भूयस् प्रभूतभावे । असु उपतापे । असूयति । असि इति एके । अस्यति । असूञिति एके । तथा चात्मनेपदमपि —असूयते । तरण गतौ । तरण्यति ॥६॥ इति कण्ड्वादिः ॥

[अथ नन्द्यादिः, ग्रह्यादिः, पचादिः]

'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३।१।१३४) । नन्द्यादिभ्यो ग्रह्यादिभ्यः पचादिभ्यश्च ल्यु णिनि अच् इत्येते प्रत्ययाः क्रमाद् भवन्तीति तदर्थः । तत्र तावन्नन्द्यादिप्रकृतिकल्युप्रत्ययान्तशब्दानां गणः प्रदर्श्यते पद्यद्वयेन ।

नन्दनो वाशनो दूषणो वर्धनः
साधनः शोभनो रोचनो जल्पनः ।
सम्परः क्रन्दनः कर्षणो हर्षणो
वेः परो भीषणोऽथो जनार्दनः ॥७॥

तत्र नन्दिवाशिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः प्रत्ययः । नन्दयतीति नन्दनम्, वासवोद्यानम् । नन्दनो हर्षदः सुतः । वाशृ शब्दे दैवादिकः । वाशयतीति वाशनः । दूषयतीति दूषणः । वर्धयतीति वर्द्धनः । साधयतीति साधनः । शोभयतीति शोभनः । रोचयतीति रोचनः । जल्पतीति जल्पनः ।

समः परः सम्परः । संक्रन्दयति शत्रूनिति संक्रन्दनः । सम्यक् कर्षति भक्तजनदुःखमिति संकर्षणः । संहर्षयतीति संहर्षणः । विशेषेण भीषयतीति विभीषणः । दुष्टान् जनान् अर्दयतीति जनार्दनः । क्रन्दिहृषिभीष्यादिभ्योऽपि ण्यन्तेभ्यः ॥७॥

संज्ञायां तपिसहिदमि रमणो मधुसूदनो लवणयवनौ ।
दर्पणचित्तविनाशनदमना इति कथित एष गणः ॥८॥

संज्ञायामिति मध्यमणिन्यायेन यथासम्भवमुभयत्र पद्यगतशब्दोपकारकम् । तपिश्च सहिश्च दमिश्चैतेषां समाहारः । तपिसहिदमि नन्द्यादौ बोध्यमिति शेषः । तपतीति तपनः, सूर्यो नरकप्रभेदो वा । सहत इति सहनः, सहिष्णुः । दमनः । रमयतीति रमणः । मधुं दैत्यविशेषं सूदयति हन्तीति मधुसूदनः । लुनातीति लवणः, राक्षसविशेषः । क्षारविशेषो लवणम् । निपातनाण्णत्वम् । यौति मिश्रभावं प्राप्नोतीति यवनः ।

दर्पणः। चित्तं विनाशयतीति चित्तविनाशनः। दमयतीति दमनः। असंज्ञायामपि—रिपुदमनः, रोगनाशनः, शत्रुसूदनः ॥८॥ इति नन्द्यादिः ॥

ग्रह्यादयः पद्यत्रयेण संगृह्यन्ते।

ग्राह्युद्भासिस्थायिनो रक्षवप्शाः
श्रुश्चैतेभ्यः स्याणिणानि नेः परेभ्यः।
वस्वद्याचिव्याहरव्रजभ्य
इष्टो नञ्पूर्वेभ्यो मन्त्रिसम्मर्दिनौ च ॥९॥

गृह्णातीति ग्राही। उद्भासत इत्युद्भासी। तिष्ठतीति स्थायी। नितरां रक्षतीति निरक्षी। निवापी, निशायी, निश्रावी। तथा च गणसूत्रम्—'रक्षश्रुवपशान्नौ' इति।

न वसतीति अवासी। अवादी, अयाची, असंव्याहारी, अव्राजी। तथा च गणसूत्रम्—'याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्' इति। मन्त्री, सम्मर्दी ॥९॥

परिभावी परिभवी चोपराध्यपराधिनौ।
भूतेऽभिभावी देशे तु विशयी विषयीति च ॥१०॥

परिभवतीति, परिभावी, परिभवी। पाक्षिकवृद्ध्यभावो निपातनात्। उपराध्नोतीति उपराधी। [अपराध्नोतीति अपराधी।] अभिभूतवान् इत्यभिभावी। विशेषेण शेते शिनोतीति वा विशयी, विषयी वा देशः। वृद्ध्यभावः पाक्षिकषत्वं च निपातनात् ॥१०॥

अचित्तकर्तृकाजन्तधातवोऽप्यत्र कीर्त्तिताः।
उत्साह्युद्वासिनौ चेति ग्रह्यादय उदाहृताः ॥११॥

न करोतीति अकारी परशुः। अहारी घटः। अचित्तकर्तृकेति किम्? अकर्त्ता अहर्त्ता वा चैत्रः। उत्सहत इत्युत्साही। उद्दस्यतीति उद्वासी। 'दसु उपक्षये' (धातु० ४।१०३) दिवादिः ॥११॥ [इति ग्रह्यादिः ॥]

पचादयः पद्यद्वयेन प्रदर्श्यन्ते।

पचवपवदाः सूरट्सेवौ मदव्रणचोरटः
पतवचचला देवट्कोषौ रजप्लवटौ तथा।
श्वपचचरटौ दर्पो जारात्परस्तु भरो भवेत्
गरडिह तरङ्गाहङ्दर्शा नदट्क्षयदोषटः ॥१२॥

पचतीति पचः। एवं वपः, वदः। सुरतीति सुरः सूर्यः। 'षुर ऐश्वर्यदीप्त्योः' (धातु० ६।५१) तौदादिकः। दीर्घत्वं निपातनात्। सेवत इति सेवः। मदयतीति मदः। व्रणयति शब्दं कारयतीति व्रणः। णिजन्ताद् 'अण रण वण'(धातु १।३०३)इति दण्डक[1]पठिताच्छब्दार्थकाद् भौवादिकादच्। चोरः, चोरी। पतः, वचः, चलः। देवः, देवी। कुष्णातीति कोषः संग्रहः। रञ्जयतीति रजः। निपातनान्नलोपः। प्लवत इति प्लवो मण्डूकः, जलकुक्कुट उडपं वा। टित्वात् प्लवीत्यपि।

श्वपचश्चाण्डालः। चरः, चरी। दृप्यति मोहयतीति दर्पः। जारं बिभर्तीति जारभरा। गिरति गृणातीति वा गरो विषम्। गरी। तरः, तरी वा नौः। [गाहः, गाही। दर्शः।] नदः, नदी। 'क्षि निवासगत्योः' (धातु० ६।११६) तौदादिकः। क्षयः। दूषयतीति दोषः, दोषो ॥१२॥

**मेधमेषौ सर्पदम्भनर्त्ता इत्येवमादिकः।**
**प्रोक्तोऽयमाकृतिगणः पचादिः शब्दवेदिभिः ॥१३॥**

मेधत इति मेधो यज्ञः। 'मेधृ मेधाहिंसनयोः' (धातु० १।६११)। मिषति स्पर्द्धत इति मेष उरणः। सर्पतीति सर्पः पृदाकुः। दभ्नोतीत्यनेनेति दम्भः। नृत्यतीति नर्त्तो नटः।

पचादिराकृतिगणः, 'यङोऽचि च' (अ० २।४।७४) इति सूत्रेणाच्प्रत्यये परे यङ्लुग्विधानात्। तेन चेक्रियः, लोलुवः, पोपुवः, मरीमृजः, 'न धातुलोप' (अ० १।१।४) इति गुणवृद्धिनिषेधः, धरतीति धरेत्यादि सिद्ध्यति।

अत्र वार्तिकानि—'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्' (सि० कौ० ३८५४)। आगमस्य दीर्घत्वसामर्थ्याद् अभ्यासह्रस्वो हलादिशेषश्च न। चराचरः, चलाचलः, पतापतः, वदावदः। पक्षे उक्तानि रूपाणि। 'हन्तेर्घत्वं च' (सि० कौ० ३८५५) घत्वमभ्यासस्येति। उत्तरस्य तु 'अभ्यासाच्च' (अ० ७।३।५५) इति कुत्वम्। हन्तीति घनाघनः। 'पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य' (सि० कौ० ३८५६) इति। पाटयतीति पाटूपटः।

---

१. सूत्रबद्धशब्दसमूहो दण्डकाभिप्रायः।

आकृतिगणेऽस्मिन् केषाञ्चित् पाठोऽनुबन्धासञ्जनार्थः। यथा नदट्, देवट्। केषाञ्चिद् बाधकबाधनार्थः। यथा देव इत्यादौ 'इगुपध' (अ० ३।१।१३५) इति कः प्राप्तः। जारभारेत्यादौ 'कर्मण्यण्' (अ० ३।२।१) प्राप्तः। केषाञ्चित् पाठस्तु प्रपञ्चार्थं इति विवेकः ॥१३॥ [इति पचादिः ॥]

इति श्रीमदगस्तिवंश्यभट्टयज्ञेश्वरविरचितायां
स्वीयगणरत्नावलीवृत्तौ
॥ तृतीयोऽध्यायः ॥

———

# ॥ अथ चतुर्थोऽध्यायः ॥

## [अथ अजादिः]

'अजाद्यतष्टाप्' (अ० ४।१।४)। स्त्रियां वर्त्तमानेभ्य अजादिभ्योऽकारान्तेभ्यश्च प्रातिपदिकेभ्यष्टाप् प्रत्ययो भवतीति तदर्थः।

**ज्ञेया अजैडकाश्वाश्चटका बाला च कोकिला पाका।**
**होडा वत्सा मन्दा देवविशा मूषिकोष्णिहा क्रुञ्चा ॥१॥**

अजतीति अजा छागी। 'ईड स्तुतौ' (धातु० २।९) आङ्पूर्वो ण्यन्तः। एडयतीति एडका मेषी। अश्वा वडवा। चटका। कोकिला [मूषिका।] एषु जातिलक्षणो ङीष्[1] प्राप्तष्टापा बाध्यते। बाला, पाका, होडा, वत्सा, मन्दा, विलाता[2]। एषु 'वयसि प्रथमे' (अ० ४।१।२०) इति ङीप् प्राप्तः। देवविशा देवानां विट् प्रजेत्यर्थः। उत्स्निह्यतीत्युष्णिहा, उष्णिक् छन्दोविशेषः। क्रुञ्चा क्रौञ्ची। हलन्तत्वाट्टापोऽप्राप्तौ एषां त्रयाणां गणे पाठ इति 'केचित्'।

नन्वेवं देवविट्, उष्णिक्, क्रुङ् इति हलन्तानां स्त्रियामप्रयोगः स्याट्टापो नित्यत्वात्। एवं च हलन्तस्त्रीलिङ्गेषु कौमुद्यामुदाहृतमुष्णिगित्यसङ्गतमिति चेत्, न। कौमुदीग्रन्थस्य भाष्यानुसारित्वात्। तथा हि अदन्तेभ्य एभ्यष्टाप्। अजादौ पाठस्तु जातिलक्षणङीष्बाधनार्थं इति पतञ्जलिमतम्। तथा च श्रूयते—'देवविशं मनुष्यविशम्' इति, 'क्रुञ्चानालभेत' इति, 'उष्णिहककुभौ' इति। इति स्पष्टं चेदं 'ङ्याप्प्रातिपदिकात्' (अ० ४।१।१) इति सूत्रे भाष्ये ॥१॥

**काण्डसदच्प्रान्तशतैकेभ्यः पुष्पात्परान्मूलात्।**
**सम्भस्त्राऽजिनशणपिण्डेभ्यस्तु फलाच्च टाब्विलाता च ॥२॥**

काण्डादिभ्यः परः पुष्पशब्दष्टापं लभते। काण्डे पुष्पाणि यस्याः सा

---

१. 'जातेरस्त्रीविषयादयोपधात्' (अ० ४।१।६३)।
२. 'विलाता' शब्दोऽग्रिमे श्लोके वर्त्तते।

काण्डपुष्पा। एवं सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा। नञः परो भूतो मूलशब्दष्टापं लभते [अमूला]।

सम्यक् फलं यस्याः सा सम्फला। भस्त्रेव फलानि यस्याः सा भस्त्राफला। अजिनफला, शणफला, पिण्डफला। ओषधिजातिविशेषाणां संज्ञा एताः ॥२॥

**पुंयोगेऽपि ज्येष्ठा तथा कनिष्ठा च मध्यमा दंष्ट्रा।**
**अपहाणाऽपरपूर्वा जातिः शूद्रामहत्पूर्वा ॥३॥**

ज्येष्ठादेर्भार्याऽपि ज्येष्ठा, कनिष्ठा, मध्यमा इत्येव। नात्र 'पुंयोगादाख्यायाम्' (अ० ४।१।४८) इत्यस्य प्रवृत्तिः। दशत्यनयेति दंष्ट्रा। अस्य ष्ट्रन्प्रत्ययान्तत्वेन 'टिड्ढ' (अ० ४।१।१५) इति ङीप् प्राप्तः। न परः किन्तु पुरस्तात् पूर्वशब्दो यस्याः सा अपरपूर्वा, यद्वा अपरशब्दः पूर्वो यस्याः सा अपरपूर्वा। अपहाणा इत्यस्य तन्त्रेणोभयार्थकं विशेषणमिदम्। अपहीयतेऽनयाऽस्या वा अपहाणा, पूर्वा चासावपहाणा च पूर्वापहाणा। एवमपरापहाणा। निपातनाण्णत्वम्। अत्र ल्युडन्तत्वेन टित्वात् समासात् प्रागेव प्राप्तो ङीबनयोर्गणे पाठसामर्थ्यात् टापा बाध्यते। शूद्रशब्दष्टापं लभते जातिर्वाच्या चेत् शूद्रा। जातिः किम्? शूद्रस्य भार्या शूद्री। अमहत्पूर्वेति किम्? महाशूद्री आभीरी[2]।

अजादिराकृतिगणः। तेन वरटा, वडवा, त्रिफला, परभृता, कन्येत्यादयः सिद्धाः ॥३॥ [इति अजादिः]

[अथ स्वस्रादिः]

'न षट्स्वस्रादिभ्यः' (अ० ४।१।१०)। षट्संज्ञकेभ्यः स्वसृ इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवतीति तदर्थः। तत्रापेक्षिताः स्वस्रादयः पूर्वाचार्यैः एकेन पद्येन प्रदर्शितास्तदेव संग्रहपद्यमत्र लिख्यते।

**स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।**
**याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥४॥**

---

१. 'षिद्गौरादिभ्यश्च' (अ० ४।१।४१) इति षित्वान्ङीषा भाव्यम्।
२. आभीरी='अहीरिन' इति भाषायाम्।

स्वसा भगिनी। तिस्रश्चतस्रो वा स्त्रियः। ननन्दति समृद्धयतीति ननान्दा भर्तृभगिनी। दोग्धि अपहरति सर्वस्वं मातृकुलादिति दुहिता सुता। यतते हितप्रतिपादनेनेति याता भर्तृभ्रातृभार्या। मान्यते पूज्यते सुतैरिति माता जननी। एभ्य ऋदन्तेभ्य 'ऋन्नेभ्यः' (अ० ४।१।५) इति ङीप् प्राप्तो निषिद्धयते ॥४॥ [इति स्वस्रादिः ॥]

[अथ लोहितादिः]

'सर्वत्र लोहितादिकतन्तेभ्यः' (अ० ४।१।१८)। लोहितादिभ्यः कत-शब्दान्तेभ्यो यञन्तेभ्यः स्त्रियां नित्यं ष्फः स्यादिति तदर्थः। षित्करणसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरादिभ्यश्च' (अ० ४।१।४१) इति ङीष् भवत्येव। लोहितादिर्गर्गाद्यन्तर्गणः, तत्र के लोहितादय इत्यपेक्षायां पद्यद्वयेन संगृह्यन्ते।

लोहितस्तनुतरुक्षतलुचा बभ्रुवल्गुमनुसूनुवतण्डाः।
तण्डमण्डुकपिकन्थकवृक्षाः शङ्कुतन्तुलिगुसंशितरुक्षाः ॥५॥

लोहितस्य गोत्रापत्यं स्त्री लौहित्यायनी। एवं तानव्यायनी, तारुक्ष्यायणी, तालुक्ष्यायणी। बभ्रोर्बाभ्रव्यायणी। वाल्गव्यायनी, मानव्यायनी, सौनव्यायनी, वातण्ड्यायनी। वतण्डस्य शिवादौ (अ० ४।१।११२) पाठाद् अणि वातण्डी इत्यपि।

तण्डस्य गोत्रापत्यं स्त्री ताण्ड्यायनी। मण्डोर्माण्डव्यायनी। काप्यायनी, कान्थक्यायनी, वार्क्ष्यायणी, शाङ्कव्यायनी, तान्तव्यायनी, लैगव्यायनी, सांशित्यायनी, रौक्ष्यायणी। ऋक्ष इति पाठे आर्क्ष्यायणी ॥५॥

गुहलुमन्तुमनायीमंक्ष्वलिगु जिगीषुकथकौ च।
गण्डुकतकण्व[1]शकला इत्येष कतन्तलोहितादिगणः ॥६॥

गुहलोर्गोत्रापत्यं स्त्री गौहलव्यायनी। मान्तव्यायनी, मानाय्यायनी, मांक्षव्यायणी, आलिगव्यायनी, जैगीषव्यायणी, काथक्यायनी, गाण्डव्यायनी, कात्यायनी।

—'लोहितादिषु शाकलस्योपसंख्यानं कर्तव्यम्' (द्र०—महा० ४।१।१८) इति वार्त्तिकम्। शाकल्यायनी। अत्र भाष्यम्—'यदि पुनरयं शकलशब्दो लोहि-

---

१. शकलशब्दो लोहितादौ कण्वादौ च वर्तत इति ज्ञापनाय कण्वशब्दस्य ग्रहणम्; न तु लोहितादित्वप्रतिपादनायेति बोध्यम्।

तादिषु पठ्येत ? नैवं शक्यम् । [ इह हि ] शाकल्यस्यच्छात्राः शाकला इति 'कण्वादिभ्यो गोत्रे' (अ० ४।२।१११) इत्यण् न स्यात् । एवं तर्हि–कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादौ ष्फाणौ तत्र प्रयोजनम् । (महा० ४।१।१८) इति ।

अयं भावः—कतकण्वशकलेति क्रमेण गणादौ पठितम्, तत्र कण्वशब्दात् पूर्वः शकलशब्दः पठितव्यः । कतन्तेभ्य इत्यत्र कतोऽन्तो येषां तानि कतन्तानि कतस्यान्तः कतन्त इति बहुव्रीहितत्पुरुषयोरेकशेषः । शकन्ध्वादित्वात् (सि० कौ० १२५) निपातनाद्वा पररूपम् । तत्र बहुव्रीहिणा कतशब्दान्तो लोहितादिगण उच्यते, तत्पुरुषेण तु शकलशब्द उच्यते ।

एवं 'कण्वादिभ्यो गोत्रे' (अ० ४ २।१११) इत्यत्रापि कण्वाद् आदिः कण्वादिः, कण्व आदिर्येषां तानि कण्वादीनीति बहुव्रीहितत्पुरुषयोरेकशेषः । तत्रापि तत्पुरुषः शकलशब्दमभिधत्ते, तथा च शाकल्यायनीति स्त्रियामनेन ष्फः । शाकल्यस्य छात्राः शाकला इति छापवादः 'कण्वादिभ्यो गोत्रे' (अ० ४।२।१११) इति शैषिकोऽण् भवति । तदुक्तं 'ष्फाणौ तत्र प्रयोजनम्' इति ॥६॥ [इति लोहितादिः ॥]

## [अथ समानादि ]

'नित्यं सपत्न्यादिषु' (अ० ४।१।३५) । सपत्नीत्येवमादिषु पतिशब्दस्य नकारोऽन्तादेशो नित्यं भवतीति तदर्थः । 'विभाषा सपूर्वस्य' (अ० ४।१।३४) इतिविकल्पापवादः । तत्र सपत्न्यादिषु पूर्वपदानामेव नानात्वमिति तानि संगृह्यन्ते एकेन पद्येन ।

सन्ति सपत्न्यादिगणे समानपिण्डैकभद्रवीराश्च ।
पुत्रो भ्राता श्वा श्रुतिविषयो दासश्च पूर्वपदभूताः ॥७॥

समानः पतिर्यस्याः सा सपत्नी । समानस्य सादेशो निपातनात् । पिण्डः पतिर्यस्याः सा पिण्डपत्नी । यः पिण्डं दद्यात् तस्य या भार्या भवति सैवमुच्यते । एवम् एकपत्नी, भद्रपत्नी, वीरपत्नी । पुत्रस्य भार्या पुत्रपत्नी स्नुषा । भ्रातुर्भार्या भ्रातृपत्नी । शुनो भार्या श्वपत्नी । शुना सङ्गता काचिदसती एवमधिक्षिप्यते । यद्वा श्वा पतिर्जीविकासाधनतया पालको यस्याः सा श्वपत्नी । शिक्षापाटवशालिना शुना लोकान् रञ्जयित्वा या जीविकां वर्त्तयति सैवं व्यपदिश्यते । दासस्य भार्या दासपत्नी । अयं छन्दस्येव प्रयुज्यते । अत उक्तं–श्रुतिविषयो दास इति ।।७।। [इति समानादिः ॥]

[अथ गौरादिः]

'षिद्गौरादिभ्यश्च' (अ० ४।१।४१)। षकारेत्संज्ञकेभ्यो गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवतीति तदर्थः। तत्रापेक्षिता गौरादयः पद्याष्टकेन संगृह्यन्ते। षित उदाहरणं नर्तकी कात्यायनीत्यादि।

गौरो मत्स्यमनुष्यतूणहरिणद्रोणद्रुणाः पिङ्गलः,
शृङ्गर्ष्यामलकोभयश्वशबला[1] नन्दाढकं दाडिमम्।
शर्करातसपुष्कलानि सुपवालिन्दौ सृपाटः पुटम्,
मूलाटो नटपाटनारटहया भङ्गो मठो मालतः ॥८॥

गौरी गौरवर्णा भवानी वा। मत्सी जलचरी। 'सूर्यतिष्य०' (अ० ६।४।१४९) इत्यादिना यलोपः। मनुषी मनुष्यत्वजातिविशिष्टा। अनयोर्योपधत्वाद् 'जातेरस्त्रीविषयादयोपधात्' (अ० ४।१।६३) इत्यनेन ङीपोऽप्राप्ताविह पाठः। तूणी नील्याख्यौषधिजातिः। स्त्रीविषय एवायम्, निषङ्गवाची तु पुंस्येव न स्त्रियमाचष्टे। तथा च मेदिनी—'तूणी नील्यां निषङ्गे ना' (मे० णद्विके-१६) इति। एवमग्रे पिपठिष्यमाणेषु जातिशब्देषु केचिद्योपधाः केचित् स्त्रीविषया इत्यत्रानुसन्धेयम्।

हरिणी नेत्रसौन्दर्यादिगुणविशिष्टा नारी वृत्तप्रभेदो वा। हरितवर्णविशिष्टायां हरिणत्वजातिविशिष्टायां च हरिणीति तु 'वर्णादनुदात्तात्तोपधात्तो नः' (अ० ४।१।३९) इति, 'जातेरस्त्रीविषयाद्' (अ० ४।१।६३) इति च सूत्राभ्यां सिद्धम्। 'हरिणी हरितायां च नारीभिद्वृत्तभेदयोः' (मे० णत्रिके-८७) इति मेदिनी।

द्रोणी जलक्षेपिका। द्रुणी कच्छपी जलद्रोणी च। अभिधानस्वभावात् कच्छपे पुंसि द्रुणशब्दो न प्रयुज्यत इति स्त्रीविषय एवायम्। 'द्रुण्यम्बुद्रोणीकच्छप्योः'(मे० णद्विके-१७)इति मेदिनी। पिङ्गो वर्णोऽस्यास्तीति पिङ्गली। सिध्मादित्वात् (अ० ५।२।९७) लचि ङीष्।

शृङ्गी प्रतिविषा कर्कटशृङ्गी च। ऋष्यी ऋक्षी। नन्दाढकमिति समाहारद्वन्द्वः पृथक् पदम्। नन्दन्त्यस्यामिति नन्दी। सैव प्रज्ञाद्यणि नान्दी। यद्वा शृङ्गाद्याढकान्तः समाहारद्वन्द्व एकं पदम्। आनन्दन्त्यस्यामित्यानन्दी

१. 'आमलको......शबला' इति पाठस्य व्याख्या नास्ति।

वेत्रासनम् । आसन्दीति अन्ये । आढकी द्विदलधान्यजातिस्तुवरीपदाभिधेया । दाडिमी फलवृक्षविशेषः ।

शृणातीति शर्करी विषवल्लरी । अतसी धान्यविशेषः । पुष्कली वनस्पतिः । सुष्ठु सुवति प्रेरयति दोषानिति सुषवा कृष्णजीरकम् । यत्त्वत्र सुषमशब्दः कैश्चित् पठ्यते तदयुक्तम्, 'सुषमा परमा शोभा' (अमर० का० १, व० ३, श्लो० १९) इत्यमरकोशविरोधात् । अल्यते भूष्यत इत्यलिन्दी अंगारैकदेशः प्रघणपदव्यपदेश्यः । अवयववाची नायं जातिशब्दः । सर्पति क्षुद्रद्रव्यसङ्घातं गच्छतीति सृपाटी उपानत् । पुटी पुटमेव । मूलैरटतीति मूलाटी मूलखानिका । नटी नाट्यकर्त्री । क्रियाशब्दोऽयम् । एवं पाटयतीति पाटनी । आरटतीत्यारटी । हयी अश्वा । भङ्गी विच्छित्तिः । मठी छात्रादिनिलयः । मालती पुष्पलताविशेषः ॥८॥

पिप्पल्यालजिसल्लकौ च विकलः सौधर्मकोशातकौ,
कल्माषास्तरणापकाश्च पृथिवी क्रोष्टुः पटः शष्कुलः ।
सूदः कन्दलनिष्कलौ च करणे स्यादेषणः पुष्करम्,
सूर्मी बल्लकयूथयूषसुषचाः शूर्पं महद्गौतमौ ॥९॥

पिप्पली वैदेही । आलजस्यापत्यं स्त्री आलजी । अपत्यप्रत्ययान्तस्य जातिकार्यभाक्त्वेऽप्यदन्तत्वाभावान्ङीषोऽप्राप्तावत्र[1] पाठः, 'इतो मनुष्यजातेः' (अ० ४।१।६५) इत्यनेनैव सिद्धे स्पष्टार्थो वा । एवमग्रेऽपि ध्येयम् ।

सल्लकी गजप्रियौषधिः । विकली । विकलनिष्कलपुष्कलशब्दा वनस्पतिवृत्तय एवात्र गणे बोध्याः । अन्यत्र तु विगता कला यस्याः सा विकला, निष्कला, पुष्कलेत्येव । शोभनो धर्मो यस्य स सुधर्मा । तस्यापत्यं स्त्री सौधर्मी । ऋष्यणि ङीपः प्राप्तौ ङीषर्थमिह पाठः । कोशातकी पटोली । कल्माषी चित्रवर्णयुक्ता । आस्तरणी करिप्रावारः । आपकी व्यापनशीला । पृथिवी भूमिः । क्रोष्ट्री शृगाली । पटी प्रच्छादनवस्त्रम् । शष्कुली कर्णपाली भक्ष्यविशेषो वा ।

सूद्यते क्वथ्यत इति सूदी । काचित् कोपाग्निना दह्यमानैवं व्यपदिश्यते । कन्दली कन्दविशेषः । निष्कली वनस्पतिः । इष्यते सुवर्णादिमनयेति एषणी

---

१. 'जातेरस्त्रीविषयादयोपधात्' (अ० ४।१।६३) अनेन ङीषोऽप्राप्ताविति भावः ।

तुला । टित्वान्ङीपि प्राप्ते ङीषर्थोऽत्र पाठः । स्वरे भेदः । पुष्करी ओषधिविशेषः । सूर्मी लोहप्रतिमा । यथाह स्मृतिकारः—'सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पग' इति । वल्लकी वीणा । यूथी मागधी । यूषी मण्डः । सुष्ठु सचतीति सुषची । निपातनात् षत्वम्, सुसचेति वा पाठः सुसची । शूर्पी परिपवनं मानविशेषश्च । महती । गौतमी । अणन्तत्वान्ङीपि प्राप्तेऽत्र पाठः ॥९॥

गवयमुकयमेधाः खारलोहाण्डभाण्डाः
कुवलबदरदेहा देहलौद्गाहमानी ।
रजनलवणबिम्बालम्बिमाचोणकानि
वटरगडुलपेशच्छेदपिण्डाः शिखण्डः ॥१०॥

गवयी गोसदृशपशुजातिः । मुकयी मृगजातिभेदः । मेधते सङ्गच्छते पशुरनयास्यां वेति मेधी स्थूणा पशुबन्धनी । खारी षोडशद्रोणपरिमाणा । लोहाण्डी शकुनिविशेषः । स्त्रीविषय एवायम् । भाण्डी भण्डस्य स्त्र्यपत्यम् । कुवली बदरीत्येतौ परस्परपर्यायौ । देही गवादनी, इन्द्रवारुणीनामिका वनौषधिरिति यावत् । देहली अलिन्दः । उद्गाहमानस्य स्त्र्यपत्यमौद्गाहमानी ।

रजनी रात्रिर्हरिद्रा च । "लवणयुक्ता यवागूर्लवणी । गुणशब्दोऽयम् । [बिम्बी तुण्डिका । ] आलम्बस्यापत्यमालम्बी : माची आम्बष्ठी । स्त्रीविषय एवायम् । उणकी पर्यन्तवनस्य संज्ञेयम् । उकणीति अन्ये । वटरी क्षुद्रधान्यम् । बटरीति केचित् । पटरीति अन्ये । गडुली कुब्जा । पेशी अण्डम् । छिद्यतेऽनयेति छेदी परशुः, छुरिका दिवा । पिण्डी अलाबूः, खर्जूरप्रभेदः पिण्डीतगरं च । शिखण्डशब्दाद् बर्हपर्यायाद् अर्शआद्यचि (अ० ५।२।१२७) ङीषि च शिखण्डी मयूरी काचित् स्त्री वा ॥१०॥

कदरकदलपाण्डा मण्डलमन्थरोर्द्या-
स्तरुणतलुनबन्दाः कूदगूर्दौ शमश्च ।
हदवृसमहसोमा मङ्गलालत्विसूचा
अधिकरणसुनन्दावण्डरः सुन्दरश्च ॥११॥

कदरी खदिरः क्रकचं च । केन वायुना दल्यत इति कदली मोचा पाण्डी पाण्डस्य स्त्र्यपत्यम् । पाण्टेति पाठान्तरं पाण्टी पिच्छिलाभिधः

कण्टकिवृक्षः। मण्डली संहृतिर्देशश्च। मन्थरी जडा। ऊर्द्ध्नमूर्द्दी मानः क्रीडा च। तरुणी तलुनी युवतिपर्य्यायावेतौ। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' (सि० कौ० ६५५) इति वार्त्तिकान्ङीबन्तावपीमौ। बन्दी आहवहृता। कूर्द्दते गूर्द्दत इति कूर्द्दी गूर्द्दी च क्रीडापरा। शमी वृक्षविशेषः।

ह्लदी महज्जलाशयम्। वृसो ऋषीणामासनम्। मही भूः। सोमी लताविशेषः। मङ्गली भद्राख्या तिथिः। अलक्षस्य स्त्र्यपत्यमालक्षी। सूची प्रसिद्धा। अधिकरणी आस्थानो। सुनन्दी अण्डरी एतौ योषिद्भेदवचनौ। सुन्दरी शोभनाङ्गी। गुणशब्दोऽयम् ॥११॥

सुमङ्गलान्ङीष् संज्ञायां रोहिणी रेवती च मे।
कृतात्तु श्रेणिवचनेऽनड्वाह्यनडुही वरी ॥१२॥

सुमङ्गली विवाहनेपथ्यभूषिता। तथा च श्रूयते—'सुमङ्गलीरियं वधूरिमां समेत पश्यत' इति। सुलोपाभाव आर्षः। रोहिणी रेवती च नक्षत्रम्। कृती श्रेणिरन्वाकृता। अनड्वाही अनडुही च गौः। प्रत्ययसन्नियोगेन पाक्षिकामागमो निपात्यते। गणे स्त्रीप्रत्ययान्तपाठः पुंवद्भावविरहज्ञापनार्थः। अनडुहीभार्य इति यथा स्यादिति वामनः। तत्र अनडुहीवृन्दारिकेति कर्मधारय उदाहर्त्तुं युज्यते। बहुव्रीहौ तु 'जातेश्च' (अ० ६।३।४१) इति पुंवद्भावप्रतिषेधः सिद्ध एव। वरी दिगम्बरप्रसिद्धा ॥१२॥

पुत्रतर्कारिशक्वण्डकर्करा नाटशातनौ।
कुटाग्रहायणप्रत्यवरोहणगवादनाः ॥१३॥

पुत्री दुहिता। तर्कारी जयाख्यौषधिः। शक्वण्डी हैमवती काचिद् दरी। कर्करी जलभाजनम्। नाटी चतुरङ्गा नाटिका। प्रकरणिकापर्यायः काव्यभेदश्च। शातनी अप्रियंवदा। कुटी पर्णशाला। अग्रे हायनं यस्याः सा आग्रहायणी मार्गशीर्षी पूर्णिमा। दीर्घत्वं णत्वं च निपातनात्। प्रत्यवरुह्यतेऽनयेति प्रत्यवरोहणी सोपानपङ्क्तिः। गवादनी इन्द्रवारुणी ॥१३॥

काकादनस्तेजनायःस्थूणबन्धकघातकाः।
सूपवेतसमेथाश्च ग्रहद् मौरिकिमौलिकी ॥१४॥

काकादनी गुञ्जा। तेजनी ओषधिविशेषः। अयोमयी स्थूणा यस्यासावयःस्थूणस्तस्य स्त्र्यपत्यमयःस्थूणी। शिवाद्यणि ङीपो बाधनार्थमिह पाठः। एवं काकैरद्यते या सा काकादनीत्यादिल्युडन्तानां काकादनप्रकाराणामपि।

बन्धकी कुलटा। घातकी ताम्रपुष्पी। सूपी व्यञ्जनं पाचिका वा। वेतसी वञ्जुलोऽम्लवेतश्च। मेथति वातं हिनस्तीति मेथी ओषधिविशेषः। बृहती वारिधानी, क्षुद्रवार्त्ताकी, आच्छनपटी छन्दोभेदश्च। भुरिकस्य भुलिकस्य च स्त्र्यपत्यं भौरिकी [,भौलिकी] ॥१४॥

भौलिङ्ग्यधिकारापञ्चिकपूलसरोहरीतकास्थानाः ।
मातामहः पितामह इत्ययमाकृतिगणो बुधैः कथितः ॥१५॥

भुलिङ्गस्य स्त्र्यपत्यं भौलिङ्गी। कर एव कारः, अधिकः कारो यस्याः सा अधिकारी पान्था। शोभेति एके। आपच्चिकशब्दो जनपदक्षत्रिययोर्वाचकः। आपञ्चिकानां राज्ञी आपच्चिकस्य राज्ञोऽपत्यं स्त्री वा आपच्चिकी। जनपदशब्दात् क्षत्रियादञ् (अ० ४।१।१६८), तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् तस्य राजन्यपत्यवदञ् (सि० कौ० १६७६) वा 'टिड्ढ' (अ० ४।१।१५) इत्यादिना ङीपि प्राप्ते ङीषर्थोऽत्रास्य पाठः।

पूली तृणसङ्घातः। महत्सरः सरसी। हरीतकी पथ्या। आस्थानी सभा। मातुर्माता मातामही। पितुर्माता पितामही। अयं गौरादिराकृतिगणः। तेन 'शीलम्, छत्रादिभ्यो णः' (अ० ४।४।६१,६२) तपः शीलमस्यास्तापसीत्यादि लवली केतक्यामलकीत्यादि च सिद्धचतीति ध्येयम् ॥१५॥ इति गौरादिः ॥

[अथ बह्वादिः]

'बह्वादिभ्यश्च' (अ० ४।१।४५)। बह्वादिभ्यः शब्देभ्यः स्त्रियां वा ङीष् प्रत्ययो भवतीति तदर्थः। तत्रापेक्षिता बह्वादयः शब्दाः संगृह्यन्ते त्रिभिः पद्यैः।

बहुमुनिकपियष्ठिक्रोडचण्डा ध्वजाही-
कृपणकमलवालाः साधिराधी उदारः।
विकटनखखुराहः शारिवार्यश्च रातिः
शकटिभरुजभङ्गाः पद्धतिश्चाञ्चतिश्च ॥१६॥

बह्वी बहुर्विपुला सङ्घभूता वेत्यर्थः। संख्यायां तु नित्यं बहुवचनान्तो बह्वयः। मुनी मुनिर्मननशीलेत्यर्थः। कपी कपिर्वानरी। यष्ठी यष्ठिर्हारलता भङ्गी वा। क्रोडी क्रोडा वक्षस्थली। चण्डी चण्डा कोपना। ध्वजी ध्वजा पताका। अही अहिः सर्पिणी। कृपणी कृपणा कदर्युः। कमली कमला

श्रीवंराङ्गना वा । वाली वाला हरिद्रा मल्लिकाप्रभेदो नारिकेलतरुर्वा । राधी राधिः संसिद्धिः । साधी साधिः राधिपर्याय एवायम् । शाधीति पाठान्तरम् । तत्र निपातनात् पृषोदरादित्वाद् (अ० ६।३।१०९) वा सस्य शत्वम् । उदारी उदारा वदान्या, महती चतुरा वा ।

विकटी विकटा भयावहा । नखो खुरी उभौ सुगन्धिद्रव्यवचनौ कोल-दलपर्यायौ । अही दिनम् । शारी चित्रवर्णा । वारी वारणबन्धनौ । राती सुखप्रदा सखी । शकटी शकटिर्गोरथः । भरुजी भरुजा काचिद् । भङ्गी रचना । पद्धती पद्धतिः पद्या । अञ्चती अञ्चतिर्गतिः पूजा वा ॥१६॥

**कृदिकारादक्तिन इत्यक्तिन्नर्थात्तु सर्वतोऽप्येके ।**
**अंहत्यङ्कति शक्तिः शस्त्रे कल्याणशफपुराणानि ॥१७॥**

कृदिकारादक्तिन इत्यस्य क्तिन्नन्तभिन्नमिकारान्तं कृदन्तमत्र गणे बोध्यं ततो वा ङीषित्यर्थः । रात्री, रात्रिः । सर्वतोऽक्तिन्नर्थादित्यस्य क्तिन्नर्थाद् भावादन्यत्रार्थे वर्त्तमानात् सर्वस्मात् कृदन्ताद् वा ङीषित्यर्थः । भूमिः, भूमी । इतः प्राण्यङ्गाद् इत्यपि केचित् पठन्ति । प्राण्यङ्गवाचिन इदन्ताद् वा ङीषिति तदर्थः । नाभी, नाभिः=वपुर्मध्यम् । इदं सर्वत इत्यादिना गतार्थम् ।

अंहती अंहतिर्दानम् । अङ्कती अङ्कतिर्लक्षणं बन्धनं वा । उभयोरनयोः समाहारद्वन्द्वे न निर्देशः । शक्ती शक्तिः शस्त्रविशेषः । कल्याणी कल्याणा शोभना । शफी शफा वृक्षमूलम् । पुराणी पुराणा पुरातनी ॥१७॥

**नद्यान्तु चन्द्रभागा त्रिशङ्कटविशालगुदमरालमिति ।**
**बह्वादिराकृतिगणः**

चन्द्रभागा नदी । चन्द्रभागी चन्द्रभागा वाऽन्या । विशङ्कटी विशङ्कटा गहना । विशाली विशाला महती । गुदी गुदा अपानदेशः । अराली अराला कुटिला । आकृतिगणोऽयम् । तेन भगी गलीत्यादि सिद्ध्यति ॥ इति बह्वादिः ॥

## [अथ क्रोडादिः]

'न क्रोडादिबह्वचः' (अ० ४।१।५६) क्रोडा इत्येवमादि यत्स्वाङ्गं यच्च बह्वच्कं स्वाङ्गं तदन्तात् प्रातिपदिकान्ङीष् न भवतीति तदर्थः । तत्रा-पेक्षिताः क्रोडादयः संगृह्यन्ते ।

क्रोडोखा नखशिखा खुरशफं च ।
वालमिति क्रोडादिः स्मृतो बुधैराकृतिगणोऽयम् ॥१८॥

'नना क्रोडं भुजान्तरम्' (अमर० का० २,व० ६, श्लो० २८)इति कोशात् क्रोडाशब्दः स्त्रीलिङ्गः। 'अश्वानामुरः क्रोडा' (सि०कौ० ७३७)इति कौमुदी। कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा वडवा। उत्खजलोत्युखा स्फिक्। प्रशस्तोखा नितम्बिनी। सुनखा, सुशिखा। रम्यखुरा शोभनशफा गौः। ललितवाला सुकेशी।

आकृतिगणोऽयम्। तेन शोभनो भगो यस्याः सा सुभगा, सुगला किसलयकरा, उत्तुङ्गघोणा, भव्यमाला, चित्रा गोखा नेत्रकनीनिका यस्याः सा चित्रगोखेत्यादीनां संग्रहः ॥१८॥ [इति क्रोडादिः ॥]

[अथ शार्ङ्गरवादिः]

'शार्ङ्गरवाद्यञो ङीन्' (अ० ४।१।७३)। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यादिति तदर्थः। तत्रापेक्षिताः शार्ङ्गरवादिशब्दाः संगृह्यन्ते सार्द्धेन पद्यद्वयेन।

शार्ङ्गरववैदगौतमगौग्गुलवारालकाव्यकापटवाः।
ब्राह्मणकैकसपर्येह्येहिवतण्डौदपानचाण्डालाः ॥१९॥

शृङ्गरवो नाम कश्चिद् ऋषिस्तस्यापत्यं स्त्री शार्ङ्गरवी। गोत्रप्रत्ययान्तस्य जातित्वाज्जातिलक्षणं ङीषं बाधित्वा ङीन्। स्वरे विशेषः। एव बिदस्य गोत्रापत्यं स्त्री बैदी। गौतमी। गौग्गुलवी। अराली सजरसाख्यौषधिविशेषः। जातित्वान्ङीष्प्राप्ते ङीनर्थमिह पाठः। काव्यी। टापं बाधित्वा ङीन्। कापटोरपत्यं स्त्री कापटवी। ब्राह्मणी। कैकसी। एषु जातिलक्षणं ङीषं बाधित्वा ङीन्। लोकोत्तरलावण्यगुणोदारा काचिन् मौनिनाऽपि केनचिन्महर्षिणा 'पर्येहि' इति 'एहि' इति चोक्ता सती तयैवाख्यया लोके प्रसिद्धा स्त्री 'पर्येही' 'एही' इत्येव व्यपदिश्यते। वतण्डी, औदपानी, चाण्डाली। अत्र जातिलक्षणो ङीष् प्राप्तः ॥१९॥

ब्राह्मणकृतेयकामण्डलेयमौञ्जायनानिधेयाश्च ।
वात्स्यायनाश्मरथ्यौ शैब्याशोकेयमानिचेयश्च ।
वृद्धिश्चेह नृनरयोर्भोगवद्गौरिमतोस्तु संज्ञायाम् ॥२०॥

ब्राह्मणकृतायाः स्त्र्यपत्यं ब्राह्मणकृतेयी। कमण्डलवाः स्त्र्यपत्यं कामण्ड-

लेयी। उभयत्र 'टिड्ढ' (अ० ४।१।१५) इति ङीपं बाधित्वा ङीन्। मौञ्जायनो मुञ्जस्यापत्यम्। नडादित्वात् (अ० ४।१।९९) फक्। अनिधेरपत्यं स्त्री आनिधेयी। शुभ्रादेराकृतिगणत्वाद् ढक्। वत्सस्य वात्स्यायनी। गर्गादित्वाद् (अ० ४।१।१०५) यञि, 'यञिञोश्च' (अ० ४।१।१०१) इति फक्। अश्मरथस्यापत्यं स्त्री आश्मरथी। गर्गादित्वाद् यञ्। ततो ङीनि 'हलस्तद्धितस्य' (अ० ६।४।१५०) इति यलोपः। शिबेरपत्यं स्त्री शैवी। अत्रापि 'हलस्तद्धितस्य' इति यलोपः। आशोकेयी अशोकायाः स्त्र्यपत्यम्। अनिचायास्त्वानचेयी।

नृनरशब्दाविह स्तः, तयोरादेरचो वृद्धिर्ङीन्सन्नियोगेन नारी। नृत्वनरत्वजात्यविच्छिन्ना स्त्री। भोगवती, गौरिमती। स्त्रीविशेषस्य सञ्ज्ञे इमे। 'ङ्यापोः' (अ० ६।३।६३) इति नित्यं ह्रस्वः ॥२०॥ इति शार्ङ्गरवादिः ॥

[अथ क्रौड्यादिः]

'क्रौड्यादिभ्यश्च' (अ० ४।१।८०)। क्रौडीत्येवमादिभ्यः स्त्रियां ष्यङ् प्रत्ययो भवतीति तदर्थः। अगुरूपोत्तमार्थमनणिञर्थं चेदमारभ्यते। तत्रापेक्षिताः क्रौड्यादयः संगृह्यन्ते पद्यद्वयेन।

क्रौडिव्याड्यापक्षितिसौधातकि यौतकिश्च गौकक्ष्यः।
कापिष्ठलिचैटयतौ सैकयतश्चापिशलिरथो कौटिः ॥२१॥

क्रोडस्यापत्यं स्त्री क्रौड्या। 'अत इञ्' (अ० ४।१।९५)। त्र्यादीनामन्त्यमुत्तममित्युच्यते। गुरूपोत्तमत्वाभावाद् 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' (अ० ४।१।७८) इत्यस्याप्राप्तौ 'क्रौड्यादिभ्यश्च' इति ष्यङ्। ततो 'यङश्चाप्' (अ० ४।१।७४)। एवं व्यडस्य स्त्र्यपत्यं व्याड्या। अपक्षितस्य।पक्षित्या। सुधातुरपत्यं स्त्री सौधातक्या। 'सुधातुरकङ् च' (अ० ४।१।९७) इतीञ्सन्नियोगेन प्रकृतेरकङादेशः। सौधातकिपर्यन्तः समाहारद्वन्द्वः। युतकस्य स्त्र्यपत्यं यौतक्या। गोकक्षस्यापत्यं स्त्री गौकक्ष्या। गर्गादियञन्तात् ष्यङि चाप्।

कापिष्ठल्या। चेटयतीति चेटयन्, सेकयतीति सेकयन्। 'चिट परप्रेष्ये' (धातु० १।२०८), 'सेकृ गतौ' (धातु० १।६६) इति भौवादिकाभ्यां हेतुमण्णौ, शतृप्रत्ययः, ततोऽपत्यार्थेऽणि ष्यङ्। चैटयत्या, सैकयत्या। आपिशल्या। कुटस्य कौट्या ॥२१॥

सूतो युवतौ भोजो नृपतौ शालास्थलिश्च चौपयतः ।
भौरिकिभौलिकिशाल्मलिबैल्वयता इति गणो गदितः ॥२२॥

सूतशब्दो युवतौ वाच्यायां क्रौडयादिर्भवति । सूत्या युवतिः । प्राप्तयौवना स्त्रीत्यर्थः । सूता अन्या । नृपतौ क्षत्रिये वर्त्तमानो भोजः क्रौडयादौ ज्ञेयः । भोज्या क्षत्रिया । शालास्थलस्यापत्यं स्त्री शालास्थल्या । चोपयतीति चोपयन्, तस्य स्त्र्यपत्यं चौपयत्या । भौरिकेः स्त्र्यपत्यं भौरिक्या, भौलिक्या, शाल्मल्या । बिल्ववन्तमाचक्षाणस्य बिल्वयतः स्त्र्यपत्यं बैल्वयत्या । 'तत्करोति, तदाचष्टे' (धातु० १०।३३८, ३३९) इति णिचि, मतुपो लुकि (अ० ५।३।६५), शतरि, अपत्येऽणि, स्त्रियां ष्यङि चाप् ॥२२॥ इति **क्रौडयादिः** ॥

## [अथ अश्वपत्यादिः]

'अश्वपत्यादिभ्यश्च'(अ० ४।१।८४)। एभ्योऽण् प्रत्ययः स्यात् प्राग्दीव्यतीयेष्वर्थेष्विति तदर्थः । पत्युत्तरपदाद् (अ० ४।१।८५) विहितस्य ण्यस्यापवादः । ते चाश्वपत्यादयः पद्यद्वयेन संगृह्यन्ते ।

अश्वस्थानपशुक्षेत्रधान्यप्राणसभागृहाः ।
शतधन्वकुलं राष्ट्रं गणज्ञानधनानि च ॥२३॥
कर्मबन्धू तथा यज्ञ एभ्यो यदि पतिः परः ।
सोऽश्वपत्यादिरुद्दितो गणः सिद्धान्तवेदिभिः ॥२४॥

अश्वपतेरपत्यादि आश्वपतम्, स्थानपतम्, पाशुपतम्, क्षैत्रपतम्, धान्यपतम्, प्राणपतम्, साभापतम्, गार्हपतम्, शातपतम्, धान्वपतम्, कौलपतम्, राष्ट्रपतम्, गाणपतम्, ज्ञानपतम्, धानपतम्, कार्मपतम्, बान्धुपतम्, याज्ञपतम् ॥२३,२४॥ इति **अश्वपत्यादिः** ॥

## [अथ उत्सादिः]

'उत्सादिभ्योऽञ्' (अ० ४।१।८६) । उत्स इत्येवमादिभ्यः प्रातिपदिकेभ्योऽञ्प्रत्ययः स्यात् प्राग्दीव्यतीयेष्वर्थेष्विति तदर्थः । तत्रापेक्षिता उत्सादिशब्दाः संगृह्यन्ते सार्द्धेन पद्यद्वयेन ।

उत्सोशीनरभल्लकायविकरा धेनूदपानोष्णिहः
पञ्चालः पृथिवी महानदपृथे इन्द्रावसानः कुरुः ।

सत्वद्ग्रीष्मरथन्तरं जनपदो मध्यन्दिनानुष्टुभौ
त्रिष्टुप्पङ्क्तिमहानसाश्च भरतो ज्ञेयः सुवर्णः ककुप् ॥२५॥

उत्सस्यापत्यादि औत्सः, औशीनरः, भाल्लकायः, वैकरः, धैनवः, औदपानः, औष्णिहः, पाञ्चालः। पृथिव्या अयं पार्थिवः, माहानदः। पार्थः पृथाया अपत्यम्। इन्द्रावसानो नाम वाहीकग्रामः, तस्यायमैन्द्रावसानः। कुरुषु भवः कौरवः।

सत्वतोऽपत्यं सात्वतः। ग्रीष्मे भवो ग्रैष्म ऊष्मा। रथन्तरो नाम राजा साम वा, तदपत्यं तत्र भवो वा राथन्तरः। जानपदः, माध्यन्दिनः, आनुष्टुभम्, त्रैष्टुभम्, पाङ्क्तं सूक्तम्। माहानसोऽग्निः। भारतं वर्षम्। सौवर्णोऽलङ्कारः। काकुभम् ॥२५॥

जगती ततश्च देवो तरुणस्तलुनो महन्महाप्राणौ।
विनदबृहत्पीलुकुणा वृषदंशो वष्कयाऽसे च ॥२६॥

जगत्या इदं जागतम्, दैवम्, तारुणः, तालुनः, माहतः, माहाप्राणः। वैनदः, बार्हतः, पैलुकुणः, वृशदंशो मार्जारस्तस्य वार्षदंशः। वष्कयशब्दोऽसेऽसमासेऽञं लभते। वष्कयस्यापत्यं वाष्कयः। समासे तु सौवाष्कयिः ॥२६॥

देशे तूदस्थानः सूरिभिरयमुदित उत्सादिः ॥२७॥

देशे वर्तमान उदस्थानशब्दोऽञं लभते। उदस्थाननाम्नि देशे भव औदस्थानः। उदस्थानो नाम कश्चित् तस्य त्वौदस्थानिः ॥२७॥ इति उत्सादिः॥

[अथ बाह्वादिः]

'बाह्वादिभ्यश्च' (अ० ४।१।९६)। बाहु इत्येवमादिभ्योऽपत्येऽर्थे इञ् प्रत्ययो भवतीति तदर्थः। तत्रापेक्षिता बाह्वादयश्चतुर्भिः पद्यैः संगृह्यन्ते।

बाहूपबाहुकुशला उपबाकुमाघौ
प्रद्युम्नसाम्बगदकृष्णमरीचिरामाः।
जङ्घा तथा शिरउदङ्कनिवाकुपञ्च-
सप्ताष्टपुष्करसदो ध्रुवकाबलाके ॥२८॥

बाधते परबलमिति बाहुर्नाम कश्चिद् राजा, तस्यापत्यं बाहविः। औपबाहविः, कौशलिः, औपबाकविः। माघस्यापत्यं माघिः। अदन्तत्वेनेञि

सिद्धे ऋष्यणो (अ० ४।१।११४) बाधनार्थमिह पाठः । एवं सर्वत्रादन्तेषु 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (अ० ४।१।११४) इति प्राप्तस्याणो बाधनं पाठ-प्रयोजनं द्रष्टव्यम् । प्रद्युम्नस्य प्राद्युम्निः । अम्बया सह वर्तत इति साम्बस्त-स्यापत्यं साम्बिः । [गादिः ।] कृष्णस्य कार्ष्णिः । एषां वृष्णित्वादण् प्राप्तः । मरीचेर्ऋषेर्मारीचिः । रामस्य रामिः ।

जङ्घाया जाङ्घिर्नृपः । शिर इत्यनेन तदन्तग्रहणं केवलस्यापत्यास-म्भवात् । स्थूलशिरसो मुनेरपत्यं स्थौलशीर्षिः । औदङ्किः, नैवाकविः, पञ्चा-नामपत्यं पाञ्चिः, साप्तिः, आष्टिः । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिः । ध्रुवकाया ध्रौवकिः । बलाकाया बालाकिः ॥२८॥

चूडोपबिन्दुवृषलीध्रुवकाः शिवाकुप्राकारमर्दिखरनादिशराविणश्च ।
लोमार्जुनानुहरतश्छगलासुमित्राजीगर्त्तसत्यकयुधिष्ठिरमूषिकाश्च॥२९॥

चूडायाश्चौडिः । औपबिन्दविः । वृषल्या वार्षलिः । ध्रुवकाया ध्रौवकिः । शैवाकविः । प्राकारं मर्दयतीति प्राकारमर्दी, तस्यापत्यं प्राकारमर्दिः । खरवन्न-दतीति खरनादी, तस्यापत्यं खारनादिः । शराविणः शाराविः ।

लोमशब्देन तदन्तग्रहणं शिरःशब्दवत् । उडुलोम्नोऽपत्यमौडुलोमिः । अर्जुनस्यार्जुनिः । अयं कुरुवंश्यः । अनुहरत आनुहरतिः । छगलायाश्छागलिः । सुमित्रायाः सौमित्रिः । अजीगर्त्तस्यर्षेराजीगर्त्तिः । सात्यकिर्वृष्णिवंश्यः । यौधिष्ठिरिः कुरुवंश्यः । मूषिकायां मौषिकिर्ऋषिः ॥२९॥

दुमित्रा संज्ञायां तूदकममितौजसः सलोपश्च ।
वृकलाग्निवर्म्मशृङ्खलतोदिनगरमर्दिनोऽम्भसो लोपश्च ॥३०॥

दौमित्रिः क्षत्रियः । औदकिः कश्चिद् ऋषिः । अमितमोजो बलं यस्य तस्यापत्यमामितौजिः कश्चिन्नृपः । वृकलाया वार्कलिः । आग्निवर्म्मिः । शृङ्खलानि तुदति मोचयतीति शृङ्खलतोदी नृपस्तस्य शार्ङ्खलतोदिः । नगरं मर्दयतीति नगरमर्दी तस्यापत्यं नागरमर्दिः । अम्भसो लो लोपः, चशब्दात् सम्भूयसोऽपि, स च लोऽन्त्यस्य । आम्भिः, साम्भूयिः ॥३०॥

क्षेमवृद्धिर्देवशर्म्मा सुशर्म्मा भद्रशर्म्मणा ।
कुनामा सोर्नामधामाऽयमाकृतिगणो मतः ॥३१॥

क्षैमवृद्धिः, दैवशर्म्मिः, सौशर्म्मिः, भाद्रशर्म्मिः । कुनाम्नोऽपत्यं कौनामिः।

एवं सौनामिः, सौधामिः । आकृतिगणोऽयम्, तेन ऐन्द्रशर्म्मिः, राजधेनविरित्याद्यूह्यम् ।।३१।। [इति बाह्वादिः ।।]

[अथ कुञ्जादिः]

'गोत्रे कुञ्जादिभ्यश्चफञ्' (अ० ४।१।६८) । कुञ्जेत्येवमादिभ्यः शब्देभ्यो गोत्रलक्षणापत्येऽर्थे चफञ् प्रत्ययः स्यादिति तदर्थः । अपत्यं पौत्रप्रभृति यत्तद् गोत्रमिति व्यपदिश्यते । त इमे कुञ्जादय एकेन पद्येन संगृह्यन्ते ।

कुञ्जब्रध्नशुभस्कन्दलोमस्कम्भाः शठो गणः ।
भस्मशङ्खविपाशश्च शाकः शुण्डेत्ययं गणः ।।३२।।

कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः । 'व्रातचफञोरस्त्रियाम्' (अ० ४।३।११३)इत्यनेन चफञन्तात् स्वार्थे ञ्यः प्रत्ययः, स्त्रियां तु नायम्, कौञ्जायनी । गोत्रप्रत्ययान्तत्वेन जातित्वान्ङीष् । बहुत्वे तु ञ्यस्य तद्राजत्वाल्लुक् । कुञ्जस्य गोत्रापत्यानि पुमांसः कौञ्जायनाः । गोत्रे इत्युक्तेरनन्तरापत्ये कौञ्जिः, ब्राध्निरित्याद्येव । एवं ब्राध्नायन्यः । [शौभायन्यः, स्कान्दायन्यः, लौमायन्यः ।] [1]केचित् तु लोमान्तादेव, न लोम्न इति मन्यन्ते । तन्मत औडुलोमायन्यः । स्काम्भायन्यः, शाठायन्यः, गाणायन्यः, भास्मायन्यः, शाङ्खायन्यः। विगतः पाशः संसृति बन्धनं यस्य स विपाशस्तस्य गोत्रापत्यं वैपाशायन्यः । शाकायन्यः । शौण्डायन्यः । दिङ्मात्रमुदाह्रियते—

'कौञ्जायनास्तापसकुञ्जरास्ते ब्राध्नायना ब्रध्नसमानशीलाः ।
गाणायना गाणपतव्रतस्थाः शाठायनाः शाठ्यविहीनवाचः ।।'[2] इति

।।३२।। [इति] कुञ्जादिः ।।

---

१. इतः पूर्वं किञ्चित् पाठस्त्रुटितः प्रतिभाति ।

२. तुलना करणीया —

ऐक्षन्त कुञ्जानुपसृत्य कौञ्जायन्यादयोऽर्थिवधूवधूट्यः ।
कौञ्जायनाः पार्थिवकुञ्जरं तं ब्राध्नायनाश्चातिकुतूहलेन ।।१।।
शाङ्खायनाः शङ्खकशोभिहस्ता भास्मायना भास्वरहेमभासः ।
गाणायना गाणपतव्रतस्थाः शाकायनाः शङ्करभक्तिभाजः ।।२।।
शौण्डायना मार्जनकर्मशौण्डाः शाठायनाः शाठ्यविहीनवाचः ।
स्काम्भायनाः स्कम्भितमन्मथास्त्राः शौमायनाः शोभनवल्गुवाचः ।।३।।

[अथ नडादिः]

'नडादिभ्यः फक्' (अ० ४।१।९९) । एभ्यो गोत्रापत्येऽर्थे फक् प्रत्ययः स्यादिति तदर्थः । त इमे नडादयः पञ्चभिः पद्यैः संगृह्यन्ते ।

नडश्चरो बको मुञ्ज उपको लमकस्तिकः ।
दासमित्रेतिकप्राणा द्वीपकिङ्करकातराः ॥३३॥

नडस्य गोत्रापत्यं पुमान् नाडायनः । अनन्तरमपत्यं तु नाडिः । एवं चरस्य चारायणः, बाकायनः, मौञ्जायनः, औपकायनः, लामकायनः, तैकायनः, दासायनः, मैत्रायणः । दासा मित्राणि यस्य स दासमित्रस्तस्य गोत्रापत्यं दासमित्रायण इति केचित् । इतिकस्यैतिकायनः, प्राणायनः । उपचाराद् द्वीपस्थो मुनिर्द्वीपस्तस्य द्वैपायनः । द्वीपेत्येवं नाम्नी काचित् स्त्रीति एके । कैङ्करायणः । कातरायणः ॥३३॥

[1]चटकखरपशोणाः काश्यपः काश्यकाव्यौ
सुमतविमतदुर्गा ब्रह्मदत्ताऽजलोहाः ।
तृणबदरकुमारस्तम्भदण्ड्यग्रचित्रा-
श्चमसिशकटपिण्डा इन्धजालन्धरौ च ॥३४॥

चाटकायनः, खारपायणः, शौणायनः, काश्यपायनः, [काश्यायनः, काव्यायनः, सौमतायनः, वैमतायनः, दौर्गायणः ।]ब्रह्मणा दत्तो ब्रह्मदत्तस्तस्य ब्राह्मदत्तायनः । आजायनः । लौहायनः । अलोहशब्दं केचित् पठन्ति । तन्मते आलोहायनः ।

तार्णायनः, बादरायणः,[कौमारायणः,]स्ताम्भायनः । स्ताम्बायन इति अन्ये । दण्डिनो गोत्रापत्यं दाण्डिनायनः । 'नस्तद्धिते' (अ० ६।४।१४४) इति टिलोपस्तु 'दाण्डिनायनहास्तिनायन' (अ० ६।४।१७४)इत्यादिना निपातनान्न भवति ।[आग्रायणः, चैत्रायणः ।]चमसिनश्चामसायनः । शकटमिव यो भार-

---

स्कान्दायनाः स्कन्दमहौजसं वैपाशायनाः पाशभृतोपमेयम् ।
प्रियौडुलोमायनमौडुलोमायन्यं तमालोक्य न तृप्तिमायुः ॥४॥
(गण० पृ० १५६-१५७)

१. अनुदाहृतशब्दानां विषये द्र०—पृ० १०२, पं० २८ ।

क्षमस्तस्य शाकटायनः । [पैण्डायनः, ऐन्धायनः,] जालन्धरायणः । जानन्धरायण इति भोजः ॥३४॥

**कामुकोदुम्बरौ सायकः किङ्कलः कातलः स्वप्नलः पिङ्गलः पिङ्गरः ।**
**हंसको दण्डपामुष्यहस्त्यध्वराः शिंशपाकाथलब्राह्मणास्त्राऽश्वलाः॥३५॥**

कामुकायनः । कामकायन इति केचित् । औदुम्बरायणः, [सायकायनः, कैङ्कलायनः, कातलायनः,] स्वाप्नलायनः, [पैङ्गलायनः, पैङ्गरायणः । हांसकायनः,] दण्डं पातीति दण्डपस्तस्य दाण्डपायनः । दण्डमशब्दं केचित् पठन्ति । दण्डेन मिमीते इति दण्डमस्तस्य दाण्डमायनः । अमुष्य गोत्रापत्यं पुमानामुष्यायणः । गणपाठे षष्ठयन्तनिर्देशाद् विभक्त्यलुक् । हास्तिनायना दाण्डिनायनवत् । [आध्वरायणः ।] शिंशपायाः शैंशपायनः । [काथलायनः, ब्राह्मणायनः, आस्त्रायणः ।] अश्वं लातीत्यश्वलस्तस्याश्वलायनः ॥३५॥

**क्रोष्टुशलङ्क्वोर्लोपः कृष्णो विप्रे रणस्तु वासिष्ठे ।**
**लिगुपञ्चालामित्रा इतिशयुगन्धरनरस्थिरकाः ॥३६॥**

क्रोष्टु शलङ्कु एतयोरन्त्यस्य लोपः । क्रौष्टायनः, शालङ्कायनः । कार्ष्णायनो ब्राह्मणः । कार्ष्णिरन्यः । राणायनो वासिष्ठः । राणिरन्यः । लैगवायनः । पञ्चालो गोत्रवाची ब्राह्मणस्तस्य पाञ्चालायनः । क्षत्रियवाचिनस्तु पाञ्चालः । नास्ति मित्रं यस्यासावमित्रस्तस्यामित्रायणः । इतिशस्यैतिशायनः । यौगन्धरायणः । 'नरो' नाम कश्चिद् ऋषिस्तस्य गोत्रापत्यं नारायणः । स्थैरकायणः ॥३६॥

**अग्निशर्मा वृषगण ऋग्लङ्कौ सुमनस्तथा ।**
**एक इत्युदिताः शब्दा नडादौ शब्दवेदिभिः ॥३७॥**

वृषगणे ऋषिगणे वर्त्तमानोऽग्निशर्मन्शब्दो नडादौ बोध्यः । अग्निशर्मण ऋषेर्गोत्रापत्यमाग्निशर्मायण इति वृत्तिमतम् । गणरत्नमहोदधौ तु वृषगणशब्दोऽपि नडादिरिति स्थितम् (गण० पृ० १५०) । तदनुरोधाद् वृषगण इति प्रथमान्तं बोध्यम् । वार्षगणायनः । ऋग्वेदाध्यापक कश्चिद् आचार्योऽप्युपचाराद् ऋक् तस्य गोत्रापत्यमार्चायनः । आर्गायण इति तु **वर्द्धमानः** । तत्र पदसंज्ञा मृग्या । लाङ्कायनः, सौमनसायनः, ऐकायनः ।

अनुदाहृताः प्रक्रियानुसारेणोहनीयाः । आकृतिगणोऽयमिति **वर्द्धमानः** (गण० पृ० १५२) । दिङ्मात्रमुदाह्रियते—

**'नाडायनो व्रीड जडां स्वपत्नीं चारायणीं चित्रकथां ब्रवीति ।
किमंतिशायन्यसि नीरसा त्वं सख्यैतिकायन्यतिकौतुकं मे ॥'' ॥३७॥**

**इति नडादिः ॥**

## [अथ हरितादिः]

**'हरितादिभ्योऽञः'** (अ० ४।१।१००) । एभ्योऽञन्तेभ्यो यून्यपत्ये फक् प्रत्ययो भवतीति तदर्थः । अत्र सूत्रे सत्यपि गोत्राधिकारे सामर्थ्याद् यून्ययं फक्, नहि गोत्रादपरो गोत्रप्रत्ययो भवति **'एको गोत्रे'** (अ० ४।१।९३) इति नियमात् । विदाद्यन्तर्गतोऽयं हरितादिः स च पद्यद्वयेन संगृह्यते ।

**हरितरथीतरबध्योगवैष्णुवृद्धार्कलूषवह्यस्काः ।
किन्दासप्रतिबोधाऽलसशबररथन्तरनिषादाः ॥३८॥**

हरितस्य गोत्रापत्यं हारितः । युवापत्यं हारितायनः । एवं राथीतरः, राथीतरायणः । बाध्योगः, बाध्योगायनः । वैष्णुवृद्धः, वैष्णुवृद्धायनः । आर्कलूषः, आर्कलूषायणः । वाह्यस्कः, वाह्यस्कायनः । कैन्दासः, कैन्दासायनः । प्रातिबोधः, प्रातिबोधायनः । आलसः, आलसायनः । शाबरः, शाबरायणः । राथन्तरः, राथन्तरायणः । नैषादः, नैषादायनः ॥३८॥

**पुत्रपुनर्भूमठरा मृदुदुहितृगविष्ठिरा ननान्दा च ।
परशुः परस्त्रिया अथ मृंडाकुरत्रास्ति स पृडाकुः ॥३९॥**

पौत्रः, पौत्रायणः । पौनर्भवः, पौनर्भवायणः । माठरः, माठरायणः । मार्दवः, मार्दवायनः । दौहित्रः, दौहित्रायणः । गाविष्ठिरः, गाविष्ठिरायणः । नानान्द्रः, नानान्द्रायणः ।

परस्त्रीशब्दस्यात्रसन्नियोगेन परशु इत्यादेशः । परा अन्यजातीया चासौ स्त्री च परस्त्री । तस्या अपत्यं पारशवः, पारशवायनः । बह्वपत्यविवक्षायां तु **'यञञोश्च'** (अ० २।४।६४) इति गोत्रप्रत्ययस्य लुकि परश्वादेशाभावः **'सन्नियोगशिष्टयोरन्यतरापाये उभयोरप्यपायः'** (द्र०–सि० कौ० १८४८-२) इति न्यायात् । तथा च परस्त्रियो गोत्रापत्यानि पुमांसः परस्त्रिय इत्येव साधु । एवं बहुष्वपत्येषु हरिताः, रथीतराः, बध्योगा इत्यादि बोध्यम् ।

---

१. तुलना करणीया—गण० पृ० १५० । तत्रानेके श्लोका उदाहरणरूपेण निर्दिष्टाः ।

मृडाकोर्मार्डाकिवः, मार्डाकिवायनः। एवं पृडाकोऽपि ज्ञेयम् ॥३९॥ इति हरितादिः ॥

[अथ बिदादिः]

'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (अ० ४।१।१०४)। बिदादिगणस्थेभ्यः शब्देभ्यो गोत्रेऽञ् प्रत्ययः स्यात्, ये त्वत्राऽनृषयस्तेभ्योऽनन्तरापत्य इति तदर्थः। तत्रापेक्षिता बिदादयः पद्यत्रयेण संगृह्यन्ते।

बिदोर्वकिन्दर्भकिरातधेनुविश्वानरा भाजनकश्यपौ च।
अश्वावतानः प्रियकोपमन्यू हर्यश्वबिन्दू कुशिकर्ष्टिषेणौ ॥४०॥

बिदस्य गोत्रापत्यं पुमान् बैदः। अपत्यानां बहुत्वे तु 'यञञोश्च' (अ० २।४।६४) इति लुकि बिदाः। एवमुर्वस्यौर्वः, और्वौ, उर्वाः। किन्दर्भस्य कैन्दर्भः, कैन्दर्भौ, किन्दर्भाः। किदर्भ [इति] शाकटायनः, बिदर्भ इति भोजः। कैरातः। कैलात इति केचित्। धैनवः। अयमृषिवचनः, उत्सादौ (अ० ४।१।८६) तु नवप्रसूतिकावचनः। वैश्वानरः, भाजनः, काश्यपः। अथ कथं 'काश्यपिर्गरुडाग्रजः' (अमर० का० १, व० ३, श्लो० ३३) इत्यमरः? बाह्वादेः (अ० ४।१।९६) आकृतिगणत्वाद् भविष्यति।

आश्वावतानः, प्रैयकः, औपमन्यवः, [हार्यश्वः, बैन्दवः, कौशिकः,] ऋष्टिषेणस्यार्ष्टिषेणः ॥४०॥

ऋतभागभरद्वाजाऽपस्तम्बाः शिग्रुभोगकौ।
कूर्चवारो गोपवनश्यामाकशमिकास्तथा ॥४१॥

आर्त्तभागः, [भारद्वाजः, आपस्तम्बः,] शैग्रवः, [भौगकः। कौर्चवारः, गौपवनः,] श्यामाकस्य श्यामाकः, शमिकस्य शामिकः। श्यामक इति अन्ये ॥४१॥

शरद्वच्छुनकश्यावलयः श्यापर्ण इत्ययम्।
बिदादिरस्यावयवो हरितादिर्बुधैः स्मृतः ॥४२॥

शारद्वतः, शौनकः, श्यावलेः श्यावलः, [श्यापर्णः]। अनुदाहृता ऊहनीयाः। अस्य बिदादेरवयवोऽन्तर्गणो हरितादिः समनन्तरोक्तो वेदितव्यः। तत्र निषादपुत्रपुनर्भूदुहितृननान्दृपरस्त्रियोऽत्र च किरातधेनुऋष्टिषेणप्रभृतयोऽनृषयः। तेभ्योऽनन्तरापत्ये प्रत्ययः।

अत्रायं विवेकः—ऋषिवाचिभ्य ऋष्यणि प्राप्ते, ऋष्टिषेणात् शिवादित्वेनाण्येव प्राप्ते, अनृषिभ्योऽदन्तेभ्योऽत इञि, परस्त्रिया ढकि प्राप्तेऽत्र पाठ इति ॥४२॥ इति बिदादिः ॥

[अथ गर्गादिः]

'गर्गादिभ्यो यञ्' (अ० ४।१।१०५)। एभ्यो यञ् स्याद् गोत्र इति तदर्थः। ते च गर्गादयः संगृह्यन्ते पद्यैश्चतुर्भिः।

गर्गो वत्सविरोहितौ शकशटप्राचीनयोगाऽवटा
वृक्षो रेभधनञ्जयाजचमसा विश्वावसुः सङ्कृतिः।
शङ्खागस्तिपुलस्तिपिङ्गलभिषग्भिष्णङ्मनोमन्त्रिता
जातूकर्णपराशरोक्थविद्भृत्कृष्णाग्निवेशा अपि ॥४३॥

गर्गस्य गोत्रापत्यं गार्ग्यः। अत्रापि बह्वपत्यविवक्षायां 'यञञोश्च' (अ० २।४।६४) इति लुक्, गर्गाः। एवं वत्सस्य वात्स्यः, वात्स्यौ, वत्साः। वैरोहित्यः, शाक्यः, शाट्यः, प्राचीनयोग्यः, आवट्यः, वार्क्ष्यः, रैभ्यः, धानञ्जय्यः, आज्यः, चामस्यः, वैश्वावसव्यः, साङ्कृत्यः।

शाङ्ख्यः। अगं विन्ध्याचलं स्तम्भयतीति अगस्तिः। कुम्भसम्भव ऋषिः। औणादिक इप्रत्ययष्टिलोपश्च। अगस्तेर्गोत्रापत्यमागस्त्यः। बहुष्वपत्येषु यञो लुकि अगस्तयः। पुलस्तेः पौलस्त्यः। पुलस्त्य इत्यपि प्रकृत्यन्तरमस्ति। तस्यापि गर्गादित्वे पुलस्तिशब्दपाठ एवोपलक्षणम्। अत एव रामायणादौ रावणे पौलस्त्यपदं प्रयुज्यमानमुपपद्यते। न च पुलस्तिपदेन तस्योपपत्तिरिति वाच्यं

'पुलस्त्योऽजनयत् पत्न्यामगस्त्यं च हविर्भुवि।
सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः॥
तस्य यक्षपतिर्देवः कुबेरस्त्वडविडासुतः।
रावणः कुम्भकर्णश्च तथाऽन्यस्यां विभीषणः॥'

(श्रीमद्भागवते स्कन्धे ४, अ० १, श्लो० ३६,३७)

इति श्रीमद्भागवतविरोधात्,

'पतीन् प्रजानामसृजं महर्षीनादितो दश।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्॥' (मनु० १।३४-३५)

इति मनुस्मृतिविरोधाच्च। यद्यपि पुलस्त्यस्य ऋषित्वादणि पौलस्त्य इत्येव स्यात्तथापि यञभावे रूपान्तरमनिष्टमापद्येत। तथाहि यञन्तस्य स्त्रियां पौल-

स्त्यायनी, अणन्तस्य तु पौलस्तीत्येव। बहुष्वपत्येषु यञो लुकि पुलस्त्याः, ऋष्यणस्तु लुगभावात् पौलस्त्या इति विभावनीयम्।

पिङ्गलस्य पैङ्गल्यः, भैषज्यः, भैष्णज्यः, मानस्यः, मान्त्रत्यः, जातूकर्ण्यः, पाराशर्यः, औक्थ्यः, वैदभृत्यः, कार्ष्ण्यः, आग्निवेश्यः ॥४३॥

गोकक्षैकरहूगणा वृषगणः स्थूरारराकैलका
गोलन्दानडुहौ चिकित्सिततितिक्षौ व्याघ्रपाद् भण्डितः।
धूमोलूकसुलामिनः समुसलः स्याद् यज्ञवल्कोऽभया-
ज्जातो मुद्गलपूतिमाषचुलका दल्मस्तथा भण्डिलः ॥४४॥

गौकक्ष्यः, ऐक्यः, राहूगण्यः, वार्षगण्यः, स्थौर्यः, आरराक्यः, राराक्य इति केचित्। ऐलक्यः, ऐलाक्य इति अन्ये। गौलन्द्यः, आनडुह्यः, चैकित्सित्यः, तैतिक्ष्यः, वैयाघ्रपाद्यः, [भाण्डित्यः। धौम्यः, औलूक्यः,] सौलाम्यः, मौसल्यः, याज्ञवल्क्यः, आभयजात्यः, [मौद्गल्यः,] पौतिमाष्यः, पौतीमाष्य इति अन्ये। [चौलक्यः, दाल्म्यः, भाण्डिल्यः] ॥४४॥

चेकितमडिताश्मरथा जमदग्निः शर्कराक्षबृहदग्नी।
चणकैकलूसुलोहीन्द्रहूः कुरुकतकुटीगुजरमाणाः ॥४५॥

चैकित्यः, [माडित्यः,] आश्मरथ्यः। जमदग्नेर्गोत्रापत्यं जामदग्न्यः। कथं रामो जामदग्न्य इति? अनन्तरापत्ये गोत्रत्वोपचाराद् भविष्यति। [शार्कराक्ष्यः, बार्हदग्न्यः, चाणक्यः,] ऐकलव्यः। पिप्पलूशब्दोऽप्यत्र कैश्चित् पठ्यते। [सौलोह्यः,] इन्द्रह्वो गोत्रापत्यमैन्द्रहव्यः, कौरुकत्यः, कौटीगव्यः[1], [जारमाण्यः] ॥४५॥

कुण्डिनी पर्णवल्कोऽगस्त्यो वाजोऽसेऽथ देवहूः।
गर्गादिरयमस्यैवान्तर्गणो लोहितादिकः ॥४६॥

कुण्डिन्या अपत्यं कौण्डिन्यः, कौण्डिन्यौ। बह्वपत्यविवक्षायां यञो लुकि 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' (अ० २।४।७०) इत्यनेन कुण्डिनादेशः, कुण्डिनाः। [पार्णवल्क्यः।] अगं विन्ध्याचलं स्त्यायति संहतं करोतीति

---

१. 'इन्द्रहूगोत्रापत्यमैन्द्रहवः, कौरुकतः, कौटीगवः' इत्यशुद्धोः पाठो हस्तलेखे।

अगस्त्यः, 'आतोऽनुपसर्गे कः' (अ० ३।२।३), तस्य आगस्त्यः, आगस्त्यौ, अगस्तयः। बहुष्वगस्तीत्यादेशः। वाजशब्दोऽसेऽसमासे गर्गादिः, वाज्यः। समासे तु सुवाजस्य सौवाजिः। असे इत्यस्योपलक्षणत्वाद् अन्येषामपि गणपठितानामसमास एव प्रत्ययः। तेन पारमगर्गिरित्यादीति गणरत्नमहोदधौ वर्द्धमानः। देवह्वोऽपत्यं दैवहव्यः।

अस्य गर्गादेरेवान्तर्गणो लोहितादिः। 'सर्वत्र लोहितादिकतन्तेभ्यः' (अ० ४।१।१८) इत्यस्य व्याख्याने उक्तः (द्र०—पृ० ८७, पं० १०)। तेन लोहितस्य गोत्रापत्यं पुमान् लौहित्य इत्याद्युदाहर्त्तव्यम् ॥४६॥ [इति गर्गादिः।]

[अथ अश्वादिः]

'अश्वादिभ्यः फञ्' (अ० ४।१।११०)। एभ्यः फञ् स्याद् गोत्र इति तदर्थः। तत्रापेक्षिता अश्वादयः संगृह्यन्ते चतुर्भिः पद्यैः।

अश्वप्राच्यौ चपलसुमनोग्रीष्मधूम्राः पवित्रो
धर्म्यो बैल्वार्जुनगिरिजनाः क्षान्तकाशौ विशालः।
गोमी वाग्मी प्रहृतकितवौ चक्ररामोदपादाः
खर्जूरार्कस्वरशिवविदाः शङ्खखञ्जारबस्ताः ॥४७॥

अश्वस्य गोत्रापत्यमाश्वायनः। बिदादित्वाद् अञपि—आश्वः। प्राच्यायनः, चापलायनः, सौमनसायनः। ग्रैष्मायणः, अस्योत्सादावनन्तरापत्यार्थोऽनपत्यार्थश्च पाठः। एवमुत्सशब्दस्यापि। धौम्रायणः, पावित्रायणः, [धार्म्यायणः, बैल्वायनः,] आर्जुनायनः, गैरायणः, [जानायनः, क्षान्तायनः, काशायनः, वैशालायनः]।

गोमिनो गौमायनः। [वाग्मिनो वाग्मायनः, प्राहृतायनः, कैतवायनः, चाक्रायणः,] रामोदायनः, [पादायनः, खार्जूरायणः,] आर्कायणः, [स्वारायणः,] शैवायनः। शिवादित्वादणपि—शैवः। बैदायनः। बिदादित्वादञपि—बैदः। शाङ्खायनः। गर्गादित्वात् शाङ्ख्योऽपि। खाञ्जारायणः, [बास्तायनः] ॥४७॥

विश्वानरो भण्डिलशूद्रकोत्साऽतवस्फुटा धन्यपुटश्रविष्ठाः।
वदाश्मतीक्ष्णाः खदिरः खडाहंजडा मनःप्रान्तचुपाः पविन्दः ॥४८॥

वैश्वानरायणः, [भाण्डिलायनः,] शौद्रकायणः, [औत्सायनः,] आत-

वस्यातवायनः, स्फ़ोटायनः। 'अवङ् स्फोटायनस्य' (अ० ६।१।१२३) इति सूत्रे स्फोटोऽयन यस्येत्यर्थे स्फोटायनः शब्दान्तरम् । [धान्यायनः, पौटायनः, श्राविष्ठायनः, वादायनः, आश्मायनः, तैक्ष्णायनः,] खादिरायणः, [खाडायनः, आर्ह्यायणः, जाडायनः,] मानसायनः, [प्रान्तायनः, चौपायनः, पाविन्दायनः] ॥४८॥

पिञ्जूलप्रकृतभडिलकिता भरद्वाज आत्रेये ।
शप आत्रेयन्तु भरद्वाजे जातस्तु पुंसि गोलाङ्कः ॥४६॥

पैञ्जूलायनः, [प्राकृतायनः,] भाडिलायनः, [कैतायनः,] भारद्वाजायन आत्रेयश्चेत् । भारद्वाजिः अन्यः । शापायनः । आत्रेयायणो भारद्वाजश्चेत् । आत्रेयिः अन्यः । जातस्य जातायनः । पुंसीति विशेषणाज्जाताया अपत्यं जातेय एव । गौलाङ्कायनः ॥४६॥

रोहिणभण्डितभडितविशम्पदासककुटानडुह्याश्च ।
ध्वनधूमाविति गदितोऽश्वादिगणः शब्दतत्त्वज्ञैः ॥५०॥

रौहिणायनः, [भाण्डितायनः, भाडितायनः, वैशम्पायनः,] दासकायनः, [कौटायनः,] आनडुह्येति गर्गादियञन्ताद् गोत्रे फञोऽसम्भवेन सामर्थ्याद् यून्ययम् । अनडुहो युवापत्यमानडुह्यायनः । एवं बैल्वशब्देऽपि ज्ञेयम् । ध्वानायनः, धौमायनः । अत्रानुदाहृताः प्रक्रियानुसारेणोह्नीयाः ॥५०॥ इति अश्वादिः ॥

[अथ शिवादिः]

'शिवादिभ्योऽण्' (अ० ४।१।११२) । एभ्योऽपत्येऽर्थेऽण् प्रत्ययः स्यादिति तदर्थः । तत्रापेक्षिताः शिवादयः सगृह्यन्ते षड्भिः पद्यैः ।

शिवप्रोष्ठद्रुह्या मुनिसुखकडोहाः कपिलिका
पृथेला नाभाकः पिटकरत्रणौ पर्णविटपौ ।
अयःस्थूणः कर्णस्तृणमसुरकर्णौ बधिरिका
विरूपाक्षो भूमिर्मजिरकसपत्नीजटिलिकाः ॥५१॥

शिवस्यापत्यं शैवः । अत्र सूत्रे गोत्रे इति नानुवर्त्तते । तेनानन्तरापत्यमपि शैव एव । प्रोष्ठस्यापत्यं प्रौष्ठः, द्रौह्यः, मौनः, सौखः, काडोहः, कपिलिकाया

अपत्यं कापिलिकः, पृथाया अपत्यं पार्थः, इलाया ऐलः, नाभाकस्य नाभाकः। नाभाग इति अन्ये। पैटकः, रावणः, पार्णः, वैटपः।

आयःस्थूणः, कार्णः, तार्णः, मासुरकर्णः, बधिरिकाया बाधिरिकः, वैरूपाक्षः, भौमः, माजिरकः। माञ्जरीक इति अन्ये। सपत्न्या अपत्यं सापत्नः। जटिलिकाया जाटिलिकः ॥५१॥

मयूरकर्णस्तृणकर्णतक्षखर्जूरकर्णाश्च कुठारपिष्टौ।
ग्रीवाक्षमञ्जीरकवर्त्तनाक्षभलन्दना लेखवतण्डरेखाः ॥५२॥

मायूरकर्णः, तार्णकर्णः, तक्ष्णोऽपत्यं ताक्ष्णः। 'षपूर्वहन्धृतराज्ञामणि' (अ० ६।४।१३५) इत्यनेनाल्लोपः। कुर्वादित्वात् (अ० ४।१।१५१) ताक्ष्ण्यः। 'ये चाभावकर्मणोः' (अ० ६।४।१६८) इत्यनः प्रकृतिभावः। खार्जूरकर्णः, कौठारः, पैष्टः। ग्रैवाक्षः, माञ्जीरकः, वार्त्तनाक्षः। वर्त्तनश्चासौ ऋक्षश्च वर्त्तनर्क्षस्तस्य वार्त्तनर्क्षः इति कश्चित्। भालन्दनः, लैखः, वातण्डः, रैखः ॥५२॥

दण्डो रोधः कौहितश्चर्ष्टिषेण आर्यश्वेतः पर्षिको गोपिका च।
खञ्जालश्चालेखनो लह्यस्कौ गङ्गा सन्धिः कोहडः खञ्जनश्च ॥५३॥

दाण्डः, रौहितः, कौहितः, ऋष्टिषेणस्यार्ष्टिषेणः, आर्यश्वेतः, पार्षिकः, गोपिकाया गौपिकः। [खाञ्जालः,] अलेखनस्यालेखनः, [लाह्यः,] यास्कः, गाङ्गः। शुभ्रादिषु तिकादिषु च पाठाद् गाङ्गेयः, गाङ्गायनिः। सान्धः, कौहडः, [खाञ्जनः] ॥५३॥

अनभिम्लानककुत्स्थौ कुलूयचण्डौ च भूरिजम्भौ च।
कहयसुपिष्टप्रोष्ठिककुपिञ्जलककुभखदूरकपिटाकाः ॥५४॥

[आनभिम्लानः,] काकुत्स्थः, कौलूयः। कौहेय इति केचित्। चाण्डः, भौरः, जाम्भः। काहयः, सौपिष्टः, प्रौष्ठिकः, कौपिञ्जलः, काकुभः, खादूरकः, पैटाकः ॥५४॥

विश्रवणक्षीरहृदौ जलहृदवृष्णिकपुरोहितिकाः।
खञ्जारोत्क्षिपपार्पकास्त्रिवणादेशे सति त्रिवेणी च ॥५५॥

विश्रवस्संज्ञकर्षिपर्यायो वृत्तिविषय एवायं विश्रवणशब्दः। तेन विश्रव-

सोऽपत्यं वैश्रवणः कुबेरः। क्षैरह्रदः, [जाह्नह्रदः]। वृष्णिरेव वृष्णिकस्तस्य वार्ष्णिकः। पुरोहितिकायाः पौरोहितिकः। [खाञ्जारः,] औत्क्षिपः, [पार्षकः]। त्रिवेणीशब्दस्त्रिवण इत्यदेशे सति शिवाद्यण्विषयः। त्रिवेण्या नद्यास्त्रैवणः ॥५५॥

हेहयसुरोहिके तृक्षाको द्विस्वरनदी सुरोहितिका।
कर्मारविपाट्परिला आकृतिगण ऊर्णनाभ इह ॥५६॥

हैहयः। सुष्ठु रोहतीति सुरोहिका, तस्याः सौरोहिकः। तार्क्षाकः। द्विस्वरनदी=द्व्यच्को नदीवाचकः शब्दः। रेवाया रैवः। [सौरोहितिकः। कार्मारः,] वैपाशः, [पारिलः,] और्णनाभः।

एते शिवादयोऽण्प्रत्ययान्ताः प्रायेण ऋषिवाचिनः। काकुत्स्थहैहयादयस्तु राजन्यवाचिनः। तत्र केषाञ्चिदिह पाठोऽत इञो बाधनार्थः, केषाञ्चित् स्त्रीभ्यो ढकः, केषाञ्चित्तु प्रपञ्चार्थः। आकृतिगणोऽयम्। तेन जरत्कारोर्जारत्कारवः, सिन्दलस्य सैन्दल इत्यादि द्रष्टव्यम् ॥५६॥ इति शिवादिः॥

## [अथ शुभ्रादिः]

'शुभ्रादिभ्यश्च' (अ० ४।१।१२३)। एभ्योऽपत्ये ढक् स्यादिति तदर्थः। तत्रापेक्षिताः शुभ्रादयः शब्दाः पद्यपञ्चकेन संगृह्यन्ते।

शुभ्रो विष्टपुरः शकन्धिविधवाशालूकगोधाम्बिका
लेखाभ्रूविकसाऽजबस्तिशकलाऽशोकाऽश्वबीजाश्मनः।
गङ्गापाण्डवभारताजिरदिशः शुक्रोग्रविग्रेतरा-
ऽणीवाऽलीढसुदन्तभाणभरमाः कर्पूरकद्रू तुदः ॥५७॥

शुभ्रस्यापत्यं शौभ्रेयः। वैष्टपुरेयः। विष्टपुर इति केचित् पेठुः। शाकन्धेयः। विधवाया अपत्यं वैधवेयो गोलकः। 'क्षुद्राभ्यो वा' (अ० ४।१।१३१) इति प्राप्तस्य पाक्षिकढ्रको बाधनार्थं पाठः। [शालूकेयः।] गोधाया अपत्यं गौधेयः। 'गोधाया ढ्रक्, आरगुदीचाम्' (अ० ४।१।१२९,१३०) इति सूत्र द्वयारम्भाद् गौधेरो गौधार इति रूपद्वयमपि। अम्बिका काचिन्मानुषी तस्या अपत्यमाम्बिकेयः। तन्नामिकाणि (अ० ४।१।११३) प्राप्ते। लैखाभ्रवेयः। विकसा काचिन्मानुषी तस्या वैकसेयः। आजबस्तेयः। गृष्टयादिपाठाद् (अ० ४।१।१३६) ढञपि। स्वरे विशेषः। शकलाया अशोकायाश्च

शाकलेयः, आशोकेयः। मानुषीनाम्न्यणि प्राप्ते। आश्वेयः, बैजेयः, आश्मेयः। अश्वादिपाठाद् (अ० ४।१।११०) आश्वायनः, आश्मायनः। बीजाश्वस्य बैजाश्वेय इति अन्ये।

गाङ्गेयः, पाण्डवेयः। भरतस्यापत्यं भारतः, उत्साद्यञ् (अ० ४।१।८६)। भारतस्यापत्यं भारतेयः। यून्यपत्ये प्रत्ययः। आजिरेयः, दैशेयः, शौक्रेयः, औग्रेयः, वैग्रेयः। इतराया ऐतरेयः। मानुषीनाम्न्यणि प्राप्ते। आणीवेयः, आलोढेयः, सौदन्तेयः, भाणेयः, भारमेयः, कार्पूरेयः। कद्रुर्नाम दिव्या गौस्तस्याः काद्रवेयः। यस्तु कद्रूरित्यूङन्तः संज्ञायां ततः 'स्त्रीभ्यो ढक्' (अ० ४।१।१२०) इति ढक् भवत्येव। तौदेयः ॥५७॥

कुमारिकान्यतरविमातृबन्धकीकुबेरिकापरिधिमृकण्ड विश्रयः।
किशोरिकाजरतिखदूररोहिणीकुठारिका अतिथिसुदक्षधर्मिणि॥५८॥

कुमारिकायाः कौमारिकेयः। मानुषीनाम्न्यणि (अ० ४।१।११३)प्राप्ते। अन्यतरस्यापत्यमान्यतरेयः। विमातुरपत्यं वमात्रेयः। बन्धकी स्वैरिणी, तस्या अपत्यं बान्धकिनेयः। कल्याणादिषु (अ० ४।१।१२६) पाठाद् इनङादेशः। कौबेरिकेयः, पारिधेयः, मार्कण्डेयः। विश्रेर्वैश्रेयः। गृष्टयादिपाठाद् (अ० ४।१।१३६) ढञपि। स्वरे विशेषः।

कैशोरिकेयः। जरतिर्जरठा तस्या जारतेयः। खादूरेयः, रौहिणेयः। मानुषीनाम्न्यणि प्राप्ते। कौठारिकेयः, आतिथेयः, सौदक्षेयः। धर्मिण्या धार्मिणेयः। धर्मिणीशब्दान्तः समाहारद्वन्द्वः ॥५८॥

बलीवर्द्दी शतद्वारशलाकाभ्रू शलाथलाः।
अकशायोऽनुदृष्टिश्च कृकलासप्रवाहणौ ॥५९॥

बलीवर्द्दिनोऽपत्यं बालीवर्द्देयः। शातद्वारेयः, शलाकाभ्रेयः,[1] शालाथलेयः। आकशायेयः, [आनुदृष्टेयः,] कार्कलासेयः, [प्रावाहणेयः] ॥५९॥

जीवो विकासरुक्मिण्यौ वायुदत्तसुवर्चसौ।
सुदामाथ ब्रह्मकृतो वासिष्ठौ श्यामलक्ष्मणौ ॥६०॥

---

१. 'शलाकाभ्रवेयः' इति पाठो हस्तलेखे। 'ढे लोपोऽकद्र्वाः' (अ० ६।४।१४७) इति लोपेन भाव्यम्।

जैवेयः, [वैकासेयः, रौक्मिणेयः, वायुदत्तेयः, सौवक्षसेयः। सौदामेयः, ब्राह्मकृतेयः।] श्यामेयो लाक्ष्मणेयश्च वासिष्ठश्चेत्। अन्यस्तु श्यामायनः, अश्वादिपाठात्। लाक्ष्मणिः ॥६०॥

शतलसृकण्डुकुशाम्बा गोदन्तसुनामनी खडोन्मत्तः।
जिह्वाशी शाताहरयवष्टुरिकमत्र समकष्टु ॥६१॥

शातलेयः। सृकण्डोः सार्कण्डेयः। कौशाम्बेयः। [गौदन्तेयः।] सुनाम्नः सौनामेयः। बाह्वादित्वात् (अ० ४।१।९६) सौनामिः। [खाडोन्मत्तेयः।] जैह्वाशिनेयः। 'दाण्डिनायन' (अ० ६।४।१७४) इत्यादिना निपातनाट्टिलोपो न। शाताहरेयः, यावष्टुरिकेयः। शब्दद्वयसमाहारः। माकष्टेयः[1]।

'आकृतिगणोऽयम्। तेन कुदन्तिशतक्षतप्रभृतयोऽत्र द्रष्टव्याः' (द्र०—गण० पृ० १४६) इति वर्द्धमानः ॥६१॥ [इति शुभ्रादिः ॥]

[अथ कल्याण्यादिः]

'कल्याण्यादीनामिनङ्' (अ० ४।१।१२६)। कल्याणीत्येवमादिभ्यः प्रातिपदिकेभ्योऽपत्येऽर्थे ढक् स्यात्, तत्सन्नियोगेनैषामिनङादेशश्चेति तदर्थः। तत्रापेक्षिताः कल्याण्यादयः सार्द्धपद्येन संगृह्यन्ते।

कल्याणी सुभगा बन्धक्यनुदृष्टिपरस्त्रियः।
मध्यमा दुर्भगा ज्येष्ठानुसृष्टिर्जगती तथा ॥६२॥
बलिवर्द्दिकनिष्ठे इति कल्याण्यादिः स्मृतः

कल्याण्या अपत्यं काल्याणिनेयः। सौभागिनेयः, बान्धकिनेयः, आनुदृष्टिनेयः पारस्त्रिणेयः[2]। माध्यमिनेयः, [दौर्भागिनेयः,] ज्यैष्ठिनेयः, आनुसृष्टिनेयः, जागतिनेयः ॥६२॥ बालिवर्द्दिनेयः, कानिष्ठिनेयः। [इति] कल्याण्यादिः ॥

[अथ गृष्ट्यादिः]

'गृष्ट्यादिभ्यश्च' (अ० ४।१।१३६)। एभ्योऽपत्ये ढक् स्यादिति तदर्थः। तत्रापेक्षिता गृष्ट्यादयः पद्यार्द्धेन संगृह्यन्ते।

अथ गृष्टिबली।
हलिकुद्रिविश्रिमित्रयुहृष्यजबस्तीति गृष्ट्यादिः ॥६३॥

---

१. 'माकष्टवेयः' इति हस्तलेखे। द्र०—पृ० १११, टि० १।
२. 'पारस्त्रैणेयः' इति गण० पृ० १४६।

गृष्टेरपत्यं गार्ष्टेयः। बलेर्बालेयः, हालेयः, कौद्रेयः, वैश्रेयः, मैत्रेयः। 'दाण्डिनायन' (अ० ६।४।१७४) इत्यादिना निपातनाद् युलोपः। हार्षेयः, आजबस्तेयः ॥६३॥ इति गृष्ट्यादिः ॥

[अथ रेवत्यादिः]

'रेवत्यादिभ्यष्ठक्' (अ० ४।१।१४६)। एभ्यष्ठक् स्यादपत्य इति तदर्थः। तत्रापेक्षिता रेवत्यादयः सार्द्धपद्येन संगृह्यन्ते।

रेवत्यथ ककुदाक्षो ग्राहो वृकदण्डकर्णपूर्वोऽत्र।
वृकवञ्ची वृकबन्धुस्तथाश्वपाली च चामरग्राहः ॥६४॥
पाली तु मणिद्वारादिका गणे रेवतीप्रभृतौ।

रेवत्या अपत्यं रैवतिकः। ककुदाक्षस्य काकुदाक्षिकः[1]। वृकग्राहस्य वार्कग्राहिकः, दाण्डग्राहिकः, कार्णग्राहिकः। वृकवञ्चिनोऽपत्यं वार्कवञ्चिकः, वार्कबन्धविकः। अश्वपाल्या अपत्यमाश्वपालिकः। चामरग्राहिकः ॥६४॥

माणिपालिकः, दौवारपालिकः। इति रेवत्यादिः॥

[अथ कुर्वादिः]

'कुर्वादिभ्यो ण्यः' (अ० ४।१।१५१)। एभ्योऽपत्येऽर्थे ण्यः स्यादिति तदर्थः। तत्रापेक्षिताः कुर्वादयः संगृह्यन्ते सार्द्धचतुर्भिः पद्यैः।

कुरुमङ्गुषाजभाराः सम्राजः क्षत्रियेऽथ रथकारः ॥६५॥

कुरोर्ब्राह्मणस्यापत्यानि कौरव्याः। यस्तु 'कुरुनादिभ्यो ण्यः' (अ० ४।१।१७२) इति विधीयते स तु तद्राजसंज्ञकत्वाद् राजन्यवाचकादेव। तत्रापि बह्वपत्यविवक्षायां लुग्विषयश्चेति। यथा--कुरवः क्षत्रिया इति। 'कौरव्याः पशवः प्रियापुरिभव क्लेशोपशान्तिः फलम्' इति तु चिन्त्यम्। माङ्गुष्यः, आजभार्यः। सम्राजोऽपत्यं साम्राज्यः क्षत्रियश्चेत्, साम्राजोऽन्यः। राथकार्यः ॥६५॥

सत्यङ्कारो वडभीकारः पथिकारमूढशालीनाः।
शाकेशकन्धू गर्गरपिण्डीनश्यावनायकेत्तारः ॥६६॥

सात्यङ्कार्यः, [वाडभीकार्यः, पाथिकार्यः,] मौढ्यः, [शालीन्यः]।

---

१. 'कौकुदाक्षिकः' इत्यशुद्धो हस्तलेखे।

शाक्यः, [शाकन्धव्यः,] गार्ग्यः । पिण्डचाः पैण्डचः । इनस्य ऐन्यः । [श्याव-नाय्यः ।] कर्त्तुः कार्त्र्यः । 'रीङ् ऋतः' (अ० ७।४।२७) इति रीङादेशे 'यस्य' (अ० ६।४।१४८) इतीकारलोपः ॥६६॥

**श्यावरथवावदूकौ पितृमद्वाक्श्यावपुत्रवामरथाः ।**
**कण्वादिवदस्य स्वरवर्जं च कार्याणि भवन्ति ॥६७॥**

[श्यावरथ्यः, वावदूक्यः ।] पितृमतोऽपत्यं पैतृमत्यः । वाचो वाच्यः । [श्यावपुत्र्यः ।] वामरथस्यापत्यं वामरथ्यः ।

कण्वादिवदिति । यञन्तकाण्व्यशब्दस्य यानि कार्याणि तान्यस्य ण्य-प्रत्ययान्तवामरथ्यशब्दस्य स्वरवर्जमाद्युदात्तस्वरं विना सर्वाणि भवन्तीत्यर्थः । तथाहि—वामरथस्यापत्यानि वामरथाः । अपत्यबहुत्वे 'यञञोश्च' (अ० २।४।६४) इति लुक् । वामरथस्यापत्यं स्त्री वामरथी, वामरथ्यायनी । 'यञश्च, प्राचां ष्फस्तद्धितः' (अ० ४।१।१६,१७) इति ङीष्ष्फौ । वामरथ्यस्यच्छात्रा वामरथाः । 'कण्वादिभ्यो गोत्रे' (अ० ४।२।१११) इति छापवादोऽण् । वामरथ्यस्य सङ्घाङ्कलक्षणानि वामरथानि । 'सङ्घाङ्कलक्षणेषु' (अ० ४।३।१२७) इति छापवादोऽण् इति ॥६७॥

**कपिञ्जलादी त्रिमतीन्द्रलाजी पुरैरकावातकिशुभ्रदभ्राः ।**
**कविः शलाकागणकारिणौ च तक्षा च कैशोरिमुरौ शिविश्च ॥६८॥**

कपिञ्जलादिनोऽपत्यं कापिञ्जलाद्यः । वैमत्यः, ऐन्द्रलाज्यः, पौर्यः, ऐरक्यः, [वातक्यः,] शौभ्रचः, [दाभ्रचः । काव्यः, शालाक्यः,] गाणकार्यः, ताक्षण्यः, [कैशोर्यः,] मौर्यः, [शैव्यः] ॥६८॥

**वेनाच्छन्दसि शङ्कुः शाकी हर्त्ताऽभ्रशूर्पणायकुटाः ।**
**दामोष्णीषी केशिन्येजी इति भवति कुर्वादिः ॥६९॥**

वैन्य इति छन्दस्येव, लोके तु वैनिरेव । शाङ्कव्यः, शाक्यः, हार्त्र्यः, आभ्रचः, शौर्पणाय्यः, कौटचः । दामोष्णीष्यः, कैशिन्यः, ऐज्यः ॥६९॥ इति कुर्वादिः ॥

[अथ तिकादिः]

'तिकादिभ्यः फिञ्' (अ० ४।१।१५४) । एभ्योऽपत्येऽर्थे फिञ् स्यादिति तदर्थः । तत्रापेक्षितास्तिकादयः संगृह्यन्ते त्रिभिः पद्यैः ।

तिक्तो यमुन्दो रसरूथनीला अमित्रकौरव्यसुपामशाट्याः ।
वरेण्यगङ्गावृषलोमका अथ्युदज्ञयज्ञौ शुभभौरिकी च ॥७०॥

तिकस्यापत्यं तैकायनिः, यामुन्दायनिः, रासायनिः, रौथायनिः, [नैलायनिः,] आमित्रायणिः, कौरव्यायणिः, सुपाम्नोऽपत्यं सौपामायनिः, शाट्यायनिः । वारेण्यायनिः, गाङ्गायनिः, वार्षायणिः,[1] लौमकायनिः, [औदज्ञायनिः, याज्ञायनिः, शौभायनिः,] भौरिकायनिः ॥७०॥

वह्यका खल्यकारद्धग्राम्यभौलिकितैतिलाः ।
कुरुर्देवरथश्चौपयतश्चैटयतस्तथा ॥७१॥

वह्यकाया अपत्यं वाह्यकायनिः । खल्यकायाः खाल्यकायनिः । आरद्धस्यारद्धायनिः । [ग्राम्यायणिः ।] भुलिकस्यापत्यं भौलिकिस्तस्य भौलिकायनिः । तितिलस्य तैतिलस्तस्य तैतिलायनिः । कौरवायणिः, दैवरथायनिः, चौपयतायनिः, [चैटयतायनिः] ॥७१॥

शीकयतक्षैतयतौ वाजवतश्चन्द्रमाः शिखा कितवः ।
बालोरःसंज्ञा गोकक्ष्यः सैन्धव इति तिकादिः ॥७२॥

शैकयतायनिः, क्षैतयतायनिः, वाजवतायनिः, चान्द्रमसायनिः, शैखायनिः, कैतवायनिः । बालाया अपत्यं बालायनिः, औरसायनिः, सांज्ञायनिः, गौकक्ष्यायणिः, सैन्धवायनिः ।

अत्रादन्तेभ्य इञि, आबन्तेभ्यो ढकि, यञिञन्तेभ्यः फकि, हलन्तेभ्योऽणि प्राप्ते वचनम् ॥७२॥ इति तिकादिः ॥

[अथ वाकिनादिः]

'वाकिनादीनां कुक् च' (अ० ४।१।१५८) इति सूत्रम् । एभ्योऽपत्येऽर्थे फिञ् तत्सन्नियोगेनैषां कुगागमश्च वा स्यादिति तदर्थः । तत्रापेक्षिता वाकिनादयः संगृह्यन्ते पादोनपद्येन ।

वाकिनलङ्काकाका गौधेरश्चर्मिवर्मिणोर्लोपः ।
कर्किष इति वाकिनादिः

---

१. द्र०—'वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारान्तत्वमिष्यते । वार्ष्यायणिः' । (काशिका ४।१।१५४) ।

वाकिनस्यापत्यं वाकिनकायनिः । पक्षे वाकिनिः । लाङ्कायनिः, लाङ्केयः । काककायनिः, काकिः । गौधेरकायणिः, गौधेरिः । चर्म्मिणो वर्म्मिणो वापत्यं चार्मिकायणिः, वार्मिकायणिः । अनयोरन्त्यस्य लोपः कुक्-सन्नियोगेन । पक्षे चार्मः, वार्मः । काकिषकायणिः, काकिषिः । इति वाकि-नादिः ॥

## [अथ कम्बोजादिः]

'कम्बोजाल्लुक्' (अ० ४।१।१७५) । अत्र सूत्रे 'कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्' (द्र०—सि० कौ० १६८७) इति पठन्ति । कम्बोजादिभ्यस्तद्राज-संज्ञकप्रत्ययस्य लुग् भवतीति तदर्थः । कम्बोजादयः शब्दा जनपदसमान-क्षत्रियवाचिनः ।

'कम्बोजश्चोलयवनौ मुरलः केरलः शकः ।
खसो जर्त्तो व्युपापेभ्यो राधयश्च मतो बुधैः ॥'
(द्र०—गण० पृ० १३५)

इति कम्बोजादिसंग्रहपद्यं गणरत्नमहोदधौ पठ्यते ।

कम्बोजस्यापत्यं राजा वा कम्बोजः । एवं चोलः, यवन इत्यादि । वि उप आ अप एभ्यः परो राधय इति शब्दोऽत्र गणे मतः । विपूर्वाद् राधयतेः कर्तरि पचाद्यच् (अ० ३।१।१३४) । विराधयतीति विराधयः । एवमुपराधयः, आराधयः, अपराधयः । चोलशकखसजर्त्तेभ्यो द्व्यज्लक्षणस्याणो (अ० ४।१।१७०) लुक् । शेषेभ्यस्त्वञः (अ० ४।१।१६८) । इति कम्बोजादिः ॥

## [अथ भर्गादिः, यौधेयादिः]

'न प्राच्यभर्गादियौधेयादिभ्यः' (अ० ४।१।१७८) । प्राच्येभ्यो भर्गा-दिभ्यो यौधेयादिभ्यश्च तद्राजसंज्ञकप्रत्ययस्य लुङ् न भवतीति तदर्थः ।

पञ्चालस्य राज्ञोऽपत्यं स्त्री, पञ्चालानां जनपदानां राज्ञी वा पाञ्चाली । एवं वैदर्भी, आङ्गी, वाङ्गी, मागधी । एते प्राच्याः । अत्र 'अतश्च' (अ० ४।१।१७७) इति सूत्रेण प्राप्तो लुगनेन निषिध्यते ।

अत्रापेक्षिता भर्गादयो यौधेयादयश्च संगृह्यन्ते ।

भर्गः कश्मीरसाल्वसुस्थालाः ।
कौरव्योरः केकयकरूशमिति कीर्त्तितोऽस्ति भर्गादिः ॥७३॥

भर्गस्य राज्ञोऽपत्यं भर्गाणां जनपदानां राज्ञो वा भार्गी। एवं काश्मीरी, साल्वी, सौस्थाली। कौरव्यशब्दो जनपदक्षत्रिययोः साधारण्येन वाचकोऽप्यस्ति। तस्माद् 'जनपदशब्दात् क्षत्रियादञ्' (अ० ४।१।१६८) इति अञ्। कौरव्यस्य राज्ञोऽपत्यं कौरव्याणां जनपदानां राज्ञी वा कौरव्यी। अञन्तत्वान् ङीप्, अञो लुकि कौरव्येति स्यात्। 'कुरुनादिभ्यो ण्यः' (अ० ४।१।१७२) इति ण्यप्रत्ययान्तस्य तु कुरोरपत्यं स्त्री कुरूरित्येव। 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' (अ० ४।१।१७६) इति ण्यस्य लुकि 'ऊङुतः' (अ० ४।१।६६) इत्यूङ्। उरसो राज्ञोऽपत्यमुरसां जनपदानां वा राज्ञी औरसी। एवं कैकेयी, कारूशी ॥७३॥ इति भर्गादिः ॥

यौधेयोशीनरग्रावाणेयधार्त्तेयभारताः ।
शौक्रेयश्च त्रिगर्त्तः शौभ्रेयो धार्त्तेय इत्यपि ॥७४॥

युधाया अपत्यं स्त्री यौधेयी। 'द्व्यचः' (अ० ४।१।१२१) इति ढक्। ततः 'पर्श्वादियौधेयादिभ्यामणञौ' (अ० ५।३।११७) इति स्वार्थेऽञ्। तस्य 'अतश्च' (अ० ४।१।१७७) इति प्राप्तस्य लुको निषेधेनाञन्तत्वात् 'शार्ङ्गरवाद्यञः' (अ० ४।१।७३) इति ङीन्याद्युदात्तः। अञो लुकि तु ढगन्तत्वान् ङीप्याद्युदात्तनिवृत्तिस्वरः स्यात्। एवं धूर्त्तादिषु द्व्यच्केषु बोध्यम्। ग्रावाणायास्तु 'स्त्रीभ्यो ढक्' (अ० ४।१।१२०) इति ढक्। शेषं पूर्ववत्।

उशीनरस्य राज्ञोऽपत्यं स्त्री, उशीनराणां जनपदानां राज्ञी वा औशीनरी, ग्रावाणेयी, धौर्त्तेयी। भरतस्यापत्यं स्त्री भारती। अत इञि यौधेयादित्वेन (अ० ५।३।११७) स्वार्थेऽञि 'यस्येति च' (अ० ६।४।१४८) इतीकारलोपेऽञन्तत्वान् ङीन्याद्युदात्तत्वमिदम्। अञो लुकि तु 'दाक्षी' इतिवज्जातिलक्षणे ङीष्यन्तोदात्तं स्यात्। शुक्रायाः शौक्रेयी। त्रिगर्त्तस्यापत्यं स्त्री, त्रिगर्त्तानां राज्ञी वा त्रैगर्त्ती। शुभ्रायाः शौभ्रेयी। धृताया धार्त्तेयी ॥७४॥ इति यौधेयादिः ॥

[अथ भिक्षादिः]

'भिक्षादिभ्योऽण्' (अ०४।२।३८)। एभ्यः समूहेऽर्थेऽण् स्यादिति तदर्थः। तत्रापेक्षिता भिक्षादयः संगृह्यन्ते।

भिक्षापद्धतिदक्षिणायुवतयः क्षेत्रं करीषार्थवद्-
गर्भिण्यश्च सहस्रचर्मविषया भूतः पदातिस्तथा ।
श्रोत्राङ्गारमुदीरितं गण इह

भिक्षाणां समूहो भैक्षम् । पद्धतीनां समूहः पाद्धतम् । दाक्षिणम् । युवतीनां यौवनम् । 'भस्याढे तद्धिते' (सि० कौ० १२०४) इति पुंवद्भावे[1] 'अन्' (अ० ६।४।१६७) इति प्रकृतिभावाट्टिलोपो न । क्षैत्रम्, कारीषम्, आर्थवतम्, गर्भिणीनां समूहो गार्भिणम्, साहस्रम्, चार्मणम्, वैषयम्, भौतम्, पदातीनां समूहः पादातम् । श्रोत्राणां समूहः श्रौत्रम् । आङ्गारमाङ्गारसङ्घातः ।

'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' (महा० ४।२।३८) इति भाष्ये स्थितम् । तस्यायं भावः—युवतिशब्दस्यानुदात्तादित्वादञि (अ० ४।२।४४) प्राप्तेऽणर्थमिह पाठ इति वक्तव्यः, तच्चान्यथासिद्धम् । तथा हि 'भस्याढे' इत्यत्र ढभिन्ने तद्धिते विवक्षिते पुंवद्भाव इत्यभ्युपगमात् तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ युवन्शब्दस्य कनिनन्ततया आद्युदात्तत्वादण् सिद्ध एवेति ।

गणे युवतिशब्दस्य पाठसामर्थ्यान्न पुंवत्त्वम्, तेन यौवतमिति सिद्ध्यति (द्र०—का० ४।२।३८) इति वृत्तिकारोक्तिस्तूक्तभाष्यविरोधाद् उपेक्ष्या । युवतीनां समूहो यौवतमिति यौतेः शत्रन्ताद् अनुदात्तादेरञि (अ० ४।२।४४) बोध्यम् । सामूहिकानां व्यन्तं[2] क्लीबमेव स्वभावात् । यान्तं[3] तु स्त्रियामेव यथा 'तलन्तम्' (लिङ्गानु० १।१७) । इति भिक्षादिः ।।

[अथ खण्डिकादिः]

'खण्डिकादिभ्यश्च' (अ० ४।२।४५) । एभ्योऽञ् स्यात् समूहेऽर्थे इति तदर्थः । तत्रापेक्षिताः खण्डिकादयः संगृह्यन्ते खण्डिकेत्यादिना—

अथो खण्डिका भिक्षुकी-
लूकौ श्वा वडवा शुको हलयुतो बन्धो वरत्रं युगात् ।।७५।।

खण्डिकानां समूहः खाण्डिकम् । भिक्षुकाणां भैक्षुकम् । औलूकम् । शुनां

---

१. 'भस्याढे तद्धिते' इत्यत्र परसप्तमीपक्षमवलम्ब्य प्रकृतव्याख्या सङ्गच्छते । विषयसप्तमीपक्षे तु तद्धितोत्पत्तेः प्रागेव पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तौ सत्यां 'कनिन्' (उणा० १।१५६) इत्यौणादिककनिनन्तत्वेनाद्युदात्तत्वात् 'तस्य समूहः' इत्येवाणि यौवनं सिद्धमेवेति बोध्यम् ।

२. 'अणन्तम्' इति पाठः शुद्धः स्यात् ।

३. 'पाशादिभ्यो यः' इति सूत्रविहितयप्रत्ययान्तमित्यर्थः ।

समूहः शौवम् । 'द्वारादीनां च' (अ० ७।३।४) इत्यैजागमः, 'नस्तद्धिते' (अ० ६।४।१४४) इति टिलोपः, वाडवं वडवासमूहः । शौकम् । हलयुतो बन्धो हलबन्धः । हालबन्धं हलबन्धसङ्घातः । युगं च वरत्रा च युगवरत्रम्, युगवरत्राणां समूहो यौगवरत्रम् ॥७५॥

**सेनायाः संज्ञायां क्षुद्रकमालवपदं गणेऽह्नरिह ।**

क्षुद्रकाणां मालवानां च क्षत्रियाणामपत्यानि क्षुद्रका मालवाश्च । 'जनपदशब्दात् क्षत्रियादञ्' (अ० ४।१।१६८), तस्य 'तद्राजस्य बहुषु' (अ० २।४।६२) इत्यनेन लुक् । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः, तेषां समूहः क्षौद्रकमालवं सैन्यम् । सेनासंज्ञाया अन्यत्र क्षौद्रकमालवकम् । 'गोत्रोक्ष०' (अ० ४।२।३९) इत्यादिना वुञ् । तत्सूत्रेऽपत्यमात्रं लौकिकमेव गोत्रम् । गणेऽह्नरिहेत्यस्य इह गणे अहन्शब्दोऽस्तीत्यर्थः । अह्नां समूह आह्नम् । 'अह्नष्टखोरेव' (अ० ६।४।१४५) इति नियमाट्टिलोपो न ।

अत्र गणे खण्डिकाप्रभृतीनामचित्तानां ठकोऽन्येषामाद्युदात्तानामणो बाधनार्थं पाठः । इति खण्डिकादिः ॥

[अथ पाशादिः]

'पाशादिभ्यो यः' (अ० ४।२।४९) । एभ्यः समूहेऽर्थे यप्रत्ययः स्यादिति तदर्थः । तत्रापेक्षिताः पाशादयः संगृह्यन्ते पाशतृणेत्यादिना—

**पाशतृणवातधूमाङ्गारशकटपोतपाटलपिटाकाः ॥७६॥**

पाशानां समूहः पाश्या । एवं तृण्या, वात्या, धूम्या, अङ्गार्या । भिक्षादौ पाठादणपि—आङ्गारम् । शकट्या, पोत्या, पाटल्या । पिटाकपिटकौ वंशदलादिमये भाण्डे । [पिटाक्या] ॥७६॥

**हलगलवननटपिटकाः पाशादिगणे समाख्याताः ।**

स्पष्टमन्यत् । [हल्या, गल्या, वन्या, नट्या, पिटक्या ।] इति पाशादिः ॥

[अथ राजन्यादिः]

'राजन्यादिभ्यो वुञ्' (अ० ४।२।५३) । एभ्यो विषय इत्यर्थे देशे वाच्ये वुञ् प्रत्ययः स्यादिति तदर्थः । तत्रापेक्षिता राजन्यादयः संगृह्यन्ते राजन्यानृतेत्यादिना—

**राजन्यानृततीव्रोदुम्बरशैलूषदैवयाताश्च ॥७७॥**

राजन्यानां विषयो देशो राजन्यकम् । अत्यन्तं परिशीलितोऽर्थो विषय इत्युच्यते । अनृतस्यानृतकः । अत्रानृतशब्दस्तद्वति वर्तते लक्षणया । एवमन्ये धर्मवाचका धर्म्मिणि ज्ञेयाः । तैव्रकः,[1] औदुम्बरकः, शैलूषकः, दैवयातकः ॥७७॥

दाक्षिवरत्रावीडाऽर्जुनायनाः सम्प्रियोर्णुनाभौ च ।
राजायनशालङ्कायनात्मकामेयबाभ्रव्याः ॥७८॥

दाक्षेर्दाक्षकः । वरत्रा चर्ममयी रज्जुः, तद्वतां विषयो देशो वारत्रकः । व्रैडकः । अर्जुनस्यापत्यमार्जुनायनः, अश्वादित्वात् (अ० ४।१।११०) फञ् । तस्यार्जुनायनकः । सम्यक् प्रीणातीति सम्प्रियः कश्चित्, तस्य साम्प्रियकः । ऊर्णुनाभः कश्चित् पुरुषो राजा वा, तस्यौर्णुनाभकः ।

राजायनो राजाश्रितस्तस्य राजायनकः । शालङ्कायनः कश्चित् तस्य शालङ्कायनकः । आत्मकामाया अपत्यमात्मकामेयस्तस्य आत्मकामेयकः । बाभ्रव्यकः ॥७८॥

वसातिरम्बरीषाद्यः पुत्रो जालन्धरायणः ।
तैलुबैल्ववने बैल्वजश्चेत्येवं गणः स्मृतः ॥७९॥

वासातकः, आम्बरीषपुत्रकः । जालन्धरायणो जलन्धरापत्यम् । नडादित्वात् (अ० ४।१।९९) फक् । तस्य विषयो देशो जालन्धरायणकः । तैलवकः । विल्ववने जातो बैल्ववनस्तस्य बैल्ववनकः । बिल्वजाद् भवो बैल्वजस्तस्य बैल्वजकः ॥७९॥ इति राजन्यादिः ॥

[अथ भौरिक्यादिः, ऐषुकार्यादिः]

'भौरिक्याद्यैषुकार्यादिभ्यो विधलभक्तलौ' (अ० ४।२।५४) । भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च क्रमेण विधल्भक्तलौ प्रत्ययौ भवत इति तदर्थः । तत्र भौरिक्यादय ऐषुकार्यादयश्च संगृह्यन्ते पद्यचतुष्टयेन ।

भौरिकिसैकयतावथ वैकयतो भौलिकिश्च काणेयः ।
चैटयतश्चौपयतो वाणिजको वालिकाज्य इह गणितः ॥८०॥

भौरिकीणां विषयो देशो भौरिकिविधम् । विधल्भक्तल्प्रत्ययान्तानां नपुंसकत्वमेव शब्दशक्तिस्वभावात् । ण्यन्तात् 'सेकृ सेचने' (धातु० १।६१)

---

१. 'तीव्रकः' इत्यशुद्धो हस्तलेखे ।

इत्यस्माल्लटः शत्रादेशे,सेकयन्ति सेचनं कारयन्तीति सेकयन्तस्तेषामपत्यानि सैकयतास्तेषां परिशीलितो देशः सैकयतविधम्। [वैकयतविधम्, भौलिकिविधम्, काणेयविधम्,। चैटयतविधम्, चौपयतविधम्।] वणिजामपत्यानि वाणिजास्त एव वाणिजकास्तेषां वाणिजकविधम्। वालिकाजस्यापत्यं वालिकाज्यः। 'वृद्धेत्कोसला०' (अ० ४।१।१७१) ञ्यङ्। तस्य देशो वालिकाज्यविधम्। शिष्टमूहनीयम् ।।८०।। [इति भौरिक्यादिः ।।]

ऐषुकारिः शयाण्डश्च सौवीरो विश्ववामनः।
दासमित्रिर्नडः शौण्डः शायाण्डो वैश्वधेनवः ।।८१।।

इषुकारस्यापत्यमैषुकारिः, तस्य परिशीलितो देश ऐषुकारिभक्तम्। शयाण्डस्य विषयो देशः शयाण्डभक्तम्, सौवीरभक्तम्, [वैश्ववामनभक्तम्। दासमित्रिभक्तम्, नडभक्तम्; शौण्डभक्तम्, शायाण्डभक्तम्, ] वैश्वधेनवभक्तम् ।।८१।।

सारस्यायनचान्द्रायणौ तथा तुण्डदेवसापिण्डी।
द्व्याक्षायण औडायनलाडायनविश्वदेवाश्च ।।८२।।

सारस्यायनभक्तम्, [चान्द्रायणभक्तम्, तुण्डदेवभक्तम्,] सापिण्डिभक्तम्। [द्व्याक्षायणभक्तम्,] औडायनभक्तम्, [लाडायनभक्तम्,] विश्वदेवभक्तम् ।।८२।।

त्र्याक्षायणसौवीरायणावथो दाक्षिदासमित्रौ च।
शायण्डिशौभ्रिताक्ष्यीः शौद्रिर्जौलिश्च ते फगन्ताः स्युः ।।८३।।

त्र्याक्षायणभक्तम्, [सौवीरायणभक्तम्।] दाक्षिप्रभृतयः सप्त फगन्ता अत्र गणे स्युः। यथा—दाक्षायणभक्तम्, दासमित्रायणभक्तम्। शायण्डायनभक्तम्, शौभ्रायणभक्तम्, ताक्ष्यायणभक्तम्, शौद्रायणभक्तम्,जौलायनभक्तम्।

अत्र 'यञिञोश्च' (अ० ४।१।१०१) इति फगन्ताः केचित्, केचित्तु नडादित्वात् (अ० ४।१।९९) फगन्ता इति बोध्यम्। अनुदाहृतमूहनीयम् ।८३।। इति ऐषुकार्यादिः ।।

[अथ उक्थादिः]

'क्रतूक्थादिसूत्रान्ताट्ठक्' (अ० ४।२।६०)। क्रतुविशेषवाचिभ्य उक्था-

दिभ्यः सूत्रशब्दान्तप्रातिपदिकेभ्यश्चाधीते वेद इत्यत्रार्थे ठक् प्रत्ययो भवतीति तदर्थः। क्रतुविशेषवाचिन अग्निष्टोमादयस्तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि प्रत्ययः। अग्निष्टोममधीते वेद वा आग्निष्टोमिकः, वाजपेयिक इत्यादि। सूत्रान्तस्योदाहरणम्—सांग्रहसूत्रिक इति। एतत्सूत्रविषयीभूता उक्थादयः कतीत्याकाङ्क्षायां संगृह्यन्ते पद्यद्वयेन।

उक्थन्यायन्यासज्योतिषलोकायतानि गुणचर्चे।
धर्म्मानुकल्पयज्ञाः पदक्रमं संहिता निरुक्तं च ॥८४॥

उक्थं सामविशेषस्तल्लक्षणप्रतिपादको ग्रन्थविशेषोऽपि लक्षणयोक्थम्, तदधीते वेद वा औक्थिकः। 'मुख्यार्थात्तूक्थशब्दात् ठगणौ नेष्येते' (सि० कौ० १७९३) इति कौमुद्यां स्थितम्। उक्थादिषु पठितानां गुणादिशब्दानां प्रायेणोभयार्थकानां वृत्तिविषयता। तत्र मुख्यार्थेभ्यो वेदितरि तल्लक्षणप्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि प्रत्ययः (द्र०—सि०कौ० १७९२) इति विवेकः।

न्यायमधीते वेद वा नैयायिकः, नैयासिकः, ज्यौतिषिकः। लोकायतं चार्वाकमतप्रतिपादकं दर्शनम्, तदधीते वेद वा लौकायतिकः। गुणशब्देन तत्प्रतिपादको ग्रन्थोऽपि, तमधीते वेद वा गौणिकः। चर्चा विचारणा। तदुपकारको ग्रन्थोऽपि चर्चा, तामधीते वेद वा चार्चिकः। यद्वाङ्गरागश्चर्चा, तत्प्रकारख्यापको ग्रन्थोऽपि चर्चा। धर्मप्रतिपादकं शास्त्रमपि धर्म्मः, तमधीते वेद वा धार्म्मिकः। अनुकल्पो गौणपक्षः,। [आनुकल्पिकः]। यज्ञं विदन् यज्ञप्रतिपादक ग्रन्थमधीयानो वा याज्ञिकः। पदक्रम तल्लक्षणपरो ग्रन्थः। [पादक्रमिकः।] वैदिको मन्त्रभागः संहिता। [सांहितिकः।] वैदिकमन्त्रव्याख्यानं निरुक्तम्। [नैरुक्तिकः] ॥८४॥

आयुर्वेदद्विपदापरिषत्संग्रहनिमित्तसङ्घट्टाः।
वृत्तिक्रमेतरगणाः पुनरुक्तं श्लक्ष्णमनुपदं चेति ॥८५॥

आयुर्वेदिको वैद्यशास्त्रस्याध्येता वेदिता च। द्विपदा ऋचः,[द्वैपदिकः।] परिषत् प्रातिशाख्यम्, [पारिषदिकः।] संग्रहो ग्रन्थविशेषः, [सांग्रहिकः।] शुभाशुभसूचकविक्रिया, तल्लक्षणपरो ग्रन्थश्च निमित्तम्, [नैमित्तिकः।] सङ्घट्टो रचना, या पाञ्चाली वैदर्भीत्यादि पदैरलङ्कारशास्त्रे व्यवह्रियते, तल्लक्षणपरो ग्रन्थोऽपि लक्षणया सङ्घट्टस्तमधीते वेद वा साङ्घट्टिकः। केचित् सङ्घाटं पठन्ति।

वृत्तिः सूत्रादिव्याख्यानग्रन्थस्तामधीते वेद वा वार्त्तिकः। क्रमेतरेति ग्रन्थविशेषस्य संज्ञा, तदधीते क्रामेतरिकः। गणो गणपाठस्तमधीयानो विदन् वा गाणिकः। पुनरुक्तं श्लक्ष्णमनुपदमिति त्रितयं ग्रन्थविशेषवाचि, यस्तदधीते वेद वा स पौनरुक्तिकः श्लाक्ष्णिक आनुपदिक इत्युच्यते ॥८५॥ इति उक्थादिः॥

[अथ क्रमादिः]

'क्रमादिभ्यो वुन्' (अ० ४।२।६१)। एभ्यो वुन् स्याद् उक्तेऽर्थे इति तदर्थः। तत्रापेक्षिताः क्रमादयः संगृह्यन्ते क्रम इत्यादिना—

क्रमः शिक्षा च मीमांसा पदं सामेत्ययं गणः।

क्रममधीते वेत्ति वा यः स क्रमकः, शिक्षकः, मीमांसकः, पदकः, सामकः॥ इति क्रमादिः॥

[अथ वसन्तादिः]

'वसन्तादिभ्यष्ठक्' (अ० ४।२।६३)। एभ्यष्ठक् स्यात् पूर्वोक्तेऽर्थे इति तदर्थः। तत्रापेक्षिता वसन्तादयः संगृह्यन्ते वसन्तग्रीष्मेत्यादिना—

वसन्तग्रीष्महेमन्तवर्षाश्च शिशिरः शरत्।
प्रथमाथर्वणाथर्वानुगुणाश्चरमो गुणाः ॥८६॥

वसन्तर्त्तुवर्णनपरो ग्रन्थो लक्षणया वसन्तस्तमधीते वेद वा वासन्तिकः। एवं ग्रैष्मिकः, हैमन्तिकः, वार्षिकः, शैशिरिकः, शारदिकः। वसन्तशब्दस्तत्कालसहचरिताध्ययने वर्त्तमानः प्रत्ययं लभते। एवं ग्रीष्महेमन्तादयो द्रष्टव्याः (द्र०—गण० पृ० १८३) इति गणरत्नमहोदधौ वर्द्धमानः। प्राथमिकः, आथर्वणिकः। 'दाण्डिनायन' (अ० ६।४।१७४) इत्यादिना निपातनाट्टिलोपो न। अनुगुणं यथा स्यात् तथाधीयानो विदन् वा आनुगुणिकः। चरमधीते वेद वा चारमिकः, गौणिकः ॥८६॥ इति वसन्तादिः॥

[अथ सङ्कलादिः]

'सङ्कलादिभ्यश्च' (अ० ४।२।७५)। एभ्योऽञ् स्यात् तदस्मिन्नस्तीत्यादिषु चतुर्ष्वर्थेष्विति तदर्थः। तत्रापेक्षिताः सङ्कलादयः संगृह्यन्ते चतुर्भिः पद्यैः[1]।

---

1. 'पादोनत्रिभिः पद्यैः' इति पाठेन भाव्यम्।

स्यात् सङ्कलपुष्कलकुम्भसूताः पूलासकूलासपलाशभल्लाः ।
गम्भीरलोमेतरपूतिकाह्वेमोत्तमाराजभृदुत्पुटानि ॥८७॥

सङ्कलाः सन्त्यस्मिन् देशे स देशः साङ्कलः । पुष्कलो नाम कश्चित् तेन निर्वृत्तं नगरं पौष्कलम् । कुम्भो नाम कश्चिद् राजा तस्य निवासो देशः कौम्भः । सूतानां निवासः सौतः । पूलासः कूलासश्च ग्रामविशेषस्तस्यादूरभवं नगरं पौलासं कौलासम् । पलमश्नन्तीति पलाशा मांसभक्षकाः, ते सन्त्यस्मिन् देश इति पालाशः । भल्ला भल्लसदृशास्तीक्ष्णाः पुरुषास्तेषां निवासो भाल्लः । एवमग्रेऽपि सर्वत्र तदस्मिन्नस्तीति, तेन निर्वृत्तमिति, तस्य निवास इति, तस्यादूरभव इति चतुर्ष्वप्यर्थेषु तन्नाम्नि देशे वाच्ये यथायथं प्रत्ययो वेदितव्यः । देशश्चेह भूप्रदेशमात्रं तेन कूपादयोऽपि यथायथं सौतादिपदवाच्या भवन्ति ।

गाम्भीरः, लौमः, [ऐतरः, पौतिकः ।] अह्ना निर्वृत्तमाह्नम् 'अह्नष्टखोरेव' (अ० ६।४।१४५) इति नियमाट्टिलोपो न । वेमा नाम कश्चित्, वेम्ना निर्वृत्तं वैमं नगरम् । [औत्तमम्,] राजभृतम् [औत्पुटम्] ॥८७॥

मल्लोडुपमालसिकतसुपिङ्गला गोभृदभिषिक्तौ ।
करुणासुपूतसुमङ्गलसुनेत्रबहुलं सुदक्षसद्योजौ ॥८८॥

मल्लानां निवासो ग्रामो माल्लः, औडुपः, मालः, [सैकतः, सौपिङ्गलः, गौभृतः, आभिषिक्तः । कारुणः, सौपूतः, सौमङ्गलः, सौनेत्रः, बाहुलः, सौदक्षः, साद्योजः ।] बहुलशब्दान्तः समाहारः ॥८८॥

उद्द्वेपानौ च गवेषसुभूतसुदत्तमथ निधानं च ।
सनिवेशमिति

उद्वेपो नाम कश्चित् तस्य निवास औद्वेपः । अनिति प्राणितीति आन्, तेन निर्वृत्तो ग्राम आनः । [गावेषः, सौभूतः, सौदत्तः, निधानः ।] सनिवेशं नाम नगरम्, तस्यादूरभवो ग्रामः सानिवेशः । अनुक्तमर्थानुसारेणोदाहर्त्तव्यम् । इति सङ्कलादिः ॥

[अथ सुवास्त्वादिः]

'सुवास्त्वादिभ्योऽण्' (अ० ४।२।७७) । एभ्योऽण् स्यात् पूर्वोक्तेष्वर्थेषु चतुर्ष्विति तदर्थः । तत्रापेक्षिताः सुवास्त्वादयः संगृह्यन्ते ।

**सुवास्तुः शकटीकर्णश्च सेवाली ॥८९॥**

सुवास्तुरित्यादिना सुवास्तुः कश्चित्, तेन निर्वृत्तः कूपः सौवास्तवः। नगरी सौवास्तवी। सामान्यसूत्रसिद्धस्याणः पुनर्विधानं नद्यां मतुपो (अ० ४।२।८५) बाधनार्थं कूपलक्षणस्य च ओरञो (अ० ४।२।७१) बाधनार्थम्। [शाकटीकर्णः।] सेवालिना निर्वृत्ता सैवालिनी नगरी ॥८९॥

**गर्त्तः कर्कन्धूमती कर्कशश्च कर्को गोहः कृष्णकर्णोऽहिसक्थौ।**
**वर्णुर्भण्डुः खण्डुरेवं शिखण्डी कर्पूरीति प्रोच्यते वर्ग एषः॥९०॥**

गार्त्ती। कर्कन्धूमती ग्रामस्तस्यादूरभवा नगरी कार्कन्धूमती। [कार्कशः, कार्कः, गौहः, कार्ष्णकर्णः, आहिसक्थः। वार्णवः।] भण्डुः कश्चित्, तेन निर्वृत्तः कूपो भाण्डवः। [खाण्डवः।] शैखण्डः[1] शिखण्डिनां निवासो देशः। कर्पूरिणां कार्पूरः[2]। अनुक्तमुदाहरणीयम् ॥९०॥ इति सुवास्त्वादिः॥

[अथ अरीहणादिः]

'वुञ्छण्कठजिलसेनिरढञ्ण्यफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्य-कुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः' (अ० ४।२।८०)। अरीहणादिप्रभृतिभ्यः सप्तदशभ्यो वुञादयः सप्तदश प्रत्ययाः क्रमेण भवन्ति पूर्वोक्तेषु चतुर्ष्वर्थेष्विति तदर्थः। तत्र तावदरीहणादिभ्यो वुञ् भवतीति वाक्येऽपेक्षिता अरीहणादयः संगृह्यन्ते चतुर्भिः पद्यैः।

**अरीहणोद्दण्डत्रिपाशशिंशपा**
**भलन्दनोदुञ्चनखाण्डवीरणाः।**
**सुयज्ञजम्बूकशकृत्स्नरैवताः**
**शिरीषबिल्वौ बधिरोऽथ जाम्बवान् ॥९१॥**

अरीहणेन निर्वृत्तं नगरमारीहणकम्, औद्दण्डकम्, त्रैपाशकम्। शिंशपा वृक्षविशेषाः सन्त्यस्मिन् स देशः शांशपकः। शिंशपानामदूरभवः कूपो ग्रामो वा। 'देविकाशिंशपादित्यवाड्' (अ० ७।३।१) इत्यादिनाऽदिवृद्धिं

---

१. 'शैखण्डिनः' इति पाठेन भाव्यम्। 'इनण्यनपत्ये' (अ० ६।४।१६४) इति प्रकृतिभावः प्राप्नोति। २. 'कार्पूरिणः' इति भाव्यम्।

बाधित्वा आत्वम् । भालन्दनकम् । औदञ्चनकम्, उदञ्चेन निर्वृत्तम् । खाण्डवीरणकम् । खाण्डवैरणकमिति केचित् । अनुशतिकादेः (अ० ७।३।२०) आकृतिगणत्वादुभयपदवृद्धिरिति तेषामाशयः ।

सौयज्ञकम्, जाम्बवकम्, काशकृत्स्नकम्, [रैवतकः पर्वतः, शैरीषकम्, बैल्वकम्, बाधिरकम् ।] जाम्ववता निर्वृत्तं जाम्बवतकम् । अत्र जाम्ववतशब्दं केचित् पेठुः । तत्र जाम्बवतोऽपत्यं जाम्ववत इति तदर्थ इति विशेषः ॥६१॥

खाण्डगौतममैत्रौष्ट्रत्रैगर्त्ता वैमतस्तथा ।
शाण्डिल्यसाम्परक्रौष्ट्रा आस्त्रसौमतधौमताः॥६२॥

खाण्डप्रभृतिषोडश शब्दा आयनान्ताः खाण्डायन इत्यादिरूपा अत्र गणे मताः । खाण्डायनकम्, गौतमायनकम्, मैत्रायणकम्, औष्ट्रायणकम्, त्रैगर्त्तायनकम्, वैमतायनकम् । शाण्डिल्यायनकम्, साम्परायणकम्, क्रौष्ट्रायणकम्, आस्त्रायणकम्, सौमतायनकम्, धौमतायनकम् ॥६२॥

सौमैन्द्रसौसकौद्राश्चेत्यायनान्ता अमी मताः ।
खादिरो विमतः खण्डुर्भगलो द्रुहिणस्तथा ॥६३॥

सौमायनकम्, ऐन्द्रायणकम्, सौसायनकम्, कौद्रायणकम् । [खादिरकम्, वैमतकम्,] खाण्डवकम्, [भागलकम्, द्रौहिणकम्] ॥६३॥

सुशर्मकतलोलन्दा रायस्पोषश्च वीरणः ।
किरणो यज्ञदत्तश्च दलतेति स्मृतो गणः ॥६४॥

सुशर्मणा निर्वृत्तं सौशर्मकम्, कातलकम्, औलन्दकम् । रायो धनस्य पोषणकर्त्ता रायस्पोषः । 'कर्मण्यण्' (अ० ३।२।१), उपपदसमासः । अत एव निपातनात् कर्मषष्ठ्या अलुक् । कस्कादेराकृतिगणत्वात् सत्वम् । रायस्पोषेण निर्वृत्तं रायस्पोषकं नगरम् । [वैरणकम् । कैरणकम्, याज्ञदत्तकम् ।] दलत्रा निर्वृत्तं दलतुः पर्वतस्थादूरभवं वा दालत्रकम् ॥६४॥ इति अरीहणादिः ॥

[अथ कृशाश्वादिः]

कृशाश्वादिभ्यश्छण् । अत्रापेक्षिताः कृशाश्वादयः संगृह्यन्ते पद्यद्वयेन ।

कृशाश्वकूटाजिनवेश्मलोमशा
विशालधूमौ सुकरश्च वर्चलः ।

अरिष्टमौद्गल्यपराशरारुऽपः
सुवर्चलारिश्मपुरागसूकराः ॥९५॥

कृशाश्वेन निर्वृत्त कार्शाश्वीयम्, कौटीयम्, [आजिनीयम्,] वैश्मोयम्, [लौमशीयम्, वैशालीयम्, धौमीयम्, सौकरीयम्,] वार्चलीयम्। वर्त्तुल-शब्दं केचित् पेठुः। [आरिष्टीयम्,] मौद्गलीयम्। 'आपत्यस्य च तद्धितेऽनाति' (अ० ६।४।१५१) इति यलोपः। [पाराशरीयम्,] आरुषीयम्, [सौवर्चलीयम्,] आरिश्मीयम्। पुरागेण निर्वृत्तं पौरागीयम्। पुरार इति अन्ये पेठुः। सौकरीयम्।९५॥

अवनतसदृशायोरोमका लोमकश्च
प्रतरसुखविवक्ता यूकरो रोमशश्च।
शबलपुरगशब्दौ स्तो विकुटयास एवं
गदित इह कृशाश्वाद्यो गणः शाकि कार्यैः॥९६॥

आवनतीयम्, [सादृशीयम्,] आयसीयम्, [रौमकीयम्, लौमकीयम्, प्रातरीयम्, सौखीयम्,] वैवक्तीयम्, [यौकरीयम्, रौमशीयम्। शाबलीयम्, पौरगीयम्,] वैकुटयासीयम्॥९६॥ इति कृशाश्वादिः॥

[अथ ऋश्यादिः]

ऋश्यादिभ्यः क इत्यत्रापेक्षिता ऋश्यादयः संगृह्यन्ते।

ऋश्यस्थूलनिलीनकर्दमशरा वाहुर्निधानाऽशनि-
न्यग्रोधाः परिगूढखण्डखदिरा वेणुः सितः शर्करा।
अश्मांशुः परिवृत्तवीरणमता वेश्मोपगूढोऽरडु
दण्डश्चानडुहोत्तराश्म निवितो बन्धोऽत्र बद्धो गणे॥९७॥

ऋश्येन निर्वृत्तम् ऋश्यकम्, [स्थूलकम्, निलीनकम्, कर्दमकम्, शरकम्,] वाहुकम्, निधानकम्। विधानकमिति अन्ये। अशनिकम्, [न्यग्रोधकम्, परिगूढकम्, खण्डकम्, खदिरकम्, वेणुकम्, सितकम्, शर्करकम्। अश्मकम्, अंशुकम्, परिवृत्तकम्, वीरणकम्, मतकम्।] वेश्मनोऽदूरभवो वेश्मकः कूपः। [उपगूढकम्।] अरडुस्तरुविशेषः, [अरडुकम्।] अरटुरिति अन्ये। [दण्डकम्।] अनडुहोऽपत्यमानडुहः, [आनडुहकम्।] आनडुहोत्तराश्मेति समाहारद्वन्द्वः। उत्तराश्मनोऽदूरभवम् उत्तराश्मकम्। निवितः बन्धो

बद्धश्च क्रमेणात्र निबन्धो विबद्धश्चेत्यर्थः। निबन्धकः, विबद्धकः ॥९७॥ इति ऋश्यादिः ॥

[अथ कुमुदादिः]

कुमुदादिभ्यष्ठच् इत्यस्मिन् वाक्येऽपेक्षिताः कुमुदादयः संगृह्यन्ते पद्यद्वयेन।

कुमुदन्यग्रोधकचा गर्त्तो निर्यासबीजपरिवापाः।
सङ्कटकं कटकूपा अश्वत्थेक्कटविकङ्कताशिरीषाः ॥९८॥

कुमुदानि सन्त्यस्मिन् तत् कुमुदिकं सरोवरम्। एवं न्यग्रोधिकं स्थलम्। [कचिकम्, गर्त्तिकम्, निर्यासिकम्, बीजिकम्,] परिवापिकम। [सङ्कटकिकम्, कटिकम्, कूपिकम्, अश्वत्थिकम्,] इक्कटेन निर्वृत्तम् इक्कटिकम्, [विकङ्कतिकम्,] शिरीषिकम् ॥९८॥

शर्करा च दशग्रामो यवाद्यो बल्वजस्तथा।
अश्वश्चेति गणो ज्ञेयः कुमुदादिर्मनीषिभिः ॥९९॥

शर्करिकं मधविकम्,[1] दशग्रामिकम्, यवाद्यिकम्, [बल्वजिकम्। अश्विकम्] ॥९९॥ [इति कुमुदादिः ॥]

[अथ काशादिः]

काश्यादिभ्य इल इत्यस्मिन् वाक्येऽपेक्षिताः काशादयः संगृह्यन्ते पद्यद्वयेन।

काशपाशपलाशानि पीयूक्षाश्वत्थकर्दमाः।
कच्छूलचरणौ वासनडकङ्कटबर्बराः ॥१००॥

काशाः सन्त्यस्मिन् स देशः काशिलः। [पाशिलम्, पलाशिलम्, पीयूक्षिलम्, अश्वत्थिलम्, कर्दमिलम्। कच्छूलिलम्, चरणिलम्।] वासो गुल्मविशेषः। वास्यन्ते रुवन्तीति वासाः पक्षिण इति अन्ये। वासिल वनम्। [नडिलम्, कङ्कटिलम्।] बर्बरा म्लेच्छजातिः। बर्बरिलम् ॥१००॥

वनसोपालमधुरग्रहा विसतृणं गुहा।
कर्पूरश्च कपित्थं च जतु काशादिके गणे ॥१०१॥

---

१. मूलश्लोके मधुशब्दो नोपलभ्यते। यद्यत्रान्यवैयाकरणानुसारं गणे मधुशब्दस्य पाठः स्वीक्रियेत, मधुकमिति भाव्यम्।

वनिलम्। सोपालो नाम कश्चित् तेन निर्वृत्तं सोपालिलम्। मधुरिलम्, ग्रहिलम्, [विसिलम्, तृणिलम्, गुहिलम्। कर्पूरिलम्, कपित्थिलम्,] जतविलम् ॥१०१॥ इति काशादिः ॥

[अथ तृणादिः]

तृणादिभ्यः स इत्यत्रापेक्षितास्तृणादयः संगृह्यन्ते।

तृणनडमूलानि वनं वर्णः पर्णं बिलं पुलफले च।
अर्णार्जुनौ सुवर्णं बलचरणबुसा इति तृणादिः ॥१०२॥

तृणानि सन्त्यस्या तृणसा नदी। [नडसा, मूलसा।] वनस्यादूरभवो वनसः कूपः। वर्ण इति वीरणाख्या। वर्णसं सरः। [पर्णसा।] बिलसः प्रदेशः। पुलः समुच्छ्रायः, सोऽस्मिन्नस्तीति पुलसः पर्वतः। फलसं वनम्। अर्णो जलमस्त्यस्मिन्नित्यर्णसं सरः। गणे लुप्तसकारस्योपादानात् सकारनिवृत्तिः। अदन्त एवायमिति अन्ये। [अर्जुनसा, सुवर्णसा, बलसा,] चरणसा पद्या, [बुससा] ॥१०२॥ इति तृणादिः ॥

[अथ प्रेक्षादिः]

प्रेक्षादिभ्य इनि इत्यत्रापेक्षिताः प्रेक्षादयः संगृह्यन्ते।

स्युः प्रेक्षापरिवापसङ्कटकटाः कूपो यवासः पुटो
ज्ञेयाः कङ्कटबन्धुकापुकबुका गर्त्तेक्कटौ कूपकः।
न्यग्रोधक्षिपकाहिरण्यहलकाः प्रेक्षादिके स्युर्गणे
विज्ञेया ध्रुवका महश्च ध्रुवका कैश्चित् कपिर्गण्यते ॥१०३॥

प्रेक्षा बुद्धिस्तया हेतुभूतया निर्वृत्तो ग्रामः प्रेक्षी। यद्वा प्रेक्षाः सन्त्यत्रेति प्रेक्षी देशः। यद्यपि प्रेक्षीशब्दः प्रेक्षकवाची तथाप्यत्र पक्षे रूढितो ग्रामसरस्यादिप्रदेशवाचो द्रष्टव्यः। परिवापो बीजनिक्षेपोऽस्त्यस्मिन् स परिवापी क्षेत्रप्रदेशः। सङ्कटं सङ्कीर्णता, सङ्कटी। कटः पर्यन्तः, कटी। कूपी। यवासो दुःस्पर्शः,यवासी। यवाप इति क्वचित् पाठः। पुटी। कङ्कटं सन्नाहः, कङ्कटी। बन्धुरेव बन्धुका तया निर्वृत्तो बन्धुकी। पुको दानम्, पुकी। बुको हास्यम्, बुकी। [गर्त्ती।]इक्कटं चषकः, इक्कटी। कूपको गुणवृक्षः, कूपकी।

[न्यग्रोधी।] क्षिपका आयुधविशेषः, [क्षिपकी। हिरण्यी।] हलका पुरविशेषः, तयाऽदूरभवो हलकी ग्रामः। ध्रुवका आवपनविशेषः, ध्रुवकी।

मह उत्सवः, मही । ध्रुवकाप्यावपनविशेषः, [ध्रुवकी ।] कपयः सन्त्यस्मिन्निति कपी ।।१०३।। इति प्रेक्षादिः ।।

[अथ अश्मादिः]

अश्मादिभ्यो र इत्यत्रापेक्षिता अश्मादयः संगृह्यन्ते ।

अश्मयूथनददर्भशिखोषा मीनवृन्दगुदकन्दनगाश्च ।
कोटखण्डकुलकाण्डगुहाः स्युः पीनपामगुडकुण्डलगह्वाः ।।१०४।।

अश्मानः सन्त्यत्रेत्यश्मरम् । एवं यूथरम् नदरम्, दभरम्, शिखरम् । शिखाया ह्रस्वत्वं पृषोदरादित्वात् । ऊषरमित्यादि [मीनरम्, वृन्दरम् गुदरम्, कन्दरम्, नगरम् । कोटरम्, खण्डरम्, कुलरम्, काण्डरम्, गुहरम्, पीनरम्,पामरम्,गुडरम्,कुण्डलरम्,गह्वरम्] ज्ञेयम् ।।१०४।। इति अश्मादिः ।।

[अथ सख्यादिः]

सख्यादिभ्यो ढञ् इत्यत्रापेक्षिताः [सख्यादयः] संगृह्यन्ते ।

सखिवायुदत्तगोफिलसखिदत्ता भल्लपालकरवीराः ।
छगलाशोककुशीरकवासववीराग्निदत्तसरसाश्च ।।१०५।।

सख्या निर्वृत्तं साखेयम्, वायुदत्तेयम्, गौफिलेयम् । गोपिलेति अन्ये । गोभिलेति भोजः । साखिदत्तेयम्, भाल्लेयम्, पालेयम्, कारवीरेयम् । छागलेयम्, आशोकेयम्, कौशीरकेयम्, वासवेयम् । [वैरेयम् ] आग्निदत्तेयम्, [सारसेयम्] ।।१०५।।

सरकसमरसुरससमलपूराः सीहरतमालचक्राणि ।
वज्रं च चक्रवाकः सप्तलकदलं च रोह इति ।।१०६।।

सारकेयः, [सामरेयः, सौरसेयः, सामलेयः,] पौरेयः, सैहरेयः, [तामालेयः, चाक्रेयः । वाज्रेयः, चाक्रवाकेयः,] साप्तलेयः, [कादलेयः,] रौहेयः । एते सख्यादयः प्रायः पुंविशेषवृत्तयः, ततस्तन्नाम्नि देशे वाच्ये प्रत्ययं प्राप्नुवन्ति ।।१०६।। इति सख्यादिः ।।

[अथ सङ्काशादिः]

सङ्काशादिभ्यो ण्य इत्यत्रापेक्षिताः सङ्काशादयः संगृह्यन्ते पद्यद्वयेन ।

सङ्काशकश्मीरसमीरसूरा यूथांशकूटादशशूरसेनः ।
कुम्भानुनाशौ पलिताश्मनासासीराङ्गशीर्षाणि सकर्णकं च।।१०७।।

सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्, काश्मीर्यम्, सामीर्यम्, सौर्यम्, [यौथ्यम्,] आंश्यम्, कौटच्यम्, दांश्यम्, [सौरसेन्यम्।] कौम्म्यम्, [आनुनाश्यम्, पालित्यम्,] आश्मन्यम्। नासा नाम्नी काचित् स्त्री, तया निर्वृत्तं नास्यम्। सीरेण निर्वृत्तं सैर्यम्। शीरेति अन्ये। आङ्ग्यम्, शैर्ष्यम्। शीर्षेत्यदन्तं गणे निपात्यते। साकर्णक्यम् ॥१०७॥

विरतसमलमन्थाऽगस्तिलोमानि तीर्थं
विकरमलिनरोमाण्यत्र वृष्टिर्नलं च।
कटिपसुपरि चैवं नासिका कम्पिलश्च
भवति सुपथिपन्थं पञ्जरोऽस्मिन् गणेऽस्ति ॥१०८॥

वैरत्यम्, [सामल्यम्,] मान्थ्यम्, अगस्तीनां निवास आगस्त्यः, लौमन्यम्, [तैर्थ्यम्,] वैकर्यम्, [मालिन्यम्,] रौमण्यम्, वार्ष्टर्यम्, [नाल्यम्। काटिप्यम्,] सौपर्यम्, नासिक्यम्, [काम्पिल्यम्।] सुपथिशब्दस्य पन्थादेशः। सुष्ठु पन्था यस्मिन् तत् सुपथि वनं नगरं वा। सुपथोऽदूरभवं सौपन्थ्यं सरः। पाञ्जर्यम् ॥१०८॥ इति सङ्काशादिः ॥

[अथ बलादिः]

बलादिभ्यो य इत्यत्रापेक्षिता बलादयः संगृह्यन्ते बलदलेत्यादिना—

बलदलनलचुललकुलोरलमूलवटोलकुलवना तिपुलः।
डुल इति

बलेन निर्वृत्ता बल्या नगरी। दल्यं नगरम्। [नल्यम्, चुल्यम्,] लकुल्यम्, उरल्यम्[1], मूल्यम्। [वट्यम्, उल्यम्, कुल्यम्, वन्यम्, तिपुल्यम्। डुल्यम्]। इति बलादिः ॥

[अथ पक्षादिः]

पक्षादिभ्यः फग् इत्यत्रापेक्षिताः पक्षादयः संगृह्यन्ते पक्षतुषेत्यादिना—

अथ पक्षतुषौ कुशकुण्डाण्डानि कम्बलिका ॥१०९॥

पक्षेण निर्वृत्तं पाक्षायणम्, तौषायणम्, कौशायनम्, कौण्डायनम्, आण्डायनम्, कौम्बलिकायनम् ॥१०९॥

---

१. 'लाकुल्यम्, औरल्यम्' इत्युपलभ्येते हस्तलेखे।

तुक्षाऽस्तिचित्राश्च पथस्तु पन्थं
हस्ती बिलं कुत्ससकर्णकौ च ।
हस्तः कलाहंसकशीर्षपाका
अतिश्वकुम्भौ यमलं निवातः ॥११०॥

तुक्षेण निर्वृत्तं तौक्षायणं पुरं राष्ट्रं वा । आस्तायनम् अस्तिनामकेन निर्वृत्तम् । चैत्रायणम् । पथिन्शब्दस्य पन्थादेशः । पथोऽदूरभवः पान्थायनः कूपः । हस्तिनः सन्त्यस्मिन् स प्रदेशो हास्तिनायनः । 'दाण्डिनायनहास्तिनायन' (अ० ६।४।१७४) इत्यादिना टिलोपाभावो निपात्यते । [बैलायनः,] कौत्सायनः, [साकर्णकायनः । हास्तायनः, कालायनः,] हांसकायनः, [शार्षायणः,] पाकायनः । श्वानमतिक्रान्तोऽतिश्वा, तस्य निवास आतिश्वायनः, कौम्भायनः, [यामलायनः, नैवातायनः] ॥११०॥

हिंसकसीरकसकलं सिंहकमकरौ सुवर्णकं सरकम् ।
लोमसमलरोमसरसखिललोमकवलिकमिति वर्गः ॥१११॥

हैंसकायनः, [सैरकायणः, साकलायनः, सैंहकायनः, माकरायणः, सौवर्णकायनः, सारकायणः ।] लौमायनम्, [सामलायनः, रौमायणः, सारसायनः,] खैलायनम्, [लौमकायनः, वालिकायनः] ॥१११॥ इति पक्षादिः ॥

[अथ कर्णादिः]

कर्णादिभ्यः फिञ् इत्यत्रापेक्षिताः कर्णादयः संगृह्यन्ते कर्णार्केत्यादिना—

कर्णार्कजीवन्तजवानडुह्या
आण्डीवतोऽथ द्रुपदश्च जैत्रः ।
स्फिगर्कलूषानकपाञ्चजन्याः
कुन्ती वसिष्ठः कुलिशश्च जित्वा ॥११२॥

कर्णेन निर्वृत्तः, तस्य निवासो वा देशः कार्णायनिः । आर्कायणिः, [जैवन्तायनिः, जावायनिः ।] अनडुहोऽपत्यमानडुह्यः, तस्य निवास आनडुह्यायनिः । आण्डीवतायनिः, [द्रौपदायनिः, जैत्रायणिः ।] स्फैजायनिः । स्फिगेति अन्ये । आर्कलूषायणिः, आनकायनिः । आकनेति अन्ये । [पाञ्च-

जन्यायनिः,] कौन्तायनिः । कुम्भी कुम्भो वेति अपरे। [वासिष्ठायनिः, कौलिशायनिः ।] जित्वनां निवासो जैत्वायनिः ॥११२॥ इति कर्णादिः ॥

[अथ सुतङ्गमादिः]

सुतङ्गमादिभ्य इञ् इति वाक्येऽपेक्षिताः सुतङ्गमादयः संगृह्यन्ते सार्द्धपद्येन ।

ज्ञेयाः सुतङ्गमाऽजिरजीवार्जुनविप्रचित्तमुनिचित्ताः ।
शुक्रः श्वमहापुत्रौ खण्डिककर्णौ महाचित्तः ।
स्वनबीजवापिविग्राः श्वेतो विग्रह इतीरितोऽस्ति गणः ॥११३॥

सौतङ्गमिः, आजिरिः, [जैविः,]आर्जुनिः, वैप्रचित्तिः, [मौनिचित्तिः। शौक्रिः ।] श्वानः सन्त्यत्रेति शौवनिः। माहापुत्रिः, [खाण्डिकिः, कार्णिः, माहाचित्तिः ।] स्वानिः, बैजवापिः, वैग्रिः, [श्वैतिः ।] विग्रहेण निर्वृत्तो वैग्रहिः कूपः ॥११३॥ इति सुतङ्गमादिः ॥

[अथ प्रगद्यादिः]

प्रगद्यादिभ्यो ञ्य इति वाक्येऽपेक्षिताः प्रगद्यादयः संगृह्यन्त एकेन पद्येन ।

प्रगदी मगदी खण्डितविकलमडाराश्च कोविदारश्च ।
मन्दारमददिनावथ चूडारो गदित इति गणं जगदुः ॥११४॥

प्रकृष्टं गदतीत्येवंशीलः प्रगदी, तेन निर्वृत्तं प्रागद्यम् । मगदिना केनचित् पुंसा निर्वृत्तं मागद्यं नगरम् । खाण्डित्यम्, [वैकल्यम्, माडार्यम्, कौविदार्यम् । मान्दार्यम्, मादद्यम्, चौडार्यम्,] गादित्यम् । अनुक्तमूहनीयम् ॥११४॥ इति प्रगद्यादिः ॥

[अथ वराहादिः]

वराहादिभ्यः कक् इति वाक्येऽपेक्षिता वराहादयः संगृह्यन्त एकेन पद्येन ।

वराहबाहू अथ शर्करा विजग्धः शिरीषश्च तथा विदग्धः ।
ज्ञेयो बलाहः खदिरो विभग्नः स्थूलः पलाशः पिनिनद्धबद्धौ ॥११५॥

वराहाणां निवासो देशो वाराहकः । बाहुना निर्वृत्तो बाहुको ग्रामः ।

शर्कराशब्दस्य चातुरर्थिकप्रत्ययसमभिव्याहारे षड् रूपाणि। तथा हि— (१) कुमुदादौ पाठात् ठचि 'शर्करिकम्'[1]। (२) अत्र पाठात् कक्कि शार्करकम्। (३) 'ठक्छौ च' (अ० ४।२।८४) इति सूत्रविहितयोष्ठक्छयोः शार्करिकम्, (४) शर्करीयम्। (५) 'शर्कराया वा' (अ० ४।२।८३) इति सूत्र चातुरर्थिकस्य लुग्विधायके वाग्रहणसामर्थ्याद् औत्सर्गिकोऽण् तस्य पक्षे लुप् शर्करा, (६) शार्करम् इति।

वैजग्धकः, [शैरीषकः, वैदग्धकः। बालाहकः, खादिरकः, वैभग्नकः, स्थौलकः, पालाशकः।] पिनिपूर्वौ नद्धबद्धौ पिनिनद्धबद्धौ। पैनद्धकः, नैबद्धकः ॥११५॥ इति वराहादिः ॥

[अथ कुमुदादिः]

कुमुदादिभ्यष्ठक् इति वाक्येऽपेक्षिताः कुमुदादयः संगृह्यन्त एकेन पद्येन।

**कुमुदं कुण्डलकूटौ मुनिस्थलाश्वत्थघासकुन्दाश्च।**
**मधुकर्णदशग्रामौ शाल्मलिरथकारगोमथशिरीषाः ॥११६॥**

कुमुदानि सन्त्यत्रेति कौमुदिकं सरः। [कौण्डलिकम्, कौटिकम्,] मौनिस्थलिकम्, [आश्वत्थिकम्, घासकुन्दिकम्।] माधुकर्णिकम्, दाशग्रामिकम्, शाल्मलिकम्, राथकारिकम्,] गौमथिकम्, शैरीषिकम् ॥११६॥ इति कुमुदादिः ॥

[अथ वरणादिः]

'वरणादिभ्यश्च' (अ० ४।२।८२)। एभ्यश्चातुरर्थिकस्य लुप् स्यादिति तदर्थः। तत्रापेक्षिता वरणादयः संगृह्यन्ते पद्यद्वयेन।

**वरणा शृङ्गी शाल्मल्यालिङ्ग्यायनगयोरसा वलभी।**
**गोदशयाण्डीशुण्डीचम्पाः पर्णी च तक्षशिला ॥११७॥**

वरणानां वृक्षविशेषाणामदूरभवं नगरं वरणाः। लुपि सति प्रकृतिवल्लिङ्गवचने भवतः[2]। शृङ्गी। शाल्मलिः। इमावप्यौषधिवाचिनौ। आलिङ्ग्यायनो ग्रामः। गया उरसा वलभी इति त्रयं नगरीविशेषे। मोदो इति

१. द्र०—पृ० १२८, पं० १४।
२. 'लुपि युक्तवद् व्यक्तिवचने' (अ० १।२।५१) इत्यनेनेति भावः।

द्विवचनान्तं ग्रामविशेषवाचि। शयाण्डीप्रभृतयो नगरीविशेषे वर्त्तन्ते ॥११७॥

जम्बूरुज्जयिनी मथुरा जानपदी वर्णु ताम्रपर्ण्यौ च।
पुष्करपम्पागोमत्यो वरणादौ समाख्याताः ॥११८॥

जम्बूर्वृक्षविशेषः। उज्जयिन्यादयो नगरीविशेषे। वर्णु र्नदविशेषः। ताम्रपर्णी नदी। पुष्करं तीर्थविशेषः। पम्पा सरसीविशेषः। गोमती नदी। एभ्यः सर्वेभ्यश्चातुरर्थिकप्रत्ययस्य लुपि यथोक्तमेव रूपम् ॥११८॥ इति वरणादिः॥

[अथ मध्वादिः]

'मध्वादिभ्यश्च' (अ० ४।२।८६)। एभ्यश्चातुरर्थिको मतुप् स्यादिति तदर्थः। तत्रापेक्षिता मध्वादयः संगृह्यन्त एकेन पद्येन।

मध्विक्षू शररोमवेणुमरुतः शक्तीष्टकारिष्टयो
वार्दाली किसरा करीरशकलाऽऽसन्दीशलाकाहिमाः।
स्थाणुस्तक्षशिला विसासुतिशमीशर्याणमृष्यामिषी-
कर्कन्धूवटवेटमित्यथ खडो मध्वादिके गण्यते ॥११९॥

मधु पुष्परसादिः। तदस्त्यत्रेति मधुमान् देशः। मधुमती नदी नगरी वेत्यादयो नित्यस्त्रीलिङ्गास्तु 'नद्यां मतुप्' (अ० ४।२।८५) इत्यनेनैव सिद्ध्यन्तीत्यनद्यार्थोऽयमारम्भः। इक्षुमान्। शरो मुञ्जः, शरावान्। 'शरादीनां च' (अ०६।३।१२०) इति दीर्घः। रोम तनूरुहम्, रोमवान्। वेणुमान्, मरुत्वान्। शक्तिः प्रहरणं सामर्थ्यं च, शक्तिमान्। इष्टका मृद्विकारः, इष्टकावान्। मदिराजातीयः सन्धानविशेषो रिष्टिः। चन्द्रहासो रिष्टिरिति अन्ये। रिष्टिमान्। वार्दाली ओषधिविशेषः, वार्दालीवान्। 'संज्ञायाम्' (अ० ८।२।११) इति वत्वम्। किसरो गन्धद्रव्यम्, किसरावान्। आदन्तत्वं गणे निपातनात्। करीरो वृक्षविशेषः, करीरवान्। शकलो मत्स्यः, शकलावान् ह्रदः। आदन्तता निपातनात्। आसन्दी वेत्रासनम्, आसन्दीवान्। 'आसन्दीवदष्ठीवत्' (अ० ८।२।१२) इत्यादिना निपातनान्मस्य वः। शलाकावान्, हिमवान्।

स्थाणुमान्। तक्षशिला नगरी, तस्या अदूरभवस्तक्षशिलावान्। बिसवान्। आसुतिः सोमरसः, आसुतिमान्। शमीवान्। शर्याणः पर्वतः, शर्याण-

वान्। ऋष्यो मृगविशेषः, ऋष्यवान्। आमिषी ओषधिविशेषः, आमिषीवान्। कर्कन्धूर्बदरी, [कर्कन्धूमान्।] वटो न्यग्रोधः, [वटवान्।] वेटः पीलुवृक्षः, [वेटवान्।] खडस्तृणजातिः, [खडवान्] ॥११९॥ इति मध्वादिः॥

[अथ उत्करादिः]

'उत्करादिभ्यश्छः' (अ० ४।२।९०)। एभ्यश्छः स्याच्चातुरर्थिक इति तदर्थः। ते चोत्करादयः संगृह्यन्त उत्कराश्मेत्यादिना—

उत्कराश्मखदिरास्तृणवृक्षाविन्द्रवृक्षतिकपिप्पलशाखाः।
आर्द्रवृक्षकपलाशसुवर्णश्यावनायसहिता विजिगीषा ॥१२०॥

उत्करो ह्रस्वपांसुप्रचयः, सोऽस्त्यस्मिन्नित्युत्करीयं स्थलम्। अश्मीयम्, खदिरीयम्, [तृणीयम्, वृक्षीयम्।] इन्द्रवृक्षोऽर्जुनः, इन्द्रवृक्षीयम्। तिकीयम्, [पिप्पलीयम्, शाखीयम्।] आर्द्रा वृक्षा यस्मिंस्तद् आर्द्रवृक्षकं वनम्, तस्यादूरभवमार्द्रवृक्षकीयम्। आर्द्रवृक्षीयमिति अन्ये। [पलाशीयम्, सुवर्णीयम्।] श्यावनायो मुनिः,श्यावनायीयम्। विजिगीषायं विजिगीषया निर्वृत्तम्।१२०।

शालानेकखलाजिनातपफलारण्याजिरं पिप्पली-
मूलं सम्फलशूर्पणायपिचुका भस्त्रा च नैवाकवः।
उत्क्रोशार्कनितान्तवृक्षशफरा गर्त्ताग्निवैराकणा
जङ्घाकाशनिशान्तपर्णकितवाः क्षुद्राणकक्षान्तयः ॥१२१॥

शालीयम्, अनेकीयम्, खलाजिनीयम्, खण्डाजिनेति अन्ये। आतपीयम्, फलीयम्, अजिरीयम्, पिप्पलीमूलीयम्, सम्फलीयम्। शूर्पणायः पुरुषविशेषः, शूर्पणायीयम्। पिचुकः पिचुलः, पिचुकीयम्। [भस्त्रीयम्।]निवाकुर्निर्गुणः, तस्य निवासो नैवाकवः, तस्यादूरभवं नैवाकवीयम्।

उत्क्रोशः कुररः, उत्क्रोशीयम्। अर्को गुल्मः, अर्कीयम्। नितान्तवृक्षो निबिडवृक्षो देशः, तस्यादूरभवं नितान्तवृक्षीयम्। शफरो मत्स्यः, [शफरीयम्, गर्त्तीयम्, अग्नीयम्।] वैराकणो नाम ऋषिः, वैराकणीयम्। [जङ्घीयम्, काशीयम्।] निशान्तमन्तःपुरम्,निशान्तीयम्। [पर्णीयम्।] कितवो धूर्त्तो गन्धद्रव्यं च, कितवीयम्। क्षुद्रेण निर्वृत्तं क्षुद्रीयम्। क्षुद्रा नाम राक्षसी तया निर्वृत्तमिति अन्ये। आणकमधमम्, आणकीयम्। क्षान्तीयम् ॥१२१॥

अश्वत्थनीचापकशङ्करेडाऽवरोहितक्षारविशालवेत्राः ।
अरीहणत्रैवणचर्मखण्डा वातागरः सम्परमन्त्रणार्हौ ॥१२२॥

अश्वत्थीयम् । नीचमाप्नोतीति नीचापकः, नीचापकीयम् । शङ्करीयम् । इडाः स्त्रियः,इडीयम् । अवरोहितः कश्चिद् ऋषिः । क्रोध इति अन्ये । [अवरोहितीयम् । क्षारीयम् ।] विशालो नाम कश्चिन् मुनिः, [विशालीयम् ।] वेत्रीयम् । अरीहणः पुरुषविशेषः, [अरीहणीयम् ।] त्रिवेण्या अपत्यं त्रैवणः, त्रैवणीयम् । चर्मीयम्, खण्डीयम्, वातागरीयम् । सम्परमन्त्रणार्हौ मुनी, [सम्परीयम्, मन्त्रणार्हीयम्] ॥१२२॥ इति उत्करादिः ॥

[अथ नडादिः]

'नडादीनां कुक् च' (अ० ४।२।९१) । एषां कुगागमो भवति छप्रत्यय-आतुर्थिक इति तदर्थः । तत्रापेक्षिता नडादयः संगृह्यन्त एकेन पद्येन ।

नडबिल्ववेणुवेतसकपोतेक्षुकाष्ठवेत्रतृणम् ।
क्रुञ्चाया ह्रस्वत्वं तक्ष्णो लोपो नडादिगणे ॥१२३॥

नडस्तृणविशेषः, नडकीयं स्थलम् । बिल्वकीयम्, [वेणुकीयम्, वेतसकीयम्, कपोतकीयम्, इक्षुकीयम्, काष्ठकीयम्, वेत्रकीयम्, तृणकीयम् ।] क्रुञ्चा पक्षिणी, ताः सन्त्यत्रेति क्रुञ्चकीयः प्रदेशः । तक्ष्णां निवासस्तक्षकीयः । अस्यान्त्यस्य लोपः ॥१२३॥ इति नडादिः ॥

[अथ कत्त्र्यादिः]

'कत्त्र्यादिभ्यो ढकञ्' (अ० ४।२।९५) । एभ्यो ढकञ् प्रत्ययः स्यात् तस्येदं तत्र जात इत्याद्यर्थेष्विति तदर्थः । के कत्त्र्यादय इत्यपेक्षायां संगृह्यन्त एकेन पद्येन ।

कत्त्रिः पुष्करपुष्कलमोदनकुम्भ्युम्भि वर्मती नगरी ।
यविकलकुडया माहिष्मत्युखा ग्रामकुण्डिनावत्र ॥१२४॥

कुत्सितास्त्रयः कत्त्रयः,कुत्सितास्त्रयोऽस्येति वा कत्त्रिः । अत्रैव निपातनात् कोः कदादेशः । कत्त्रयाणां कत्त्रेर्वा इदं कात्त्रेयकम् । पुष्करं तीर्थविशेषः, तत्र जातादि पौष्करेयकम् । पुष्कलो वाहीकग्रामः, पौष्कलेयकम् । मोदनं नाम नगरम्, मौदनेयकम् । कुम्भी उम्भी च ग्रामविशेषः । कौम्भेय-

कम्, औम्भेयकम्। एतदन्तः समाहारद्वन्द्वः। वर्मती नदी, वार्मतेयकम्। नागरेयकम्। नगरीति संज्ञाशब्दोऽयम्।

कुड्यायां इदं कौडेयकम्। प्रत्ययसन्नियोगेन कुड्याशब्दस्य यलोपो भवति, तद्बोधनार्थं यविकलेति कुड्याया विशेषणम्। ग्रामविशेषस्य नगरविशेषस्य वा संज्ञाशब्दोऽयम्। भित्तिवाची तु कुड्यशब्दः क्लीब एव। माहिष्मती नगरी। तत्र जातो माहिष्मतेयकः। उखा पात्रविशेषः। तत्र संस्कृता उख्या यवागूः, तस्या इदम् औखेयकम्। ग्रामेयकम्। कुण्डिनं नगरम्, तत्र भवः कौण्डिनेयकः ॥१२४॥ इति कत्र्यादिः ॥

[अथ नद्यादिः]

'नद्यादिभ्यो ढक्' (अ० ४।२।९७)। एभ्यः शैषिको ढक् स्यादिति तदर्थः। तत्रापेक्षिता नद्यादयः संगृह्यन्ते पद्यद्वयेन।

**नदी वाराणसी पूर्वनगरी सेतकी मही।**
**कौशाम्बी वनकौशाम्बी श्रावस्ती वडवा वृषे ॥१२५॥**

नद्यां जातादि नादेयम्, वाराणसेयम्, पौर्वनगरेयम्। सेतकी पुरी, सैतकेयम्। मही नदी, माहेयः। कौशाम्बी नगरी, कौशाम्बेयः। कौशाम्बीयेन वणिजेति तु चिन्त्यमेव। वानकौशाम्बेयः। श्रावस्ती पुरी, श्रावस्तेयः। वडवायां जातो भवो वा वाडवेयो वृषः। अन्यस्तु वाडवः ॥१२५॥

**दार्वा काशफरी माया पाठा काशपरी तथा।**
**शाल्वा च खादिरीत्येष गणो नद्यादिरुच्यते ॥१२६॥**

दार्वा पुरी, दार्वेयः। काशफरी नगरी, काशफरेयः। माया पुरी, मायेयः। पाठा पुरी, पाठेयः। काशपरेयः। शाल्वा पुरी, शाल्वेयः। खादिरेयः ॥१२६॥ इति नद्यादिः ॥

[अथ पलद्यादिः]

'प्रस्थोत्तरपदपलद्यादिकोपधादण्' (अ० ४।२।११०)। प्रस्थोत्तरपदात् पलद्यादेः कोपधाच्चोदीच्यग्रामवाचिनः प्रातिपदिकादण् स्याच्छेष इति तदर्थः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माहकिप्रस्थे भवो माहकिप्रस्थः। निलीनके भवो नैलीनकः। पलदीतीकारान्त इति एके, नान्त इति अन्ये। नलोपे यणादेशात् संहिता तुल्यैव। के पलद्यादय इत्यपेक्षायां संगृह्यन्ते पद्यद्वयेन।

पलदी परिषद्रोमकवाहीकपटच्चरोदपानानि
कलबहुजालकमलमिति कीटान्तं कमलकीकरं परिखा ॥१२७॥

पलद्यां भवः पालदः, पारिषदः, रौमकः। कोपधत्वादेवाणि सिद्धेऽत्रास्य पाठस्य फलं चिन्त्यम्। वाहीकस्य कोपधत्वेऽपि वृद्धलक्षणं परं छं बाधितुं पाठः सार्थकः। अन्यथाऽणं बाधित्वा परत्वाच्छ एव स्यात्। कोपधलक्षणोऽण् त्ववृद्धे निलीनकादौ सावकाश इति बोध्यम्।

पाटच्चरः, औदपानः। कलकीटे भवः कालकीटः, बाहुकीटः, जालकीटः, कामलकीटः, कामलकीकरः, परिखायां भवः पारिखः ॥१२७॥

गोमती च यक्कल्लोम भिदा कमलपूर्विका।
शूरसेनो नैकती च गोष्ठीत्येवं गणः स्मृतः ॥१२८॥

गौमतः। यक्कल्लोम्नि जातादिर्याक्कल्लोमः। 'अन्' (अ० ६।४।१६७) इति प्रकृतिभावस्तु न, गणेऽत्र नलोपनिपातनादिति हरदत्तादयः। वर्द्धमानस्तु यक्कल्लोमशब्दं पपाठ (गण० पृ० १९३)। कामलभिदः। शौरसेनः, नैकतः, गौष्ठः ॥१२८॥ इति पलद्यादिः॥

[अथ कण्वादिः]

'कण्वादिभ्यो गोत्रे' (अ० ४।२।१११)। एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्याच्छेष इति तदर्थः। काण्व्यस्य छात्राः काण्वाः। गौकक्ष्यस्य गौकक्षाः। कण्वादिर्गर्गाद्यन्तर्गणः। [इति कण्वादिः॥]

[अथ काश्यादिः]

'काश्यादिभ्यष्ठञ्ञिठौ' (अ० ४।२।११६)। एभ्यः शैषिकौ ठञ्ञिठौ प्रत्ययौ भवत इति तदर्थः। कति काश्यादय इत्यपेक्षायां संगृह्यन्ते त्रिभिः पद्यैः।

काश्यच्युतौ मोदनमोदमानौ गोवासनाऽरिन्दमदेवदत्ताः।
संवाहसंयाति च हस्तिकर्षू कुनामचेदी कुरणं हिरण्यम् ॥१२९॥

काशयो जनपदस्तत्र भवा काशिकी, काशिका। ञिठप्रत्यये ञकारोत्तरवर्त्तीकार उच्चारणार्थः। ठञन्तान्ङीप्, ञिठान्तात्टाबिति स्त्रियां विशेषः। पुंसि तु तुल्यमेवोभयरूपम्। अच्युतो ग्रामः। आच्युतिकी, आच्युतिका। एवं मौदनिकी, मौदनिका। [मौदमानिकी, मौदमानिका।] गौवासनिकी,

गौवासनिका। अरिन्दमे जातादिरारिन्दमिकः। [दैवदत्तिकः।] संवाहे जातादिः सांवाहिकः, सांयातिकः, हास्तिकर्षुकः। कुत्सितं नाम यस्य [स] कुनामा, तन्निवासो ग्रामोऽपि कुनामा। तत्र जातादिः कौनामिकी कौनामिका। चेदयो जनपदः। चैदिकी, चैदिका। वेदीति केचित्। करणं देशविशेषः। कारणिकः। एवं हैरण्यिकः॥१२९॥

शकुलाददशग्रामौ भारङ्ग्यूर्ध्वतदापदः।
कालान्ता राजशब्दस्तु युवदेवोपपूर्वकः॥१३०॥

शकुलान् मत्स्यान् अत्तीति शकुलादः। तस्य निवासो ग्रामोऽपि शकुलादः। तत्र भवः शाकुलादिकः। दश ग्रामा यत्र देशविशेषे स दशग्रामः। दाशग्रामिकी,दाशग्रामिका। दाशानां कैवर्त्तानां ग्रामो दाशग्रामः,दाशग्रामिक इति अन्ये। भारङ्ग्यां भवो भारङ्गिकः। भरिङ्गस्यापत्यं भारिङ्गिः, तस्य निवासो ग्रामोऽपि भारिङ्गिरिति वर्द्धमानेन पठितम्(द्र०—गण० पृ० १९२। तत्र 'भारङ्गि' शब्द उपलभ्यते)। ऊर्ध्वतदापच्छब्दाः कालशब्दान्ता अत्र ज्ञेयाः। ऊर्ध्वकाले भवा और्ध्वकालिकी, और्ध्वकालिका। एवं तात्कालिकी, आपत्कालिकीत्यादि। युवराजेन निर्वृत्तो ग्रामोऽपि युवराजः, तत्र भवा यौवराजिकी, यौवराजिका। ऐवं दैवराजिकी, औपराजिकीत्यादि॥१३०॥

शौवावतानारित्रौ च सिन्धुच्छागसुधासधाः।
सोमदासावितीमेऽत्र मित्रान्ताः पठिता गणे॥१३१॥

शुनोऽवतानः श्वावतानो मणिस्तेन निर्वृत्तो ग्रामः शौवावतानः। शौवावतानिकः। अरित्रस्य निवासो ग्रामोऽप्यरित्रः, आरित्रिकः। सिन्ध्वादयः षण् मित्रान्ता अत्र बोध्याः। सिन्धुर्मित्रमस्य स सिन्धुमित्रो देशः। तत्र भवा सैन्धुमित्रिकी, सैन्धुमित्रिका। एवं छागमित्रिकः, [सौधामित्रिकः।] सहमित्राण्यस्य तस्मिन् देशे जातादिः साधमित्रिकः। निपातनादत्र हस्य धः। सौममित्रिकः, दासमित्रिकः। देशवृत्तिभ्य एवैतेभ्यष्ठञ्ञिठौ भवतः। नेह काशीनां क्षत्रियाणां छात्राः काशीयाः (गण० पृ० १९६) इति गणरत्नकारः॥१३१॥ इति काश्यादिः॥

[अथ धूमादिः]

'धूमादिभ्यश्च' (अ० ४।२।१२७)। एभ्यो देशवाचिभ्यः शैषिको वुञ्

प्रत्ययः स्यादिति तदर्थः। तत्र के धूमादय इत्यपेक्षायां संगृह्यन्ते सार्द्धपद्य-चतुष्टयेन।

**धूमार्जुनावाऽवयगर्त्तवर्ज्याऽनर्त्ता विदेहश्च शशादनश्च।**
**द्वयाहावसंस्फीयषडण्डघोषास्त्र्याहावशष्पेऽथ धार्त्तराज्ञी ॥१३२॥**

धूमो ग्रामः, तत्र भवो धौमकः। ऋजवो नावो यस्य स ऋजुनो, तस्य निवासस्तेन निर्वृत्तो वा आर्जुनावः। तत्र भव आर्जुनावकः। वृद्धाच्छे प्राप्तेऽत्र गणे पाठाद् वुञ्। आवयं वाहीकग्रामः। तत्र प्राप्तौ ठञ्ञिठौ बाधित्वा वुञ्। आवये भव आवयकः। आवयो नदीग्राम इति अन्ये। आवयात्तीर्थे, आवयकं तीर्थम्, आवयमन्यदिति परे। गार्त्तकः, वार्ज्यकः, आनर्त्तकः, वैदेहकः, शाशादनकः। द्वैयाहावकः, सांस्फीयकः, षाडण्डकः, घौषकः, त्रैयाहावकः। शष्पं बालतृणस्थलम्, तत्र भवः शष्पकः। धृतराज्ञोऽपत्यं स्त्री धार्त्तराज्ञी, 'षपूर्व' (अ० ६।४।१३५) इत्यल्लोपः। तया निर्वृत्ता पुर्यपि धार्त्तराज्ञी, तत्र भवो धार्त्तराज्ञकः। सर्वेऽप्येते ग्रामविशेषस्य देशविशेषस्य वा संज्ञाशब्दाः ॥१३२॥

**पाथेयतीर्थाजीकूलसात्रासाहाश्च माठरः।**
**भक्षाली मद्रकूलं चाराज्ञी पल्ली च बर्बरः ॥१३३॥**

पाथेयो ग्रामः, पाथेयकः। तैर्थकः, आजीकूलकः, सात्रासाहकः, माठरकः। भाक्षालकः, माद्रकूलकः। आसमन्ताद् राजत इति आराज्ञी नाम नगरी। तत्र भव आराज्ञकः। पल्ली भिल्लनिवासः, पाल्लकः। बर्बरो देशविशेषः, बार्बरक ॥१३३॥

**साकेतदक्षिणापथपट्टाराः कुक्षीरुज्जयनी।**
**कूलात् सौवीरेष्वथ नात्रि समुद्रान्मनुष्ये च ॥१३४॥**

साकेते भवः साकेतकः। दक्षिणः पन्था दक्षिणापथः। गणे निपातनात् पूर्वपदान्तस्य दीर्घः। यद्वा दक्षिणस्या दिशः पन्था दक्षिणापथः। तत्र भवो दाक्षिणापथकः। पट्टारो ग्रामः, पाट्टारकः। कौक्षकः, औज्जनयकः। कूले भवः कौलक. सौवीरश्चेत्। कौलोऽन्यः। समुद्रे भवा सामुद्रिका नौः, सामुद्रको मनुष्यः। अन्यत्र सामुद्रं लवणं जलं वा ॥१३४॥

**राजगृहमित्रवर्द्धावरुणद्वीपान्तरीपाश्च।**
**माहकमहिषमानाः स्थल्यन्ता मद्रकानकाट्टाश्च ॥१३५॥**

राजगृहं नगरम्, तत्र भवो राजगृहकः। मित्रवर्द्धे ग्रामे भवो मैत्रवर्द्धकः। वर्द्धमानस्तु 'मैत्रको वार्चकः' (गण० पृ० १६५) इत्युदाजहार। अरुणो ग्रामः आरुणकः। द्वैपकः, आन्तरीपकः। माहकानां स्थली, माहकस्थली, तत्र भवो माहकस्थलकः। एवं माहिषस्थलकः, मानस्थलकः, माद्रकस्थलकः, आनकस्थलकः, आर्ट्टस्थलकः ।।१३५।।

**राजसमुद्रे दण्डायन एभ्योऽपि स्थली परात्र गणे।**

राजस्थलकः, सामुद्रस्थलकः, दाण्डायनस्थलकः। इति धूमादिः।

**[अथ कच्छादिः]**

'कच्छादिभ्यश्च' (अ० ४।२।१३३)। एभ्यो देशवाचिभ्योऽण् स्याच्छेषेऽर्थ इति तदर्थः। वुञादेरपवादोऽयम्। तत्रापेक्षिताः कच्छादयः संगृह्यन्ते सार्द्धपद्येन।

**अथ कच्छसिन्धुसाल्वाः कुरुकम्बोजौ च वर्णु गन्धारौ ।।१३६।।**

कच्छे भवः काच्छः। सिन्धुषु भवः सैन्धवः। एवं साल्वः। कुरुषु भवः कौरवः। 'विभाषा कुरुयुगन्धराभ्याम्' (अ० ४।२।१३०) इत्यनेन वुञपि—कौरवकः। काम्बोजः। वर्णु ह्रदविशेषः। तत्समीपो देशोऽपि वर्णुस्तत्र भवो वार्णवः। गान्धारः ।।१३६।।

**कश्मीरमधुमद्द्वीपाजवाहानूपरङ्कवः**

**कलूतरोऽनुषण्डश्च कच्छादौ स्याद्विजापकः ।।१३७।।**

काश्मीरः। मधुमान्नाम पर्वतः, तत्र भवो माधुमतः। द्वैपः। समुद्रसमीपवर्त्तिनि द्वीपे भवस्तु द्वैप्य एव—'द्वीपादनुसमुद्रं यञ्' (अ० ४।३।१०)। आजवाहः, आनूपः। रङ्कुर्मृगजातिविशेषः, तस्य निवासो देशोऽपि रङ्कुः। तत्र भवो राङ्कवः। कालूतरः। वर्द्धमानस्तु कुलूतशब्दं पपाठ (गण० पृ० १६४)। उलूपामिति अन्ये पेठुः। आनुषण्डः। आनुखण्ड इति केचित्। वैजापकः।

कच्छादिभ्यः शब्देभ्यो मनुष्यतत्स्थयोर्वुञ्—काच्छको मनुष्यः, काच्छकमस्य हसितम्। एवं सर्वत्र। 'अपदातौ साल्वात्, गोयवाग्वोश्च' (अ० ४।२।१३५,१३६) इति सूत्राभ्यां वुञ्—साल्वको मनुष्यः। अपदातौ

किम् ? साल्वः, पदातिः, व्रजति — साल्वको गौः, साल्विका यवागूः। अत्र कच्छादयः शब्दाः प्रायशो जनपदवाचिनः ॥१३७॥ इति कच्छादिः ।

[अथ गहादिः]

'गहादिभ्यश्च' (अ० ४।२।१३८)। एभ्यश्छः स्याच्छेषेऽर्थे, इति तदर्थः। तत्रापेक्षिता गहादयः संगृह्यन्ते पद्यपञ्चकेन।

गहानृशंसी समपूर्वपक्षौ खाडायनानन्तरवैजवापाः ।
इष्वग्रशौङ्ग्युत्तरभौजिवाङ्गाः श्रौतीष्वनीकैकपलाशमङ्गम् ॥१३८॥

गहे ग्रामे भवो गहीयः। नॄन् शंसतीति नृशंसः, न नृशंसोऽनृशंसः, तस्यापत्यमानृशंसिः। तस्येदं तत आगतं वा आनृशंसीयम्। समादागतं समीयम्। पूर्वपक्षस्येदं पूर्वपक्षीयम्। खाडायनो मुनिः, खाडायनीयम्। अनन्तरीयम्। बैजवापीयम्। इषोरग्रमिष्वग्रम्, तस्यायमिष्वग्रीयो व्रणः। इष्वग्रं नाम ग्राम इति केचित्। शुङ्गस्यापत्यं शौङ्गिस्तस्यायं शौङ्गीयश्छात्रः। उत्तरीयम्, भौजीयम्, वाङ्गीयम्। श्रुतस्यापत्यं श्रौतिस्तस्यायं श्रौतीयः। इषूणामनीकमिष्वनीकम्, इष्वनीकीयः। एकश्चासौ पलाशश्च एकपलाशः, एकपलाशीयम्। अङ्गेषु भवमाङ्गीयम् ॥१३८॥

अन्तस्थोत्तमदेवशर्मविषमा वाराटकिश्चासुदा-
ध्यश्विः शैशिरिरेकशाखमगधौ तन्त्वग्रकाठेरणी ।
दन्ताग्रापरपक्षमुत्तमसमानाभ्यां तु शाखं परं
शाखान्तोऽधमशब्द एकपदतो ग्रामश्च वृक्षः परः ॥१३९॥

अन्ते तिष्ठतीत्यन्तस्थः, अन्तस्थीयः। अन्तस्था नगरीति अन्ये। उत्तमीयम्। देवशर्म्मणोऽपत्यं दैवशर्म्मिः, दैवशर्म्मीयः। विषमे देशे भवो विषमीयः, विषमादागतं विषमीयम्। समविषमौ ग्रामाविति केचित्। वराटकस्यापत्यं वाराटकिः, वाराटकीयः। आसुनोतीत्यासुत्, क्विबन्तमेतत्, आसुतीयम्। अश्वमधिरूढोऽध्यश्वस्तस्यापत्यमाध्यश्वि, आध्यश्वीयम्। शैशिरीयम्। एका समाना शाखा यस्य स एकशाखः, एकशाखीयम्। मगधीयम्। तन्त्वग्रीयम्। कठेरणस्य काठेरणिस्तस्येदं काठेरणीयम्।

दन्तस्याग्रं दन्ताग्रम्, तस्येदं दन्ताग्रीयम्। दन्ताग्रं ग्राम इति केचित्। अपरपक्षे भव अपरपक्षीयः। पूर्वपक्षापरपक्षाभ्यां कालाट्ठञ् (अ० ४।३।११)

पौर्वपक्षिक आपरपक्षिक इत्यपि। उत्तमा शाखा यस्येत्युत्तमशाखस्तस्येदमुत्तमशाखीयम्। एवं समानशाखीयम्, अधमशाखीयम्। कारिकायां शाखेत्यदन्तानुकरणम्। एकेति पदात् परो ग्रामो वृक्षश्च एकग्रामीयम्, एकवृक्षीयम् ॥१३९॥

सौमित्रिरवस्यन्दनलावेरण्याग्निशर्मि चामित्रिः।
कामप्रस्थसमानग्रामौ वाल्मीकिराहिंसिः ॥१४०॥

सौमित्रीयम्, अवस्यन्दनीयम्। अवस्यन्दीय इति केचित्। लवेरणस्यापत्यं लावेरणिस्तस्येदं लावेरणीयम्। एवमाग्निशर्म्मीयम्। एतदन्तः समाहारद्वन्द्वः। आमित्रीयम्। कामप्रस्थे भवः कामप्रस्थीयः। समानग्रामीयः। वाल्मीकीयं तपोवनम्। आहिंसीयम् ॥१४०॥

मुखपार्श्वतसोर्लोपो भूमध्ये मध्यमं च मध्यस्य।
अण् तु चरणसम्बन्धेनास्मादिष्टो निवासरूपेऽर्थे ॥१४१॥

मुखशब्दप्रकृतिकस्य पार्श्वशब्दप्रकृतिकस्य च तसो लोपः स चान्त्यस्यालः। सप्तम्यन्ताभ्यामाभ्याम् आद्यादित्वात् (सि० कौ० २८४९) तसिः। मुखतीयम्, पार्श्वतीयम्। मुखे जातमित्यादिरर्थः। यद्वा मुखत आगतं मुखतीयम्, एवं पार्श्वतीयम्। भूमध्ये वर्त्तमानस्य मध्यशब्दस्यात्र गणे ग्रहणं मध्यमादेशश्च भवति न त्वन्यत्रार्थे वर्त्तमानस्येत्यर्थः। पृथिवीमध्ये भवो मध्यमीयः। चरणसम्बन्धन निमित्तेन त्वस्मात् पृथिवीमध्यवाचिनो मध्यशब्दान्निवासलक्षणेऽर्थेऽण् प्रत्ययो मध्यमादेशश्चेत्यर्थः। पृथिवीमध्यं निवास एषां चरणानां ते माध्यमाश्चरणाः कठादय इति यावत्। स्पष्टं चेदमत्र सूत्रे भाष्यकैयटयोः ॥१४१॥

कुग्देवजनपराणां व्याडिरथ क्षैमवृद्धिराश्वत्थिः।
औदुगाहमानिरेको वैन्दविरथ वेणुकादेश्छण् ॥१४२॥

देवादीनां छप्रत्ययसन्नियोगेन कुगागमः। देवस्येदं देवकीयम्। एवं जनकीयम्, परकीयम्। व्यडस्यापत्यं व्याडिस्तस्येदं व्याडीयम्, क्षैमवृद्धीयम्, आश्वत्थीयम्। औदुगाहमानीयम्, एकीयम्। विन्दोः कस्यचिन्मुनेरपत्यं वैन्दविः। बाह्वादेराकृतिगणत्वादिञ्। वैन्दवीयम्। वेणुकादिभ्यश्छप्रत्ययो णित्। वैणुकीयम्, वैत्रकीयम्, औत्तरपदकीयम्। स्वकीयमिति तु स्वार्थिककन्नन्तात् स्वशब्दाद् गहादेराकृतिगणत्वाच्छः।

'गहादिभ्यश्च' इत्यत्र देशे इत्यनुवृत्तावपि पूर्वपक्षादिवददेशवाचिनोऽपि छप्रत्ययं लभन्त एव। केवलात् स्वशब्दादणेव, द्वारारित्वाद् (अ० ७।३।४) ऐजागमः, सौवम्। स्वीयमित्यत्र तु प्राक्क्रीताच्छः। आकृतिगणोऽयम्। तेन नान्तरीयमित्यादि सिद्धयति। तथाहि विनार्थकाद् अन्तराशब्दाच्छः, ततो नशब्देन समासे स्वार्थे कनि नान्तरीयकमिति भवति। अविनाभूतमिति तदर्थः। एवमन्यदुदाहरणीयम् ॥१४२॥ इति गहादिः॥

## [अथ सन्धिवेलादिः]

'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (अ० ४।३।१६)। सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यादिति तदर्थः। ठञादिबाधनार्थं वचनम्। ऋतुभ्यः—ग्रैष्मम्, वासन्तम्। नक्षत्रेभ्यः—आश्विनम्, भारणम्। अत्रापेक्षिताः सन्धिवेलादयः संगृह्यन्ते सार्द्धपद्येन।

सन्धिवेला पञ्चदशी सन्ध्याऽथ फलपर्वणोः।
संवत्सरात् पौर्णमासी प्रतिपत् सचतुर्दशी।
अमावास्या त्रयोदश्यौ सन्धिवेलादिके गणे ॥१४३॥

सन्धिवेला सन्धिकालस्तत्र भवं सान्धिवेलम्। पञ्चदशानां पूरणी पञ्चदशी, पाञ्चदशम्। सन्ध्यायां भवं सान्ध्यं कर्म। साम्वत्सरं फलं पर्व वा। साम्वत्सरिकमन्यत्। पौर्णमासम्। पूर्णो मासो यस्यां सा पूर्णमासी, सैव तिथिः पौर्णमासी। प्रज्ञादित्वात् स्वार्थिकोऽणिति हरदत्तादयः। तस्यां भवं पौर्णमासम्। प्रतिपद्यन्तेऽह्रानि यस्याः सकाशात् सा प्रतिपत् पक्षतिः, तत्र भवं प्रातिपदम्। चतुर्दशानां पूरणी चतुर्दशी, चातुर्दशम्।

अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावास्या। 'अमान्तिकसहार्थयोः' (?)[1]। ['अमावस्यदन्यतरस्याम्' (अ० ३।१।१२२)] इति सूत्रेणामापूर्वाद् वसतेर्ण्यति वृद्धौ पक्षे ह्रस्वत्वं निपात्यते। अमावास्यायां भव आमावास्यः। ह्रस्वमध्याद् अमावस्याशब्दादप्यण्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात्—अमावस्यः। 'अमावास्याया वा, अ च' (अ० ४।३।३०,३१) इति सूत्राभ्यां वुनि अप्रत्यये च अमावास्यकः, अमावास्य इत्यपि भवति। उक्तसूत्रद्वयविहितौ प्रत्ययौ समनन्तरोक्तहेतुनाऽमावास्याशब्दादपि भवत एव। त्रयोदश्यां भवं त्रायोदशम् ॥१४३॥ इति सन्धिवेलादिः॥

---

१. अनुपलब्धमूलमिदम्। कस्यचित् कोशस्य सम्भाव्यते।

## [अथ दिगादिः]

'दिगादिभ्यो यत्' (अ० ४।३।५४)। एभ्यो भवार्थे यत्प्रत्ययः स्यादिति तदर्थः। तत्र के दिगादय इत्यपेक्षायां संगृह्यन्ते सार्द्धपद्यन।

**दिग्वर्गपूगा गणपक्षधाय्या मेधादिसाक्ष्यन्तरवेशवंशाः।**
**मेषान्तयूथा मुखदेशकालमित्राणि पन्था जघनं रहश्च॥१४४॥**

दिशि भवं दिश्यम्। एवं वर्ग्यम्, पूग्यम्, गण्यम्, पक्ष्यम्, धाय्या सामिधेनी धाय्यम्। 'हलो यमां यमि' (अ० ८।४।६४) इति लोपाभावे त्रियकारकमपि रूपम्। मेधा धारणावती धीः, मेध्यम्, साक्षाद् द्रष्टा साक्षी, तत्र भवं साक्ष्यम्। अन्तर्यम्। वेशो नेपथ्यं वेश्यागृहं च, तत्र भवा वेश्या। वंशे कुले भवो वंश्यः। मेष्यः, अन्त्यः, यूथ्यः। मुखजघनयोरत्राशरीरावयवार्थं पाठः। यथा शरीरस्य मुखं प्रधानमग्रभागो वा जघनं निकृष्टं पश्चाद्भागो वा, तथा मुखजघनसदृशेऽन्यत्रार्थे यद्युपचारेणानयोर्वृत्तिस्तदापि यत् स्यात्। तद्यथा—सेनामुखे प्रधाने पदेऽग्रभागे वा भवो मुख्यः। एवं सेनाजघने निकृष्टे पदे पश्चाद्भागे वा भवो जघन्यः। देश्यः, काल्यः, मित्र्यः। पथि भवं पथ्यम्, रहस्यम् ॥१४४॥

**न्यायालीकाकाशोखाः संज्ञायां त्विहोदकं प्रोक्तम्।**

न्याये भवं न्याय्यम्, अलीक्यम्, आकाश्यम्। उखा पात्रविशेषः, तत्र भवमुख्यम्। उदकात् संज्ञायां यत् स्यात्, उदक्या रजस्वला। औदकमन्यत्। इति **दिगादिः**॥

## [अथ परिमुखादिः]

'अव्ययीभावाच्च' (अ० ४।३।५९)। तत्र भव इत्यर्थे ञ्यः प्रत्ययो भवतीति तदर्थः। अत्र सिद्धान्तकौमुद्यां 'परिमुखादिभ्य एवेष्यते' (सि० कौ० १९९८)इत्युक्तं दीक्षितैः। तस्यायं भावः—दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ इत्यादि परिमुखादिः पठ्यते। तत्सामर्थ्यादत्र सूत्रेऽव्ययीभावशब्देन परिमुखादिरेव गृह्यते तस्य गणस्य कार्यान्तराभावादिति।

नन्वेवं परिमुखादेरित्येव सूत्रयितुमुचितम् उत्तरत्राव्ययीभावादित्यस्यापेक्षायामपि तत्रैव तत्करणमौचित्यादिति चेत्, अत्राह हरिदत्तः—परिमुखादेरित्युच्यमाने समासान्तरादपि ञ्यः प्रसज्येत, अव्ययीभावग्रहणात्त्वन्यत्राणेव इति। अत्रापेक्षिताः परिमुखादयः संगृह्यन्ते सार्द्धपद्येन।

**परितोमुखहनुशीलोलूखलशीरोष्ठरथमथोपात् तु ॥१४५॥**
**स्थूलोपानच्छारस्थानकलापाश्च शालोऽपि ।**
**अनुतो गङ्गाभङ्गौ पदपथि शूर्पं परिमुखादौ ॥१४६॥**

परिमुखं भवः पारिमुख्यः सेवकः। स हि यतो यतः स्वामिनो मुखं तत्र तत्र सर्वतो भवन्नेवमुच्यते। यद्वा परिमुखं भवं पारिमुख्यम्। मुखं वर्जयित्वाऽन्यत्र भवमित्यर्थः। यदा परिशब्दादिह सर्वतो भावोऽवगम्यते तदास्मादेव निपातनादव्ययीभावः। यदा तु वर्जनमवगम्यते तदा तु **'अपपरिबहिरञ्चवः पञ्चम्या'** (अ० २।१।१२) इत्यव्ययीभाव इत्याहुः।

पारिहनव्यम्, पारिशील्यम्, पार्युलूखलम्, पारिशीर्यम्। पारिसीर्यमिति **अन्ये**। पार्योष्ठ्यम्, पारिरथ्यम् ॥१४५॥

स्थूलस्य समीप इत्युपस्थूलं भवमौपस्थूल्यम्, औपोपानह्यम्, औपशार्यम्, औपस्थान्यम्, औपकलाप्यम्, औपशाल्यम्। गङ्गायाः समीप इत्यनुगङ्गम्, **'अनुर्यत्समया'** (अ० २।१।१५) इत्यव्ययीभावः, आनुगङ्ग्यम्। एवमानुभङ्ग्यम्, आनुपद्यम् आनुपथ्यम्, आनुशूर्प्यम्।

अव्ययीभावादन्यत्र परिगत मुख परिमुखम्, परितः सर्वतो मुखानि द्वाराणि यस्येति वा परिमुखम्, तत्र भवं पारिमुखमेव। आकृतिगणोऽयं तेन आनुमाष्यम् आनुयवम्, प्रातिशाख्यमित्यादि संग्रहः। अत एव प्रातिशाख्यमित्यत्र **'अव्ययीभावाच्च'** (अ० ४।३।५९) इति ञ्यः (द्र०—माध० भ्वा० ९०) इति **माधवः** ॥१४६॥ इति **परिमुखादिः** ॥

[अथ **अध्यात्मादिः**]

**'अन्तःपूर्वपदाट् ठञ्'** (अ० ४।३।६०) इति सूत्रे **'अध्यात्मादिभ्यश्च'** इति **काशिका**, तथा **'अध्यात्मादिभ्यष्ठञ् इष्यते'** (द्र०—सि० कौ० २०००) इति **कौमुदी**। तत्रापेक्षिता अध्यात्मादयः संगृह्यन्ते।

**अध्यात्ममुक्तीहपरत्रशेषाऽकस्मादमुत्रोर्ध्वमुहूर्त्तदेहाः ।**
**परेहसर्वादिह लोकशब्दोऽधितस्तु देवोऽपि च भूतशब्दः ॥१४७॥**

आत्मनि इत्यध्यात्मम्, तत्र भवमाध्यात्मिकम्। मुक्तौ भवं मौक्तिकम्, ऐहिकम्, पारत्रिकम्, शेषे भवः शैषिकः। अकस्मादित्यव्ययेन हेतुशून्यः कालो लक्ष्यते, तत्र भव आकस्मिकः। आमुत्रिकम्। ऊर्ध्वशब्दपूर्वौ मुहूर्त्तदेहौ ततोऽद्वन्द्वे निवेशः। और्ध्वमौहूर्त्तिकम्, ऊर्ध्वंमुहूर्त्ताद्भवमित्यर्थः। और्ध्वदैहिकम्।

पारलौकिम्, ऐहलौकिकम्, सार्वलौकिकम्, आधिदैविकम्, आधिभौतिकम्। अनुशतिकादित्वाद् (अ० ७।३।२०) उभयपदवृद्धिः। अध्यात्मादिराकृतिगणः। तेन नैष्ठिकं ब्रह्मचर्यम्, आमुष्मिकं सुखमित्यादेः संग्रहः ॥१४७॥ इति अध्यात्मादिः ॥

[अथ ऋगयनादिः]

'अण् ऋगयनादिभ्यः' (अ० ४।३।७३)। ऋगयनादिभ्यो भवे व्याख्याने चार्थेऽण् स्यादिति तदर्थः। तत्रापेक्षिता ऋगयनादयः शब्दाः सगृह्यन्ते सार्द्ध-पद्यद्वयेन।

अथ ऋगयनपुनरुक्तन्यायमुहूर्त्तनिमित्तं च।
शिक्षोपनिषद्विद्या वास्तुक्षत्राङ्गपूर्विका विद्या।
संवत्सर उद्यावोत्पातोत्पादा निरुक्तनिगमौ च ॥१४८॥

ऋचामयनम् ऋगयनम्। क्षुभ्नादित्वात् (अ० ८।४।३९) णत्वाभावः। तत्र भवस्तस्य व्याख्यानो वा ग्रन्थ आर्गयनः। पौनरुक्तः, नैयायः, मौहूर्त्तः, नैमित्तः। शैक्षः, औपनिषदः, वैद्यः, वास्तुविद्यः, क्षात्रविद्यः, आङ्गविद्यः। सांवत्सरः। यवानां विकारो यावः, उत्कृष्टो याव उद्यावः। तत्र भवस्तस्य व्याख्यानो वा ग्रन्थ औद्यावः, औत्पातः, औत्पादः, नैरुक्तः। निगच्छन्ति निश्चिन्वन्त्यनेनेति निगमो ग्रन्थविशेषः। नैगमः ॥१४८॥

मानभावाविचितयश्छन्दःपूर्वाः पदात् परम्।
व्याख्यानं च व्याकरणं भिक्षेत्येवं गणो मतः ॥१४९॥

छन्दसां मान छन्दोमानं छान्दोमानः। छान्दोभावः, छान्दोविचितः, पादव्याख्यानः, वैयाकरणः, भैक्षः। इह ऋगयनोपनिषदादिभ्यो 'बह्वचोऽन्तोदात्ताट्ठञ्' (अ० ४।३।६७) इति ठञ्, न्याय विद्या भिक्षा इत्यादितो 'द्व्यच-जृद्ब्राह्मण' (अ० ४।३।७२) इति ठक्, व्याकरणशब्दात्तु 'वृद्धाच्छः' (अ० ४।२।११४) प्राप्त इति ठञादेरपवादोऽयमण् ॥१४९॥ इति ऋगयनादिः ॥

[अथ शुण्डिकादिः]

'शुण्डिकादिभ्योऽण्' (अ० ४।३।७६)। एभ्य आयस्थानेभ्यस्तत आगत इत्यर्थेऽण् स्यादिति तदर्थः। तत्रापेक्षिताः शुण्डिकादय एकेन पद्येन संगृह्यन्ते।

शुण्डिककृकणस्थण्डिलतृणोदपानोपलानि तीर्थं च।
पर्णं भूमिरिति बुधैः प्रपठ्यते शुण्डिकादिगणः ॥१५०॥

एत्येनं स्वामीति स्वामिनमयमेतीति वा आयः स्वामिग्राह्यो भागः, स यस्मिन्नुत्पद्यते तदायस्थानं शुण्डिकः शुण्डिका वा सुरापणस्तत आगतः शौण्डिकः। कृकणः पक्षिविशेषः, कार्कणः। स्थाण्डिलः, तार्णः, औदपानः, औपलः, तैर्थः। पार्णः, भौमः ॥१५०॥ इति शुण्डिकादिः ॥

[अथ इन्द्रजननादिः]

'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' (अ० ४।३।८८)। एभ्योऽधिकृत्य कृते ग्रन्थ इत्यर्थे छः स्यादिति तदर्थः। शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम्, क्लीबत्वं निपातनात्। यमसभीयः। किरातश्चार्जुनश्च किरातार्जुनावधिकृत्य कृतं काव्यं किरातार्जुनीयम्।

इन्द्रस्य जननमधिकृत्य कृतो ग्रन्थ इन्द्रजननीयः। इन्द्रजननादिराकृतिगण एव। तेन प्रद्युम्नाभिगमनमधिकृत्य कृतो ग्रन्थः प्रद्युम्नाभिगमनीयः, विरुद्धभोजनीय इत्यादयो लक्ष्यानुसारेणात्र गणे बोध्याः। इति इन्द्रजननादिः॥

[अथ शण्डिकादिः]

'शण्डिकादिभ्यो ञ्यः' (अ० ४।३।९२)। एभ्योऽभिजनवृत्तिभ्यः प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थे ञ्यः प्रत्ययः स्यादिति तदर्थः। तत्रापेक्षिताः शण्डिकादयः सगृह्यन्ते।

शण्डिकः शकशङ्खौ च केशसेनौ तु सर्वतः।
बोधः शटो रकश्चेति शण्डिकादिरुदीरितः ॥१५१॥

शण्डिकोऽभिजनोऽस्य शाण्डिक्यः। अभिजायत एभ्य इत्यभिजनाः पित्रादय पूर्वजाः, यत्र पूर्वजैरुषितं सोऽपि देशो ग्रामो वाऽभिजन इत्युच्यते। शाक्यः, शाङ्ख्यः, सार्वकेश्यः, सार्वसेन्यः। [बौध्यः, शाट्यः, राक्यः।] मूलकारिकायां सेनेति ह्रस्वान्तस्यानुकरणम्। सर्वतः=सर्वशब्दात्। शकादयो जनपदा बोध्याः। बोधादयो ग्रामविशेषवाचिनः॥ १५१॥ इति शण्डिकादिः॥

[अथ सिन्ध्वादिः]

'सिन्धुतक्षशिलादिभ्योऽणञौ' (अ० ४।३।९३)। सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थ इति तदर्थः। तत्रापेक्षितं गणद्वयं संगृह्यते सार्द्धपद्यद्वयेन।

सिन्धूरसे गन्दिका च साल्वकश्मीरवर्णवः।
दरत्कम्बोजकिष्किन्धा गन्धारो मधुमानिति ॥१५२॥

सिन्धुः समुद्रो नदी वा सिन्धवो जनपदो वा अभिजनोऽस्य स सैन्धवः। उरसा जनपद औरसः। गन्दिका नगरी गान्दिकः। साल्वाः कश्मीराश्च जनपदाः [साल्वः, काश्मीरः]। वर्णु र्नदस्तत्तटवर्त्ती देशश्च वार्णवः। दरदो जनपदो दारदः। काम्बोजः। किष्किन्धा नगरी कैष्किन्धः। गन्धारो जनपदो गान्धारः। मधुमान् पर्वतो माधुमतः ॥१५२॥ इति सिन्ध्वादिः ॥

[अथ तक्षशिलादिः]

तक्षशिला किन्नर इह वत्सोद्धरणं च कंसोऽपि।
अवसानकाण्डधारौ पर्वतकैर्मेदुरोऽथ कर्णान्तौ।
सिंहक्रोष्टू बर्वरसंकुचितग्रामणीछगलमिति च ॥१५३॥

तक्षशिला नगरी ताक्षशिलः। कैन्नरः,वात्सोद्धरणः, कांसः। आवसानः, काण्डधारः, पार्वतः, कैर्मेदुरः। कर्णान्ताविन्यस्य सिंहक्रोष्टू इति विशेष्यम्। सैंहकर्णः, क्रौष्टुकर्णः, बार्वरः, सांकुचितः, ग्रामणः, छागलः।

अस्मिन् गणद्वये केचिज्जनपदवचनाः केचिद् ग्रामनगरादिवचनाः। तत्र सिन्धुगन्दिकागन्धारादयो ये सिन्ध्वादयस्ते प्रायेण कच्छादिष्वपि पठ्यन्ते (द्र०—पृ० १४२, पं० १२)। तेभ्यस्तत एवाणि सिद्ध मनुष्यवुञो (अ० ४।२।१३४) बाधनार्थं वचनम्। तक्षशिलादिषु वृद्धेभ्यश्छस्य वाहीकग्रामवाचिभ्यष्ठञ्ञिठयोरन्येभ्यस्त्वणो बाधनार्थं वचनमिति बोध्यम् ॥१५३॥ इति तक्षशिलादिः ॥

[अथ शौनकादि]

'शौनकादिभ्यश्छन्दसि' (अ० ४।३।१०६)। एभ्यस्तृतीयान्तेभ्यः प्रोक्तमित्यर्थे छन्दसि वाच्ये णिनिः स्यादिति तदर्थः। तत्रापेक्षिताः शौनकादयः संगृह्यन्ते पद्यद्वयेन।

शौनकोऽथ तलवाजसनेयौ रज्जुकण्ठकठशाठकषायाः।
रज्जुभारपरुषांसकदण्डा अश्वपेज इह शाङ्गरवश्च ॥१५४॥

शौनकेन प्रोक्तं छन्दोऽधीयते विदन्ति वा शौनकिनः। 'छन्दोब्राह्मणानि च तद्विषयाणि' (अ० ४।२।६६) इत्यनेन छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीति नियमात् केवलं प्रोक्तप्रत्यय एवात्र न भवति किन्त्वध्येत्राद्यर्थकप्रत्ययोऽपि। तस्य प्रोक्ताल्लुक् (४।२।६४)। एवमग्रेऽपि बोध्यम्।

तालिनः। वाजसनाया अपत्यं वाजसनेयस्तेन प्रोक्तमधीयते वाजसनेयिनः। राज्जुकण्ठिनः, काठशाठिनः, काषायिणः। राज्जुभारिणः, पारुषांसकिनः। क्वचित् पुरुषांसक इति पाठः। दाण्डिनः, आश्वपेजिनः, शाङ्गंरविणः ॥१५४॥

स्तम्भस्कन्धौ खाडायनशापेयौ च शाष्पेयः।
स्याद्देवदर्शन इतीरितो गणः शौनकादिरयम् ॥१५५॥

स्ताम्भिनः, स्कान्धिनः। खडस्यापत्यं खाडायनः, नडादित्वात् फक्। खाडायनिनः, शापेयिनः, शाष्पेयिनः। सर्वेऽप्येते स्वोपज्ञवेदभागप्रवक्तारः। 'तेन प्रोक्तम्' (अ० ४।३।१०१) इति सूत्रे प्रोक्तमित्यस्य प्रकर्षेणोक्तं प्रोक्तमित्यर्थः, न तु कृतमिति कृते ग्रन्थ इत्यनेन गतार्थत्वापत्तेः। प्रकर्षश्च लोकेऽप्रकाशस्य प्रकाशनलक्षणः। स्पष्टं चेदं भाष्यकैयटयोः ॥१५५॥ इति शौनकादिः।

[अथ कुलालादिः]

'कुलालादिभ्यो वुञ्' (अ० ४।३।११८)। एभ्यस्तृतीयान्तेभ्यः कृते इत्यस्मिन्नर्थे वुञ् स्यात् संज्ञायामिति तदर्थः। तत्रापेक्षिताः कुलालादयः सगृह्यन्ते सार्द्धपद्येन।

कुलालसेनापरिषन्निषादा
मधुश्वपाकौ रुरुदेवराजौ ।
सैरन्ध्ररुद्रौ च बधूसिरिध्रौ
स्यात्कुम्भकारो वरुडोऽप्यनड्वान् ॥१५६॥

कुलालेन कृतं कौलालकम्। घटशरावादिमृद्भाण्डानां साधारणसंज्ञेयम्। सेनया कृतं सैनकम् उपरोधादि। पारिषदकम्, [नैषादकम्,] माधवकम्, शौवपाककम्। द्वारादित्वाद् (अ० ७।३।४) ऐजागमः। रौरवकम्, दैवराजकम्। सीरं हलमेव सैरम्, तद्धरतीति सैरन्ध्रः सैरिकः। सिरिध्रोऽपि स एव। सैरन्ध्रकम्, रौद्रकम्, वाधवकम्, सैरिध्रकम्, कौम्भकारकम्, वारुडकम्, आनडुहकम् ॥१५६॥

कर्मारश्चण्डालो ब्रह्मेति गणः स्मृतः

कार्मारिकम्, चाण्डालम्, ब्राह्मकम्। सर्वेऽप्येते तत्तत्कृतवस्तुवृत्तसंज्ञाभूता इति बोध्यम्। इति कुलालादिः॥

[अथ रैवतिकादिः]

'रैवतिकादिभ्यश्छः' (अ० ४।३।१३१)। एभ्यस्तस्येदमित्यर्थे छः स्यादिति तदर्थः। तत्रापेक्षिता रैवतिकादयः संगृह्यन्ते।

अथ रैवतिकः।

स्वापिशिगौरग्रीवी तथौदमेघिश्च वैजवापिश्च ॥१५७॥

रेवत्या गोत्रापत्यं रैवतिकः। 'रेवत्यादिभ्यष्ठक्' (अ० ४।१।१४६) इति ठक्। तस्येदं रैवतिकीयम्। स्वपिशस्य गोत्रापत्यं स्वापिशिः, अत इञ्। एवमग्रेऽपि। स्वापिशीयः, गौरग्रीवीयः, औदमेघीयः, वैजवापीयः॥१५७॥

स्यात् क्षैमवृद्धिरौदात् परस्तु वापिर्गणेऽत्र मतः।

क्षैमवृद्धीयः, औदवापीयः। अत्र सर्वत्र गोत्रप्रत्ययान्ततया 'गोत्रचरणाद् वुञ्' (अ० ४।३।१२६) इति प्राप्तस्य वुञोऽपवादः। इति रैवतिकादिः॥

[अथ बिल्वादिः]

'बिल्वादिभ्योऽण्' (अ० ४।३।१३६)। एभ्योऽण् स्याद् विकारेऽवयवे चार्थे इति तदर्थः। अञ्मयटोरपवादोऽयम्। अत्रापेक्षिता बिल्वादयः संगृह्यन्ते।

बिल्वव्रीहिकाण्डमसूरमुद्गेक्षुगोधूमाः ॥१५८॥

बिल्वस्य विकारो बैल्वो यूपः। बिल्वस्यावयवो बैल्वी शाखा। व्रीहीणां विकारो व्रैह ओदनः। काण्डं भस्म। [मासूरम्, मौद्गम्।] ऐक्षवमिक्षुविकारः। [गौधूमम्]॥१५८॥

कर्पासीकर्कन्धूगवेधुका वेणुपाटलकुटीराः।
एवं बिल्वादिगणः सम्प्रोक्तः शाब्दिकधुरीणैः॥१५९॥

कार्पासं वासः। कर्कन्धूः क्षुद्रबदरी, कार्कन्धवम्। गवेधुका ओषधिविशेषः, गावेधुकम्। वैणवम्, [पाटलम्, कौटीरम्।] अनुक्तमूहनीयम्॥१५९॥ इति बिल्वादिः॥

[अथ पलाशादिः]

'पलाशादिभ्यो वा' (अ० ४।३।१४१)। एभ्योऽञ् वा स्याद् विकारेऽवयवे चार्थ इति तदर्थः । तत्रापेक्षिताः पलाशादयः संगृह्यन्ते।

पलाशः खदिरः शिंशपा पुलाकविकङ्कतम् ।
यवासश्च शिरीषं च करीरस्यन्दनाविति ॥१६०॥

पलाशस्य विकारोऽवयवो वा पालाशम्, खादिरम्, [शैंशपम्]। पुलाकस्तुच्छधान्यम्, पौलाकम् । पूलाक इति अन्ये । पूलास इति पाठे पूलासो ग्रामविशेषः । तस्यैकदेशो पौलासः । [वैकङ्कतम् । यावासम्, शैरीषम्, कारीरम्।] स्यन्दनस्यावयवो स्यान्दनं रथाङ्गम् । स्पष्टमन्यत्॥१६०॥इति पलाशादिः॥

[अथ शरादिः]

'नित्यं वृद्धशरादिभ्यः' (अ० ४।३।१४४)। एभ्यो भक्षाच्छादनाभ्यामन्यत्र विकारेऽवयवे चार्थे नित्यं मयट् स्याद् भाषायामिति तदर्थः । तत्रापेक्षिताः शरादयः संगृह्यन्ते ।

अथ शरबल्वजदर्भास्तृणसोमौ मृत्कुटी शरादिरयम् ।

शराणां विकारः शरमयम् । बल्वजं तृणजातिविशेषः । [बल्वजमयम् ।] दर्भमयम्, [तृणमयम्, सोममयम्,] मृण्मयम्, [कुटीमयम् ।] इत्यादि । वृद्धोदाहरणमाम्रमयादि । इति शरादिः॥

[अथ तालादिः]

'तालादिभ्योऽण' (अ० ४।३।१५३) एभ्योऽण् विकारेऽवयवे चार्थ इति तदर्थः । तत्रापेक्षितास्तालादयः संगृह्यन्ते ।

तालं धनुषि श्यामाकेन्द्रायुधचापपीयूक्षाः ॥१६१॥

तालस्य विकारस्तालं धनुः । अन्यत् तालमयम् । श्यामाकी यवागूः । इन्द्रायुधं वनस्पतिविशेषः (गण० पृ० १६७) इति वर्द्धमानः । शक्रधनुरिति अन्ये । तस्य विकारोऽवयवो वा ऐन्द्रायुधम् । चापं धनुः । चापी कोटिः । चयेति क्वचित् पाठः । पीयूक्षा पीलुद्रुमः । तद्विकारः पैयूक्षम् (गण० पृ० १६६) इति वर्द्धमानः । चापपीयूक्षा इत्येकः शब्द इति तत्त्वबोधिनीस्वारस्यम् (द्र०—सि० कौ० तत्त्व० २१०४) ॥१६१॥

इन्द्रादशो बार्हिणं चेन्द्राविशश्चेत्ययं गणः ।

विशिदशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात् (सि० कौ० ३८९०) कः। अन्येषामपि (अ० ६।३।१३७) दीर्घः। इन्द्रादृश इन्द्राविशश्च वनस्पतिविशेषः। [ऐन्द्रादृशम्।] बर्हिणोऽवयवो बार्हिणं मयूरपुच्छम्। तद्विकारो बार्हिणः। [ऐन्द्राविशम्।]

अत्रेदं बोध्यम्—तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयटि बर्हिणशब्दात् 'ञितश्च तत्प्रत्ययात्' (अ० ४।३।१५५) इत्यञि शेषेभ्यस्त्वनुदात्तादित्वादञि प्राप्ते तद्बाधनार्थमिदमण्वचनम्। इति तालादिः॥

[अथ रजतादिः]

'प्राणिरजतादिभ्योऽञ्' (अ० ४।३।१५४)। प्राणिवाचिभ्यो रजतादिभ्यश्चाञ् स्याद् विकारेऽवयवे चार्थ इति तदर्थः। तत्रापेक्षिता रजतादयः संगृह्यन्त रजतमित्यादिना। शौकं बाकमिति प्राण्युदाहरणम्।

रजतं लोहं सीसं च कण्टकारत्रिकण्टकौ ॥१६२॥

राजतं रजतविकारः। एवं लौहम्, सैसम्। कण्टकारस्त्रिकण्टकश्च वनस्पतिविशेषः॥१६२॥

दार्वन्तौ तीव्रपीतौ च नीपोदुम्बरदारवः।
रजतादिगणे प्रोक्तौ रोहीतकविभीतकौ ॥१६३॥

तैव्रदारवः। पीतदारोः पैतदारवः। नैपः, औदुम्बरः। दारुविकारो दारवं पीठम्। शिष्टमूह्यम्।[रौहीतकः,बैभीतकः॥१६३॥ इति रजतादिः॥

[अथ प्लक्षादिः]

'प्लक्षादिभ्योऽण्' (अ० ४।३।१६४)। एभ्यः फले विकारे वाऽवयवत्वेन विवक्षितेऽण् स्यादिति तदर्थः। तत्रापेक्षिताः प्लक्षादयः संगृह्यन्त अथेत्यादिना—

अथ प्लक्षेङ्गुदीशिग्रुन्यग्रोधाश्वत्थकक्षतु।
बृहती रुरुकर्कन्धू वेणुः प्लक्षादिरीरितः ॥१६४॥

प्लक्षस्य फलं प्लाक्षम्। फलितस्य द्रुमस्य फलं विकारो वाऽवयवो वा सम्भवत्येव। 'फले लुक्' (अ०४।३।१६३) इति लुक् तु विधानसामर्थ्यान्न भवति। अत एवाह अमरसिंहः—'आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले' (अमर०

का० २, व० ४, श्लो०१८)इति । अञ्बाधनार्थमेवेदं सूत्रम् । तत्र शिग्रुकर्कन्धुवेणुभ्यः 'ओरञ्' (प्र० ४।३।१३९) इति, अन्येभ्योऽनुदात्तादित्वादञ्प्राप्तिः । [ऐङ्गुदम्, शंग्रवम्, नैयग्रोधम्, आश्वत्थम्, काक्षतवम् । बार्हतम्, रौरवम्, कर्कन्धवम्, वैणवम्] ॥१६४॥ इति प्लक्षादिः ॥

[अथ हरीतक्यादि.]

'हरीतक्यादिभ्यश्च' (अ० ४।३।१६७) । एभ्यः फलप्रत्ययस्य लुप् स्यादिति तदर्थः । तत्रापेक्षिता हरीतक्यादयः संगृह्यन्ते पद्यद्वयेन ।

हरीतकी श्वेतपाकी भगीका कण्टकारिका ।
शष्कण्डयज्जुनपाकी च दाडी दोडी च पिप्पली ॥१६५॥

हरीतक्याः फलानि हरीतक्यः । हरीतक्यादिषु व्यक्तिरित्युक्तत्वाल्लिङ्गमेव प्रकृतिवत् । श्वेतपाक्याः फलं श्वेतपाकी ॥१६५॥

रजनी स्यान्नखाद्याथ द्राक्षा कोशातकी तथा ।
काला ध्वाङ्क्षा चिञ्चेति हरीतक्यादिरीरितः ॥१६६॥

नखाद्या रजनी नखरजनी । काला । सुषवी[1] । इह वृद्धेभ्यो 'नित्यं वृद्ध' (अ० ४।३।१४४) इति प्राप्तस्य मयटः, अनुदात्तादिभ्योऽञ इतरेभ्यस्त्वणो लुप् ॥१६६॥ इति हरीतक्यादिः ॥

[अथ माशब्दादिः]

'प्राग्वहतेष्ठक्' (अ० ४।४।१) । अत्र वार्तिकानि—'ठञ्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम्' (द्र०—सि० कौ० २१२६) । वाक्यादयं प्रत्ययविधिः । शब्दो मा कारि त्वयेति य आह स माशब्दिकः । एवं नित्यः शब्द इति च आह स नैत्यशब्दिकः । कार्यशब्दिकः । आकृतिगणोऽयम् । [इति माशब्दादिः ॥]

[अथ प्रभूतादिः]

'आहौ प्रभूतादिभ्यः' (सि० कौ० २१२८) । उपसंख्यानमित्यनुषज्यते । प्रभूतमाह प्राभूतिकः । स्वागतमित्याह स्वागतिकः । 'स्वागतादीनां च' (अ० ७।३।७) इत्यैजागमनिषेधः । स्वध्वर इत्याह स्वाध्वरिकः । अयमपि स्वा-

१. कारिकायां 'सुषवी'शब्दो नोपलभ्यते ।

गतादिः। स्वस्तीत्याह सौवस्तिकः, पार्याप्तिकः। स्वर्गमनमाह सौवर्गमनिकः। इति **प्रभूतादिः** ॥

**[अथ सुस्नातादिः]**

**'पृच्छतौ सुस्नातादिभ्यः'** (सि॰ कौ॰ २१२९)। सुस्नातं पृच्छति सौस्नातिकः। सुखशयनं पृच्छति सौखशायनिकः। अनुशतिकादिरयम्। सौखतपसिक इत्यादि। [इति सुस्नातादिः ॥]

**[अथ परदारादिः]**

**'गच्छतौ परदारादिभ्यः'** (सि॰ कौ॰ २१३०)। परदारान् गच्छति पारदारिकः। गुरोस्तल्पं कलत्रं गुरुतल्पं गच्छति गौरुतल्पिक इत्यादिः। आकृतिगणोऽयम्। यत्तु **'दाण्डमाथिकः, शौक्लमाथिकः, पादविकः'**(गण॰ पृ॰ २१२) परदारादिगण उदाहृतं गणरत्नमहोदधिकृता तत्तु **'माथोत्तरपदपदव्यनुपदं धावति'** (अ॰ ४।४।३७) इत्यनेनैव गतार्थमिति बोध्यम्।[इति **परदारादिः**॥]

**[अथ पर्पादिः]**

**'पर्पादिभ्यः ष्ठन्'**(अ॰ ४।४।१०)। एभ्यः ष्ठन् स्याच्चरतीत्येतस्मिन्नर्थे। तत्र के पर्पादय इत्यपेक्षायां संगृह्यन्त एकेन पद्येन।

**पर्पाश्वव्यालजालानि न्यासोऽश्वत्थो रथस्तथा।**
**पादः पच्चेति पर्पादिगण उक्तो मनीषिभिः ॥१६७॥**

येन पङ्गवश्चरन्ति स दारुनिर्मितशकटाकारोपकरणविशेषः पर्पः। तेन चरति पर्पिकः। स्त्री चेत् पर्पिकी। षित्वान् ङीष्। अश्वेन चरति अश्विकः। व्यालेन सहोपजीवनार्थं यश्चरति स आहितुण्डिको व्यालिकः। एवं जालिकः, न्यासिकः, अश्वत्थिकः,रथिकः। पादाभ्यां चरति पदिकः। पादशब्दः पद्भावं गच्छति प्रत्ययसन्नियोगेन ॥१६७॥ इति **पर्पादिः** ॥

**[अथ वेतनादिः]**

**'वेतनादिभ्यो जीवति'** (अ॰ ४।४।१२)। एभ्यो जीवतीत्यर्थे ठक् स्यादिति तदर्थः। तत्रापेक्षिता वेतनादयः संगृह्यन्ते सार्द्धपद्येन।

**स्युर्वेतनप्रेक्षणशक्तिजालवेशोपवेशोपनिषत्सुखानि ।**
**शय्योपवस्ती स्फिजवाहनोपस्थानोपहस्ता उपदेशपादौ॥१६८॥**

वेतनेन जीवति वैतनिकः कर्मकरः। प्रैक्षणिकः, शाक्तिकः, जालिकः,

वैशिकः, औपवेशिकः, औपनिषदकः, सुखेन जीवति सौखिकः। शाय्यिकः, सुखशय्येत्येकः शब्द इति केचित्। [औपवस्तिकः,] स्फैजिकः, वाहनिकः, औपस्थानिकः, औपहस्तिकः,उपदेशेन जीवति औपदेशिकः, पादिकः ॥१६८॥

उपस्थं च धनुर्दण्डमर्धवाहनमित्ययम्।

उपस्थेन जीवति औपस्थिकी वाराङ्गना। धनुर्दण्डमिति सङ्घातविगृहीतार्थम्। तेन धानुर्दण्डिकः, धानुष्कः, दाण्डिकः, आर्धवाहनिकः। इति वेतनादिः ॥

[अथ उत्सङ्गादिः]

'हरत्युत्सङ्गादिभ्यः' (अ० ४।४।१५)। एभ्यो हरतीत्यर्थे ठक् स्यादित्यर्थः। तत्रापेक्षिता उत्सङ्गादय एकेन पद्येन संगृह्यन्ते।

स्यादुत्सङ्गः पिटाकं च पिटकं चोत्पुटं तथा।
उडुपं च तथोत्पन्नमुत्पतं चेत्ययं गणः ॥१६९॥

उत्सङ्गेन हरत्यौत्सङ्गिकः कुमारः। पैटाकिकः, पैटकिकः, औत्पुटिकः। औडुपिकः, औत्पन्निकः, औत्पतिकः ॥१६९॥ इति उत्सङ्गादिः ॥

[अथ भस्त्रादिः]

'भस्त्रादिभ्यः ष्ठन्' (अ० ४।४।१६)। एभ्यस्तृतीयान्तेभ्यो हरतीत्यर्थे ष्ठन् स्यादिति तदर्थः। एकेन पद्येन भस्त्रादयः संगृह्यन्ते।

भस्त्रांसभारसरटा अंसेभारोऽथ भरणं च प्रोक्तम्।
शीर्षेभारो[1] भस्त्रादौ शीर्षभारश्च ॥१७०॥

भस्त्रा चर्मविकारस्तया हरति भस्त्रिकः। स्त्री चेद् भस्त्रिकी। षित्वान् ङीष्। अंसेभारशब्दे निपातनात् सप्तमीसमासः, 'तत्पुरुषे कृति' (अ० ६।३।१४) इति वाऽलुक्। पक्षेंऽसभारः। अंसेभारिकः, असभारिकः। सरट प्लवविशेषः, सरटिकः। भरटेति केचित्। भरणिकः। अंसेभारादिवच्छीर्षेभारादिशब्दद्वयम्। [शीर्षेभारिकः, शीर्षभारिकः] ॥१७०॥ इति भस्त्रादिः ॥

[अथ अक्षद्यूतादिः]

---

१. कश्चिच्छब्दोऽत्र कारिकायां त्रुटितः प्रतिभाति छन्दोभङ्गत्वात्।

'निर्वृत्तेऽक्षद्यूतादिभ्यः' (अ० ४।४।१९)। एभ्यस्तृतीयान्तेभ्यो निर्वृत्तमित्यर्थं ठक् स्यादिति सूत्रार्थः। पद्यद्वयेनाक्षद्यूतादयः सगृह्यन्ते।

अक्षद्यूतं तथा पादस्वेदनं कण्ठमर्दनम्।
यातोपयातानुगतगतानुगतमित्यपि ॥१७१॥

अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्। पादयोः स्वेदनं पादस्वेदनं पादस्वेदनिकम्। काण्ठमर्दनिकम्। यातं च तदुपयातं यातोपयातिकम्। आनुगतिकम्, गतानुगतिकम् ॥१७१॥

प्रहृतं जानुजङ्घादि जङ्घा तु प्रहृतान्तका।
गतागतमिति प्राज्ञैरक्षद्यूतादिरीरितः ॥१७२॥

जानुप्रहृतिकम्, जाङ्घाप्रहृतिकम्, [जाङ्घाप्रहृतिकम्।] गतं च तदागतं च गतागतम्। तेन निर्वृत्तं गातागतिकम् ॥१७२॥ इति अक्षद्यूतादिः॥

[अथ महिष्यादिः]

'अण् महिष्यादिभ्यः' (अ० ४।४।४८)। एभ्यो धर्म्यमित्यर्थेऽण् स्यादिति सूत्रार्थः। महिष्यादयः संगृह्यन्त एकेन पद्येन।

महिषी प्रजावती प्रव्यनुतः स्याल्लेपिकाथ मणिपाली।
अनुचारकः प्रजापतिर्होता च पुरोहितोऽथ यजमानः ॥१७३॥

धर्म्मादनपेतं धर्म्यम्। महिष्या धर्म्यं माहिष्यम्। प्रजावत्या धर्म्यं प्राजावतम्। प्रलिम्पतीति प्रलेपिका। प्रालेपिकम्, वैलेपिकम्, आनुलेपिकम्। मणीन् पालयतीति मणिपाली, माणिपालम्। अनुचरतीत्यनुचारकः, आनुचारकम्। प्राजापतम्, हौत्रम्, पौरोहितम्, याजमानम् ॥१७३॥ इति महिष्यादिः॥

[अथ किसरादिः]

'किसरादिभ्यः ष्ठन्' (अ० ४।४।५३)। तदस्य पण्यमित्यर्थे किसरादिभ्यः ष्ठन् स्यादिति सूत्रार्थः। एकेन पद्येन किसरादयः संगृह्यन्ते।

किसरोशीरनलदनरदा गुग्गुलुस्तथा।
पर्णीहरिद्रातगरहरिद्रूस्थगला इति ॥१७४॥

किसरं पण्यमस्य किसरिकः। षित्वान् ङीष् किसरिकी। उशीरिकः,

[नलदिकः, नरदिकः,] गुग्गुलुकः। [पर्णिकः, हरिद्रिकः, तगरिकः,] हरिद्रुकः, स्थगलिकः। छगलिक इति अन्ये। किसरादयः सर्वेषु सुगन्धिद्रव्यविशेषवचनाः ॥१७४॥ इति किसरादिः ॥

[अथ छत्रादिः]

'छत्रादिभ्यो णः' (अ० ४।४।६२)। एभ्यस्तदस्य शीलमित्यर्थे णः प्रत्ययो स्यादिति तदर्थः। पद्यद्वयेन[1] छत्रादयः संगृह्यन्ते।

छत्रं शिक्षा प्ररोहो बुभुक्षा सत्यं विक्षामन्द्रचुक्षास्तितिक्षा
स्थोदस्थानं विश्वधा कर्म भक्षा कृष्योपस्थानानृते
स्यात्तपोऽत्र चुराथ विशिखा भिक्षा पुरोडा विशिका इति॥१७५॥

छादनादावरणाच्छत्रमिव छत्रं तच्छीलमस्य छात्रः। गुरुकार्येष्ववहितः सन् तच्छिद्रावरणे प्रवृत्तश्छत्रशीलः शिष्यश्छात्र इत्युच्यते। शिक्षणं शिक्षा शीलमस्य शैक्षः। प्रारोहः, बौभुक्ष औदरिकः, सत्यशीलः सात्यः सत्यवादी। विक्षणं विक्षा वैक्षः। मान्द्रो गम्भीरः। चौक्षः, तैतिक्षः। स्थाशब्दोऽत्र पठ्यते। स उपसर्गपूर्वो गृह्यते। आस्था नियतविषये प्रत्याशा। आस्थः, प्रातिष्ठः। उदस्थानमिव सन्तापशायकं शीलमस्य औदस्थानः। विश्वं दधातीति विश्वधा वसुधा। वैश्वधः। कर्मशीलः कार्मः। 'नस्तद्धिते' (अ० ६।४।१४४) इत्येव टिलोपे सिद्धे 'कार्मस्ताच्छील्ये' (अ० ६।४।१७२) इति टिलोपनिपातनं ज्ञापयति—ताच्छीलिके णप्रत्ययेऽप्यण्कार्याणि भवन्तीति। तेन तपः शीलमस्यास्तापसीत्यादि सिद्धयति। भक्षणं भक्षा। कृष्येति तृतीयान्तं पूर्वान्वयि। कृष्या सह भक्षेत्यर्थः। भाक्षो भक्षणशीलः। कार्षः कृषीवलः। [औपस्थानः ।] आनृतोऽसत्यवादी। चुराशीलश्चौरः। परहृदयप्रवेशरूपा विशिखक्रियापि विशिखेत्युच्यते। वैशिखः। वैशिकोऽप्यस्यैव पर्यायः। पुरोदान पुरोडा। अत्रैव निपातनात् साधुः। पौरोडः ॥१७५॥ इति छत्रादिः ॥

[अथ प्रतिजनादिः]

'प्रतिजनादिभ्यः खञ्' (अ० ४।४।६६)। तत्र साधुरित्यर्थ एभ्यः खञ् स्यादिति सूत्रार्थः। एकपद्येन प्रतिजनादयः संगृह्यन्ते।

जनः प्रतिमहद्विश्वपञ्चसर्वानुतः कुलम्।
परामुष्यपरस्येभ्यः समेदंसम्परायुगः ॥१७६॥

---

१. पद्यद्वयं नोपलब्धमस्माभिः। छन्दःप्रभेदोऽप्यन्वेषणीयः श्लोके।

जनं जनं प्रतीति प्रतिजनम्। तत्र साधुः प्रातिजनीनः। जने जने साधुरित्यर्थः। प्रतिजनमिति वीप्सायामव्ययीभावः। माहाजनीनः। विश्वो जनो विश्वजनः, वैश्वजनीनः। पञ्चसु जनेषु साधुः पाञ्चजनीनः। तद्धितार्थाद् द्विगोः खञ्। निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजना इत्युच्यन्ते। सर्वजनेषु साधुः सार्वजनीनः। अनुगतो जनोऽनुजस्तत्र साधुरानुजनीनः। परस्य कुलं परकुलम्, पारकुलीनः। अमुष्यकुले साधुरामुष्यकुलीनः। एवं पारस्यकुलीनः। अमुष्य परस्य षष्ठ्या निपातनादलुक्। समं च तद्युगं च समयुगम्, सामयुगीनः। ऐदंयुगीनः। समे काले अस्मिश्च काले साधुरित्यर्थः। संयुगे संग्रामे साधुः सांयुगीनः। परस्मिन् युगे साधुः पारयुगीणः। साधुरत्र प्रवीणो योग्यो गृह्यते नोपकारकः। तत्र हि परत्वात् **'तस्मै हितम्'** (अ० ५।१।५) इत्यनेन भाव्यम् ॥१७६॥ इति **प्रतिजनादिः** ॥

## [अथ कथादिः]

**'कथादिभ्यष्ठक्'** (अ० ४।४।१०२)। एभ्यः सप्तम्यन्तेभ्यः साधुरित्यर्थे ठक् स्यादिति तदर्थः। तत्रैकेन पद्येन कथादयः संगृह्यन्ते।

**कथागुणौ विश्वविसं कथापरं**
**वृत्तिर्वितण्डा जनवादकुष्ठवित्।**
**गणो जनेवाद इहायुषः परो**
**वेदो जनोवादः पदं च संग्रहः ॥१७७॥**

कथायां साधुः काथिकः। गौणिकः। विश्वस्य विश्वा वा कथा विश्वकथा। वैश्वकथिकः। विशिष्टा कथा विकथा। तत्र साधुर्वैकथिकः। साङ्कथिकः, वार्त्तिकः, वैतण्डिकः, जानवादिकः। कुष्ठस्य श्वित्रस्य विज्ञानं कुष्ठवित्। कौष्ठविदिकः। गाणिकः, जानेवादिकः। निपातनात् सप्तम्या अलुक्। आयुर्वेदिकः। जनेषु विष्ठुरो वादो जनोवादः। जनोवाद इति पदं जनोवादःपदम्। जानोवादिकः। निपातनात् पूर्वपदान्तस्यौकारः। संग्रहे ग्रन्थविशेषेऽन्यसंग्रहे वा साधुः सांग्राहिकः ॥१७७॥ इति **कथादिः** ॥

## [अथ गुडादिः]

**'गुडादिभ्यष्ठञ्'** (अ० ४।४।१०३)। तत्र साधुरित्यत्रार्थे गुडादिभ्यष्ठञ् स्यादित्यर्थः। एकेन पद्येन गुडादयः संगृह्यन्ते।

गुडकुल्माषेक्षुसक्तुसंग्रामापूपवेणवः ।
प्रवास उपवासो निवासो मांसौदनं तथा ।
सङ्घात इह संक्रामः संवाहः पठितो गणे ॥१७८॥

गुडे साधुर्गौडिक इक्षुः । कुल्माषे धान्यविशेषे साधुः कौल्माषिकी क्षेत्रभूमिः । तथा सा ऐक्षुकी । साक्तुको यवः । सांग्रामिको रथः । आपूपिको गोधूमः । वैणुकः । प्रावासिकः, औपवासिकः, नैवासिकः । मांसौदनमिति व्यस्तसमस्तग्रहणार्थम् । मांसिकः, औदनिकः, मांसौदनिकः । सङ्घाते साधुः साङ्घातिकः । सांक्रामिकः, सांवाहिकः ॥१७८॥ इति गुडादिः ॥

इति श्रीमदगस्तिमहर्षिवंश्यस्य भट्टयज्ञेश्वरस्य कृतौ

स्त्रीयगणरत्नावलीवृत्तौ

॥ चतुर्थोऽध्यायः ॥

---

# ॥ अथ पञ्चमोऽध्यायः ॥

## [अथ गवादिः]

'उगवादिभ्यो यत्' (अ० ५।१।२)। उवर्णान्ताद् गवादिभ्यश्च प्राक्क्रीतीयेषु हिताद्यर्थेषु यत् स्यादिति तदर्थः। तत्रापेक्षिता गवादयः पद्यद्वयेन संगृह्यन्ते।

गौरक्षरं नाभि नभं च मेधा
बर्हिर्हविर्बीजयुगानि कूपः।
दीप्ताष्टकास्रुग्दरमूधसो नङ्
विषं स्खदो वेदखरौ तथाऽध्वा ॥१॥

गोभ्यो हितं गव्यं तृणम्। उवर्णान्तोदाहरणं तु शङ्कवे हितं शङ्कव्यं दारु। अक्षरेभ्यो हितमक्षर्यं पत्रम्। 'नाभि नभं च' इति गणसूत्रम्। नाभिशब्दो यतं लभते नभादेशं चेति तदर्थः। नाभये हितो नभ्योऽक्षः। सच्छिद्रं रथाङ्गमध्यं नाभिः। तदनुप्रविष्टो लौहः काष्ठादिमयो वा दण्डोऽक्षः। स च तदनुगुणत्वात् तस्मै हितः। तैलाभ्यङ्गोऽपि स्नेहत्वान् नाभये हित इति नभ्य एव। रथनाभिवाचक एव नाभिशब्दो गवादिः, शरीरावयवाव नाभये हितोऽभ्यङ्गादिर्नाभ्य एव। तत्र 'शरीरावयवाद् यत्' (अ० ५।१।६) इत्यनेनैव भाव्यम्।

मेधायै हितं मेध्यं पवित्रमन्नम्। बर्हिषे हितं बर्हिष्यं वनम्। हविष्यमन्नम्। बीज्यं धान्यम्। युग्यं काष्ठम्। कूप्या भूमिः। दीपनं दीप्तम्, दीप्त्यमिन्धनम्। अष्टकाभ्यो हित आष्टक्यः समयविशेषादिः। स्रुच्यं दारु। दरं भयम्, दर्यो रोगादिः। ऊधःशब्दस्य नङादेशो यत्प्रत्ययसन्नियोगेन। ऊधसे हित ऊधन्योऽभ्यङ्गादिः। 'ये चाभावकर्मणोः' (अ० ६।४।१६८) इत्यनः प्रकृतिभावः। विष्य औषधिविशेषः सर्पादिश्च। स्खदो विद्रावणम्, तस्मै हितं स्खद्यं पौरुषम्। वेदेभ्यो हितं वेद्यं षडङ्गम्। खरो गर्दभो घर्मश्च, खर्यं उत्करादिर्ग्रीष्मश्च। अध्वन्यं पाथेयम्। 'ये च' (अ० ६।४।१६८) इति प्रकृतिभावः ॥१॥

**खदः खरः शुनः सम्प्रसारणं वा च दीर्घता ।**
**अन्तोदात्तत्वमसुरो गण एवं गवादिकः ॥२॥**

खदनं खदः, खद्यः । क्षरणं क्षरः, क्षर्यः । शुने हितं शून्यम्, शुन्यम् । उभयोरन्तोदात्तस्वरोऽपि । असुरेभ्यो हितमसुर्यम् ॥२॥ इति गवादिः ॥

[अथ अपूपादिः]

'विभाषा हविरपूपादिभ्यः' (अ० ५।१।४) । एभ्यो हिताद्यर्थेषु यद् वा स्यात् पक्षे छ इति तदर्थः । अत्र सूत्र हविःशब्देन हविर्विशेषवाचकानां ग्रहणं गवादिगणे हविःशब्दपाठात् । न च गवादिष्वेव हविर्विशेषग्रहणं किं न स्यादिति वाच्यम्, असञ्जातविरोधितया तत्र स्वरूपग्रहणस्यैव न्याय्यत्वात् । आमिक्षायै हितमामिक्ष्यं दधि, आमिक्षीयं वा । पुरोडाशयास्तण्डुलाः, पुरोडाशीया वेत्यादि । अक्षापेक्षिता अपूपादयः संगृह्यन्ते द्वाभ्याम् ।

**अपूपसूपौदनपूपकिण्वा अभ्यूषयूपौ मुसलं प्रदीपः ।**
**अभ्येषदीपौ पृथुकार्गले च स्थूणेर्गले वेष्टकमत्र कर्णात् ॥३॥**

अपूप्यम्, अपूपीयं वा चूर्णम् । सूप्या सूपीया वा आढकी । ओदन्या ओदनीया वा तण्डुलाः । अपूपपर्यायः पूपः । पूप्यं पूपीयम् । किण्वं पापं तस्मै हिता किण्व्या कुसङ्गतिः । अभ्यूषः पिष्टविकारो भक्ष्यविशेषः । अभ्यूष्य गोधूमचूर्णम् । यूप्यं मुसल्यं च दारु । प्रदीप्यं तैलम् । अभ्येषोऽभ्यूषः । [अभ्येष्यम् ।] दीपः प्रदीपः । [दीप्यम् ।] पृथुकाय चिपिटाय हिताः पृथुक्याः शालयः, पृथुक्य ओदनः । शिशवे हित इत्यर्थः । अर्गल्यम् अर्गलीयं वा काष्ठम् । स्थूण्यं स्थूणीयं वा लोहं दारु वा । सूर्मीस्तम्भश्च स्थूणोच्यते । ईर्गला अर्गलापर्यायः । [ईर्गल्यम् ।] कर्णवेष्टकं कर्णाभरणम् । कर्णवेष्टक्यं कर्णवेष्टकीयं वा सुवर्णम् ॥३॥

**अवोषाभ्योषपत्राश्वा विकारा अन्नसम्भवाः ।**
**कटकं चाकृतिगणोऽपूपादिः कथितो बुधैः ॥४॥**

अवोषो दाहः । अवोष्यो ग्रीष्मः । अभ्योषोऽभ्यूषः । [अभ्योष्यः ।] पत्रं वाहनं पर्णं शरशकुनयोः पक्षो वा । पत्र्योऽश्वादिः । अश्व्यो रथादिः । 'अन्नविकारेभ्यश्च' इति गणसूत्रं पठ्यते । तदर्थमुपसंगृह्याह—विकारा अन्नसम्भवा इति । ते च भक्ष्यविशेषा मोदकादयः । मोदक्या मोदकीया वा गो-

धूमाः। अनेनैवापूप्यमपूपीयमिति सिद्धावपूपादीनां केषाञ्चिदिह पाठः प्रपञ्चार्थः। कटकं वलयं कारिदन्तमण्डनं वा। कटक्यं कटकीयं वा हिरण्यम् ॥४॥ इति अपूपादिः॥

[अथ निष्कादिः]

'असमासे निष्कादिभ्यः' (अ० ५।१।२०)। आर्हीयेषु क्रीताद्यर्थेषु निष्कादिभ्यष्ठक् स्यादसमास इति तदर्थः। तत्रापेक्षिता निष्कादयः पद्यार्द्धेन संगृह्यन्ते।

निष्कपणपादमाषा वाहोऽथ द्रोणषष्टि निष्कादौ।

अशीतिगुञ्जामितः सुवर्णः, तच्चतुष्टयं निष्कः। तेन क्रीतो नैष्किकः कार्षिकस्ताम्रिकः। पणः पाणिकः। पादिकः, माषिकः। वाहेनाश्वेन क्रीतो वाहिकः। द्रौणिकः। षष्ट्या क्रीतः षाष्टिकः। इति निष्कादिः॥

[अथ अश्वादिः]

'गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्' (अ० ५।१।३९)। गोशब्दात् संख्यापरिमाणाश्वादिवर्जिताद् द्व्यचश्च शब्दात् तस्य निमित्तं संयोगोत्पाताविव्यर्थे यत् स्यादिति तदर्थः। संयोगः सम्बन्धः। उत्पातः शुभाशुभसूचकः। गोर्निमित्तं संयोग उत्पातो वा गव्यो धनपतिसंयोगः। गव्यं दक्षिणाक्षिस्पन्दनम्। समासे तु ठञ्—चित्रगोर्निमित्तं चैत्रगविकम्। द्व्यचः—धन्यम्, यशस्यम्, स्वर्ग्यम्। गोद्व्यच इति किम्? विजयस्य निमित्तं वैजयिकः। असंख्यादेरित्यादि किम्? पञ्चकम्, प्रास्थिकम्। पद्यार्द्धेनाश्वादयः संगृह्यन्ते।

अश्वाश्मगणोर्णोमा गङ्गा वर्षावसू इति गणोऽयम्॥५॥

अश्वस्य निमित्तं संयोग उत्पातो वा आश्विकः। आश्मिकम्, गाणिकम्, और्णिकम्। 'उमाऽतसी हैमवती हरिद्राकीर्त्तिकान्तिषु' (मेदिन्या मद्विके–२)। औमिकम्, गाङ्गिकम्, वार्षिकम्, वासुकम्॥५॥ इति अश्वादिः॥

[अथ वंशादिः]

'तद्धरति वहत्यावहति भाराद्वंशादिभ्यः' (अ० ५।१।५०)। वंशादिभ्यः परो यो भारशब्दस्तदन्तात् प्रातिपदिकान्ताद् द्वितीयान्ताद् हरति वहत्यावहति इत्यर्थे ठञादयः स्युरिति तदर्थः। तत्रैकेन पद्येन वंशादयः संगृह्यन्ते।

वंशकुटजाक्षबल्वजमूलश्लक्ष्णोक्षवोऽश्म खट्वा च।
स्थूणाश्वाविति गदितो वंशादिगणो विदाम्प्रवरैः॥६॥

वंशभारं हरति वहत्यावहति वा वांशभारिकः। एवं कौटजभारिकः, आक्षभारिक इत्यादि। [बाल्वजभारिकः, मौलभारिकः, श्लाक्ष्णभारिकः, ऐक्षुभारिकः, आश्मभारिकः, खाट्वाभारिकः। स्थौणाभारिकः, आश्वभारिकः।]

तद्धरतीत्यस्य व्याख्यान्तरम्—भारभूतेभ्यो वंशादिभ्य इति। तथा च भारभूतान् वंशानाहरति वहत्यावहति वा वांशिकः, ऐक्षुकः, आश्मिक इत्यादि ॥६॥ इति वंशादिः॥

[अथ छेदादिः]

'छेदादिभ्यो नित्यम्' (अ० ५।१।६४)। एभ्यो नित्यमर्हतीत्यस्मिन्नर्थे यथायथं ठञादयः प्रत्ययाः स्युरिति तदर्थः। तत्रापेक्षिताश्छेदादयः संगृह्यन्ते सार्द्धपद्येन।

**छेदो भेदो द्रोहदोहौ प्रकर्षो नर्त्तः कर्षः संवितस्तु प्रयोगः।**
**प्रश्नश्च स्याद्विप्रकर्षप्रयोगौ तीर्थं कर्षो[1] विप्रतः प्रेषणं च ॥७॥**

छेदं नित्यमर्हति छैदिको वेतसश्छिन्नप्ररूढत्वात्। एवं भैदिकः, द्रौहिकः, [दौहिकः, प्राकर्षिकः, नार्त्तिकः, कार्षिकः।] संवित इत्यादेः समो वेश्च परः प्रयोगः प्रश्नश्चात्र गणे बोध्य इत्यर्थः। सम्प्रयोगं विप्रयोगं वा नित्यमर्हति साम्प्रयोगिकः, वैप्रयोगिकः, साम्प्रश्निकः, वैप्रश्निकः, वैप्रकर्षिकः, [प्रायोगिकः, तैर्थिकः,] प्रैषणिकः ॥७॥

**विरागशब्दस्य विरङ्गभावो वेत्येवमाहुः किल पाणिनीयाः।**

'विराग विरङ्गं च' इति गणसूत्रं विवृण्वन्नाह—विरागशब्दस्येति। विरागं नित्यमर्हति वैरागिकः, वैरङ्गिक। इति छेदादिः॥

[अथ दण्डादिः]

'दण्डादिभ्यो यः' (अ० ५।१।६६)। द्वितीयान्तेभ्य एभ्योऽर्हतीत्यर्थे यप्रत्ययः स्यादिति तदर्थः। दण्डादय एकेन पद्येन संगृह्यन्ते।

**दण्डार्घमेघा मुसलं च मेधा वधोदकेभा मधुपर्कभागौ ॥८॥**
**कशा युगं भङ्गगुहे सुवर्णं दण्डादिरेवं विबुधैः प्रगीतः।**

---

१. 'विप्रकर्ष'शब्दस्य पृथक् पाठोऽप्यस्यामेव कारिकायां वर्त्तते। सम्भाव्यतेऽत्र 'वैकर्षिकः, प्राकर्षिकः' इत्यपि स्याताम्।

दण्डमर्हतीति दण्ड्योऽपराधो। दण्डोऽत्र दमनं न तु यष्टिः। ननु दण्ड्यत इति दण्ड्य इति कृत्प्रत्ययेनैवैतत् सिद्धमिति चेत् सत्यम्, दण्डमर्हतीत्यर्थे ठञ् मा भूदित्येवमर्थमिह पाठः। एवं वध्यादिष्वपि बोध्यम्। अर्घ्योऽतिथिः। मेध्यं क्षेत्रम्। मुसलघातोऽपि मुसलस्तमर्हति मुसल्यः। मेध्यः, वध्यः, उदक्यः। इभं गजमर्हति इभ्यो धनी। मधुपर्क्यः। श्रोत्रियोऽतिथिः। भाग्यो दायादः ॥८॥

कशामर्हति कश्यो मन्दोऽश्वः। युग्यो दम्यः। भङ्ग्यः शत्रुः। गुह्यं गोपनार्हम्। सुवर्ण्यः प्रियशंसकः। इति दण्डादिः॥

[अथ व्युष्टादिः]

'व्युष्टादिभ्योऽण्' (अ० ५।१।९७)। एभ्यः सप्तम्यन्तेभ्यो दीयते कार्यमित्येतयोरण् स्यादिति तदर्थः। तत्रापेक्षिता व्युष्टादयः संगृह्यन्ते सार्द्धपद्येन।

व्युष्टोपवासौ च तथा प्रवासः संग्रामतीर्थास्तरणानि नित्यम् ॥९॥

व्युष्टे प्रभाते दीयते कार्यं वा वैयुष्टम्। औपवासम्, प्रावासम्, सांग्रामम्, तैर्थम्, आस्तरणम्। नित्यशब्दोऽयं व्युष्टसाहचर्याद् दिवसाभ्यावृत्तिविषयः, न तु कूटस्थाकाशादिवृत्तिः। नैत्यम्। सर्वकाले दीयते कार्यं वेत्यर्थः ॥९॥

प्रवेशनं निष्क्रमणमुपसंक्रमणं तथा।
सङ्घातपीलुमूलाग्निपदं व्युष्टादिषु स्मृतम् ॥१०॥

ग्रामे नगरे वा प्रवेशने सति दीयते कार्यं वा प्रावेशनम्। ततो निष्क्रमणे सति दीयते कार्यं वा नैष्क्रमणम्। एवमौपसंक्रमणम्। साङ्घातम्, पैलुमूलम्, आग्निपदम्। परिषच्छब्दोऽपि न्यासकृन्मते। पारिषदम् ॥१०॥ इति व्युष्टादिः॥

[अथ सन्तापादिः]

'तस्मै प्रभवति सन्तापादिभ्यः' (अ० ५।१।१०१)। एभ्यश्चतुर्थ्यन्तेभ्यः प्रभवतीत्यर्थे ठञ् स्यादिति तदर्थः। तत्रापेक्षिताः सन्तापादयः संगृह्यन्ते द्वाभ्याम्—

सन्तापसन्नाहनिसर्गसर्गाः संग्रामसंयोगविसर्गसक्तु।
संवेशनमोदनपेषवेषपरायावासास्तु समः पराः स्युः ॥११॥

सन्तापाय प्रभवति सान्तापिकं खलसख्यं निदाघदिनं वा। सान्नाहिक उत्साहवान्। नैसर्गिको निसर्गीरूपम्। सार्गिकः, सांग्रामिकः, सांयोगिकः, वैसर्गिकः, साक्तुकः। संवेशः संवेशनं निद्रा। सांवेशनिकं मद्यम्। मोदो मादनं हर्षः। मौदनिकः। साम्पेषिकम्, सांवेषिकम्। सम्परायो युद्धम्। साम्परायिकः। सांवासिकः ॥११॥

निष्पेषः प्रोपाभ्यां वासः सङ्घात उपसर्गः।
मांसौदनमत्र गणे निगृहीतमपि स्मरन्ति बुधाः ॥१२॥

नैष्पेषिकः, प्रावासिकः, औपवासिकः, साङ्घातिकः, औपसर्गिकः। मांसौदनिकः, मांसिकः, औदनिकः ॥१२॥ इति **सन्तापादिः** ॥

**[अथ अनुप्रवचनादिः]**

'**अनुप्रवचनादिभ्यश्छः**' (अ० ५।१।१११)। एभ्यः प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थे छः स्याद् यत्प्रथमान्तं तच्चेत् प्रयोजनं भवतीति तदर्थः। तत्रापेक्षिता अनुप्रवचनादयः संगृह्यन्ते सार्द्धपद्येन।

अनुतः प्रवचनवाचनवासनवचनप्रवेशनानि स्युः।
उत्थापनं प्रवेशनमिह संवेशनमुपस्थापनम्।
प्रारम्भणमारम्भणमन्वाभ्यां रोहणं पठितम् ॥१३॥

अनुप्रवचनं प्रयोजनमस्येत्यनुप्रवचनीयो होमः। अनुप्रवचनमिति ब्रह्मौदनस्य संज्ञा। अनुवाचनं प्रयोजनमस्यानुवाचनीयम्, अनुवासनीयम्, अनुवचनीयम्, अनुप्रवेशनीयम्। उत्थापनीयम्, प्रवेशनीयम्, संवेशनीयम्, उपस्थापनीयम्। प्रारम्भणीयम्, आरम्भणीयम्, अनुरोहणीयम्, आरोहणीयम् ॥१३॥ इति **अनुप्रवचनादिः** ॥

**[अथ पृथ्वादिः]**

'**पृथ्वादिभ्य इमनिज्वा**' (अ० ५।१।१२२)। एभ्यः षष्ठ्यन्तेभ्यो भाव इत्यस्मिन्नर्थे इमनिच् प्रत्ययो वा स्यादिति तदर्थः। तत्रापेक्षिताः पृथ्वादय एकेन पद्येन संगृह्यन्ते।

पृथ्वाशुप्रियपाकचण्डपटवो मन्दोरुखण्डाणवः
साधुः स्वादुमृदू महद्गुरुलघुक्षिप्राणि वत्सस्तनुः।

**दण्डाकिञ्चनहोडबालबहवो दीर्घं वृषोऽथो ऋजुः**
**क्षुद्रं ह्रस्वमिहोच्यते च बहुलं पृथ्वादिके शाब्दिकैः॥१४॥**

पृथोर्भाव. प्रथिमा। **'र ऋतः'** (अ० ६।४।१६१) रभावः। **'टेः'** (अ० ६।४।१५५) इति टिलोपः। सूत्रे वाग्रहणं यथायथ प्राप्तानामणादिप्रत्ययानां समावेशार्थम्। तेन इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः। खण्डचण्डादिषु ष्यञः समावेशः। बालवत्सादिषु वयोवचनेष्वञः समावेशः। त्वतलौ तु **'आ च त्वात्'** (अ० ५।१।१२०) इति सूत्रेण **'ब्रह्मणस्त्वः'** (अ० ५।१।१३६) इति सूत्रावधि अधिकृतावेवेति बोध्यम्। तथा च पृथोर्भावः प्रथिमेतिवत् पार्थिवम्, पृथुत्वम्, पृथुता इत्यपि भवति। एवमग्रेऽपि यथायथमूहनीयम्।

आशोर्धान्यविशेषणस्य शीघ्रस्य वा भाव आशिमा। प्रियस्य भावः प्रेमा। **'प्रियस्थिर'** (अ० ६।४।१५७) इत्यादिना प्रियशब्दस्य प्रादेशः। ननु **'रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम्'** इत्यादि काव्येषु प्रेमशब्दः क्लीबे प्रयुज्यमानः कथमुपपद्यते यतोऽयमिमनिच्प्रत्ययान्तः पुंस्येव प्रयुज्यमानः सर्वत्र व्याकरणग्रन्थेषूदाहृतो दृश्यते? यथा—प्रथिमा, पटिमा, गरिमा, लघिमा इत्यादि। लिङ्गानुशासनेऽपि **'अपजनोपपदाङ्गपदे पुंसि नित्यमिमनिच्च'**[1] इति स्मर्यते। अपशब्दोपपदाऽङ्गशब्दो जनशब्दोपपदः पदशब्दश्च नित्यं पुंसि भवतः, इमनिच्प्रत्ययान्तश्च नित्यं पुंसीति वर्त्तत इति तदर्थः। अयमपाङ्गः, अयं जनपदः, पटिमा, लघिमा इत्याद्युदाहरणानि। एवं स्थिते काव्यनाटकादिषु क्लीबे प्रयुक्तस्य प्रेमन्शब्दस्य का गतिरिति चेत्, **'प्रीङ् प्रीतौ'** (द्र०—धातु० ४।३५) इति दैवादिकात् **'सर्वधातुभ्यो मनिन्'** (उणा० ४।१४६) इत्यनेनोणादिचतुर्थपादगतसूत्रेण भावे मनिन्प्रत्यये प्रीतिपर्यायः प्रेमशब्दो नपुंसकलिङ्गोऽस्त्येव। अत एव **'प्रेमाऽस्त्री स्नेहहर्षयोः'** (द्र०—मेदिन्यां नत्रिके—९४) इति मेदिनीकोशेऽभिहितमिति।

पाकिमा शैशवम्। चण्डिमा, पटिमा, मन्दिमा। उरोर्विपुलस्य भावो वरिमा। **'प्रियस्थिर'** (अ० ६।४।१५७) इत्यादिनोरुशब्दस्य वर्भावः। खण्डिमा खण्डत्वम्, अणिमा अणुत्वम्, साधिमा, स्वादिमा, म्रदिमा मार्दवम्, महिमा महत्त्वम्, गरिमा, लघिमा, क्षिप्रस्य भावः क्षेपिमा, वत्सस्य तर्णका-

१. लिङ्गानुशासने नोपलब्धम्।

देर्भावो वत्सिमा, [तनिमा।] दण्डिमा दण्डत्वम्, अकिञ्चनिमा निर्धनत्वम्, होडिमा, वालिमा। होडवालशब्दौ समानार्थौ। बहोर्भावो भूमा। 'बहोर्लोपो भू च बहोः'(अ० ६।४।१५८)इत्यनेनेमनिच इकारलोपो बहुशब्दस्य भू इत्यादेशश्च। दार्घस्य भावो द्राघिमा, व्रषिमा वृषत्वम्, ऋजिमा आर्जवम् ऋजत्वम्, क्षोदिमा क्षुद्रत्वम्, ह्रसिमा ह्रस्वत्वम्, बंहिमा बहुलत्वम्। ब्राह्मणादित्वाद् (अ० ५।१।१२४)बाहुल्यम्। मनोज्ञादित्वाद् (अ० ५।१।१३३) बाहुलकम् ॥१४॥ इति पृथ्वादिः ॥

[अथ दृढादिः]

'वर्णदृढादिभ्यः ष्यञ् च'(अ० ५।१।१२३)। वर्णवाचिभ्यो दृढादिभ्यश्च षष्ठयन्तेभ्यो भावे ष्यञ् स्याच्चकारादमनिच्चेति तदर्थः। शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा। पाण्डोर्भावः पाण्डयम्, पण्डिमा इत्यादीनि वर्णवाचिनामुदाहरणानि। अत्रापेक्षिता दृढादयः सार्द्धपद्येन संगृह्यन्ते।

दृढपरिवृढौ मूकः शुक्रो विशारदसम्मती
बधिरमधुरौ वक्रो मूर्खः कृशो जडपण्डितौ।
जवनलवणावुष्णः शीतो वियातवृढौ तथा
विमतिविमनस्ताम्राम्रयात्रः समोऽत्र मनः परम् ॥१५॥

दृढस्य भावो दार्ढ्यम्, द्रढिमा, दृढत्वम्,दृढता। परिवृढस्य भाव. पारिवढ्यम्. परिव्रढिमा। मौक्यम्, मूकिमा। शौक्र्यम्, शुक्रिमा। वैशारद्यम्, विशारदिमा। सङ्गता मतिर्यस्यासौ सम्मतिस्तस्य भावः साम्मत्यम्, सम्मतिमा। बाधिर्यम्, बधिरिमा। माधुर्यम्, मधुरिमा। वाक्र्यम्, वक्रिमा। मौर्ख्यम्, मूर्खिमा। कार्श्यम्, क्रशिमा। जाड्यम्, जडिमा। पाण्डित्यम्, पण्डितिमा।

जवनो वेगवान्। जावन्यम्, जवनिमा। तरुणेति पाठान्तरम्। तारुण्यम्, तरुणिमा। [लावण्यम्, लवणिमा।] औष्ण्यम्, उष्णिमा। शैत्यम्, शातिमा। विरुद्धं यातं चेष्टितमस्येति वियात उद्धतः। वैयात्यम्, वियातिमा। वाढ्र्यम्, व्रढिमा। विरुद्धा विविधा मतिर्यस्यासौ विमतिस्तस्य भावो वैमत्यम्। विरुद्धं मनो यस्यासौ विमनाः। वैमनस्यम्, विमनिमा। 'टेः' (अ० ६।४।१५५) इति टिलोपः। ताम्र्यम्। आम्र्यम्। सङ्गतं मनो यस्येति सम्मनाः। साम्मनस्यम्, सम्मनिमा ॥१५॥

**क्रुष्टचुक्रविलाता इत्येवं प्रोक्तो दृढादिकः ।**

क्रौष्टचम्, क्रुष्टिमा । चुक्रोऽम्लवेतसः ।[चौक्रचम्,चुक्रिमा ।] विलातशब्दः प्रथमवयोवाची । विलासपर्याय इति केचित् । [वैलात्यम्,विलातिमा]। इति दृढादिः ॥

**[अथ ब्राह्मणादिः]**

'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (अ० ५।१।१२४) । एभ्यो भावे कर्मणि च ष्यञ् स्यादिति तदर्थः । विदुषो भावः कर्म वा वैदुष्यम्, मूढस्य मौढ्यमित्यादि गुणवचनोदाहरणम् । ब्राह्मणादयः पद्यसप्तकेन संगृह्यन्ते ।

**ब्राह्मणो माणवो धूर्त्तकुशलालसबालिशाः ॥१६॥**

ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् । माणवः कुमारः, माणव्यम् । धौर्त्यम्, कौशल्यम् । लसति विहरतीति लसः,न लसोऽलसः । न विद्यते लसः क्रीडा यस्येति वा अलसः । तस्य भावः कर्म वा आलस्यम् । [बालिश्यम्] ॥१६॥

**अर्हतो नुम् च दायादः क्षेत्रज्ञश्च कुतूहलम् ।**
**एकभावद्विभावत्रिभावराजविघातिनः ॥१७॥**

'अर्हः प्रशंसायाम्' (अ० ३।२।१३३) इत्यस्माच्छतरि सिद्धस्य पूज्यपर्यायस्यार्हच्छब्दस्य ष्यञ्सन्नियोगेन नुमागमो भवतीत्यर्थः। अर्हतः कर्म भावो वा आर्हन्त्यम् । षित्वान्ङीषि 'हलस्तद्धितस्य' (अ० ६।४।१५०) इति यलोपे आर्हन्ती । [दायाद्यम्, क्षैत्रज्ञम्, कौतूहल्यम् ।]एकस्य भाव एकभावः । ऐकभाव्यम् एकत्वमित्यर्थः । एवं द्वैभाव्यम्, त्रैभाव्यम् । राज्ञः कर्म भावो वा राज्यम् । वैघात्यम् ॥१७॥

**मध्यस्थो विषमस्थः परमस्थश्चोरदुष्पुरुषविषमाः ।**
**अधिपतिगणपतिगडुला बहुभाषी विशनकापुरुषपिशुनाः ॥१८॥**

मध्यस्थस्य भावो माध्यस्थ्यम्, [वैषमस्थ्यम्, पारमस्थ्यम्,]चौर्यम्, दौष्पुरुष्यम्, वैषम्यम् । आधिपत्यम्, [गाणपत्यम् ।] गडुरस्यास्तीति गडुलः,गाडुल्यम्,[बाहुभाष्यम् ।] विच्छनं गमनं विशनः, वैशन्यम् । कुत्सितः पुरुषः कापुरुषः, कापुरुष्यम् । पैशुन्यम् ॥१८॥

निपुणानीश्वरचपलाऽक्षेत्रज्ञमथाव्युपापेभ्यः ।
राधय इति शब्दः स्यात् संवादी भाषिवेशिनौ च समः॥१९॥

नैपुण्यम् । न ईश्वरोऽनीश्वरस्तस्य भावः कर्म वा आनैश्वर्यम्, अनैश्वर्यम् । 'नञः शुचीश्वरक्षेत्रज्ञ'(अ० ७।३।३०)इत्यादिनोत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य तु वा । [चापल्यम् ।] आक्षैत्रज्ञ्यम् । अक्षैत्रज्ञ्यम् । आव्युपापेभ्यः परो राधय इति शब्दः । आराधयेत्यादि शब्दचतुष्टयमित्यर्थः । चत्वारोऽपीमे जनपदसमानक्षत्रियाभिधायिनः । तत्राङ्पूर्वाद् राधयतेः कर्तरि पचाद्यचि गणेऽत्र निपातनाण्णिलुगभावः । ततो विहितस्याञः कम्बोजादित्वात् (अ० ४।१।१७५)लुक् । आराधयानां जनपदस्य राजा आराधयस्य राज्ञोऽपत्यं वा आराधयः । तस्य भावः कर्म वा आराधय्यम् । एवं विराधयोपराधयापराधयशब्देषु द्रष्टव्यम् । [वैराधय्यम्, औपराधय्यम्, आपराधय्यम् ।] संवादिनो भावः सांवाद्यम्, साम्भाष्यम्, सांवेश्यम् ॥१९॥

शौटीरो विनितः पातोऽन्यभावः शीर्षघाति च ।
चतुर्वर्णादिभ्य उक्तः स्वार्थे ष्यञ् ब्राह्मणादिषु ॥२०॥

शौटीर्यम्, वैपात्यम्, नैपात्यम् । अन्यस्य भावोऽन्यभावः, स एवान्यभाव्यम् । अन्यत्वमित्यर्थः । शैर्षघात्यम् । चत्वारो वर्णा एव चातुर्वर्ण्यम् । तद्धितार्थे द्विगुस्ततः स्वार्थे ष्यञ् ॥२०॥

यदुक्तं चतुर्वर्णादिभ्यः स्वार्थे ष्यञ् इति, तत्रादिशब्दग्राह्यानाह पद्यद्वयेन ।

उभयोः पदयोर्वृद्धिश्चतुर्वेदस्य चेष्यते ।
सर्वभेदः सर्वविद्यः सेनात्रिस्वरषड्गुणाः ॥२१॥

चतुरो वेदानधीते चतुर्वेदः, स एव चातुर्वैद्यः । अत्र अध्येत्रर्थे विहितस्याणो 'द्विगोर्लुगनपत्ये' (अ० ४।२।८८) इति लुक् । चतुर्विद्यस्येति पाठान्तरम् । तत्रापि चतस्रो विद्या अधीते चतुर्विद्यः । 'विद्यालक्षणसूत्रान्तात्' (द्र०—सि० कौ० १७६५) इति ठक्, तस्य लुक् । चतुर्विद्य एव चातुर्वैद्यः । सर्वे वेदाः सर्ववेदाः । 'पूर्वकालैक' (अ० २।१।४९) इति समासः । तानधीते सर्ववेदः । 'सर्वादेः सादेश्च लुग्वक्तव्यः' (सि०कौ० १७९८) इत्यध्येतृप्रत्ययस्य लुक् । स एव सार्ववैद्यः । सर्वविद्या अधीते सर्वविद्यः, स एव सार्वविद्यः । सेनैव सैन्यम् । त्रय एव स्वराः त्रैस्वर्यम् । षड्गुणा एव षाड्गुण्यम् ॥२१॥

त्रिलोकानन्तरसुखतदर्थैतिहसन्निधिः ।
समीपमणिकावत्रोपमा च चतुराश्रमः ।
विशस्तिराकृतिगणो मतोऽयं ब्राह्मणादिकः ॥२२॥

त्रयो लोका एव त्रैलोक्यम् । अनन्तरमेवानन्तर्यम् । नन्वन्तरमित्यत्र नञ्तत्पुरुषो बहुव्रीहिर्वा ? नाद्यः, 'न नञ्पूर्वात् तत्पुरुषात्' (अ० ५।१।१२१) इति सूत्रेण त्वतलौ वर्जयित्वा सर्वेषां भावाधिकारविहितप्रत्ययानां नञ्पुरुषान्निषिद्धत्वात् । नान्त्यः, व्यवधानाभावरूपेर्थे सर्वैः प्रयुज्यमानस्य आनन्तर्यशब्दस्य तदर्थानभिधायकत्वापत्तेः । तथाहि—अन्तरं छिद्रं व्यवधानमिति यावत् । तन्न विद्यते यस्येत्यनन्तरम्, वर्णपदादि । तदेवानन्तर्यं स्यात् स्वार्थे ष्यञ्विधानात्, न तु व्यवधानाभाव इति चेत्, अत्रोच्यते—यस्य प्रत्ययस्य प्रकृतिर्विशिष्य तत्तद्रूपेण नानूद्यते यथा—'पत्यन्तपुरोहितादिभ्यो यक्' (अ० ५।१।१२८) इत्यत्र पत्यन्तेति, 'हायनान्तयुवादिभ्योऽण्' (अ० ५।१।१३०) इत्यत्र हायनान्तेति च, यथा वा 'इगन्ताच्च लघुपूर्वात्' (अ० ५।१।१३१) इति, 'योपधाद् गुरूपोत्तमाद् वुञ्' (अ० ५।१।१३२) इति च । स एव प्रत्ययो 'न नञ्पूर्वात् तत्पुरुषात्' (अ० ५।१।१२१) इत्यनेन प्रतिषिध्यते । तेन सेनापतेर्भावः सैनापत्यमितिवदपतेर्भाव आपत्यमिति, द्विहायनस्य द्वैहायनमितिवदहायनस्याहायनमिति, मुनेर्मौनमितिवदमुनेरामुनमिति, रमणीयस्य रामणीयकमितिवदरमणीयस्यारमणीयकमित्यादि न भवति । ब्राह्मणादित्वेन अनन्तरशब्दस्तु स्वरूपविशेषेण कृतानुवाद एवेति न तस्य निषेधस्य विषय इति । एवमनीश्वराक्षेत्रज्ञशब्दयोरपि द्रष्टव्यम् ।

अत्रेदमवधेयम्—ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावादपुरोहितस्य भाव इत्याद्यर्थविवक्षायामपुरोहितादिशब्देभ्यः पुरोहितादित्वनिबन्धनयगादेः प्रसङ्गाभावाद् 'न नञ्पूर्वात्' इति निषेधो न कर्त्तव्यः । यस्मान्नञ्तत्पुरुषात् त्वतलितरोऽपि प्रत्यय इष्यते तस्य ब्राह्मणादावाकृतिगणे पाठो वेदितव्यो यथा अचतुरासङ्गतादिशब्दानामिति दिक् । स्पष्टं चेदं 'न नञ्पूर्वात्' इति सूत्रे भाष्यकैयटयोः ।

प्रकृतमनुसरामः—सुखमेव सौख्यम् । तदर्थमेव तादर्थ्यम् । इतिह एव ऐतिह्यम् । इतिह इति निपातनसङ्घातः सम्प्रदायक्रमागतेऽर्थे वर्त्तते । सन्निधिरेव सान्निध्यम् । समीपमेव सामीप्यम् । मणिकः प्रशस्तो मणिः, स एव

माणिक्यम् । उपमैव औपम्यम् । चत्वार एवाश्रमाश्चातुराश्रम्यम् । विशसनं विशस्तिर्हिंसा, तदेव वैशस्त्यम् ।

आकृतिगणोऽयं ब्राह्मणादिः । तेन यथाकाममित्यस्य भावो याथाकाम्यम् । ष्यञः षित्वान्ङीषि याथाकामीत्यपि भवति । यथातथं सत्यं सुपरीक्षितं च, तस्य भावो याथातथ्यम् । यथापुरं यथापूर्व्यम्, याथापुर्यम् । अयथातथमसत्यं विपरीतं वा । तस्य भाव आयथातथ्यम्, अयाथातथ्यम् । एवमायथापुयम्, अयाथापुर्यम् । उभयत्र 'यथातथयथापुरयोः पर्यायेण' (अ० ७।३।३१) इति पूर्वोत्तरपदयोरादेरचः पर्यायेण वृद्धिः । पारिमाण्डल्यम्, आनन्त्यम्, आचतुर्यम्, आसङ्गत्यम्, साधर्म्यम्, वैधर्म्यम्, स्वास्थ्यम् इत्यादयो यथादर्शनमत्र द्रष्टव्याः ।

अस्याकृतिगणत्वेऽपीह केषाञ्चित् पाठः प्राप्तान्यप्रत्ययबाधनार्थः । यथा—ब्राह्मणमाणवशब्दौ प्राणभृज्जातिवयोवाचिनौ, ताभ्यामञ् प्राप्तः । केषाञ्चित् कार्यान्तरविधानार्थः । यथा—अर्हतो नुमर्थः पाठः । केषाञ्चित् पाठः प्रपञ्चार्थः । केषाञ्चित् स्वार्थे ष्यञ्विधानार्थः । यथा एकभाव द्विभाव त्रिभाव अन्यभावशब्दानाम् । तथा च प्रत्याहाराह्निके वार्त्तिके प्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अन्यस्य भावोऽन्यभावोऽन्यत्वम्, तदेवान्यभाव्यमित्यर्थः । यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम्—'आन्यभाव्यमपप्रयोग'[1] इति, तत्तु अवैयाकरणमीमांसकशिष्यसन्तोषार्थं वेदितव्यम् ॥२२॥ इति ब्राह्मणादिः ॥

[अथ पुरोहितादिः]

'पत्यन्तपुरोहितादिभ्यो यक्' (अ० ५।१।१२८) । पत्यन्तशब्दात् पुरोहितादिभ्यश्च यक् स्याद् भावे कर्मणि चेति तदर्थः । सेनापतेर्भावः कर्म वा सैनापत्यम् । पद्यत्रयेण पुरोहितादयः संगृह्यन्ते ।

पुरोहितग्रामिकचर्मिकास्तिकाः
स्याद्धर्मिकः कर्मिकबालवर्मिकाः ।

---

१. द्र०—"आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अत्र क्लेशेन समासं कल्पयित्वा ततः समाससंज्ञया गुणवचनसंज्ञायां बाधितायां 'गुणवचनब्राह्मणादिभ्यः' इति लक्षणेनासंसृष्ट एव ष्यञ् प्रयुक्तः ।" (तन्त्र पृ० २६०, पूनासं०) ।

अजानिको नास्तिकमन्दसूचका
राजाऽसे सुहितश्च सारथिः ॥२३॥

पुरोहितस्य भावः कर्म वा पौरोहित्यम् । ग्रामोऽस्यास्तीति ग्रामी, स एव ग्रामिकः, ग्रामिक्यम् । चर्मिकश्चर्मवान्, चार्मिक्यम् । आस्तिकस्य भावः कर्म वा आस्तिक्यम् । धर्मी एव धर्मिकः, धार्मिक्यम् । कार्मिक्यम्, बाल्यम् । वर्म्येव वर्मिकः, [वार्मिक्यम् ।] जानादागतं जानम्, न जानमजानम्, तद्वान् अजानिकः, आजानिक्यम् । अजनीकं केचित् पठन्ति । [नास्तिक्यम्, मान्द्यम्] सूचकः पिशुनः, [सौचक्यम् ।] राजन् शब्दोऽसमासे यकं लभते । राज्ञः कर्म भावो वा राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ्— आधिराज्यम् । सुहितस्तृप्तः, सौहित्यम् । [सारथ्यम्] ॥२३॥

पथिकपर्षिकपुत्रिकपिण्डकाः
प्रतिकशाक्वरनागरचूडिकाः ।
तिलकखण्डकदण्डकसूतिकाः
शिलिकमञ्जनिकाऽञ्जलिकाम्बिकाः ॥२४॥

पथिकोऽध्वगः पाथिक्यम् । पर्षः सेकोऽस्यास्तीति पर्षी अभिषिक्तः, स एव पर्षिकः, [पार्षिक्यम् ।] पुत्रिकः पुत्रवान्, [पौत्रिक्यम् ।] पिण्डिकः पिण्डवान्. [पैण्डिक्यम् ।] प्रतिगतं सुखं यस्मिन् स प्रतिकः सुखी, [प्रातिक्यम् ।] शक्वरीऋचोऽधीते वेद वाऽसौ शाक्वरो नाम कश्चिन्मुनिः, [शाक्वर्यम् ।] नगरे भवो नागरः, [नागर्यम् ।]चूडिकश्चूडावान्, चौडिक्यः । चौलिक्य इति अन्ये । तिलको वृक्षविशेषः, [तैलक्यम् ।] खण्डमस्यास्तीति खण्डी, स एव खण्डिकः, खाण्डिक्यम् । दण्ड्येव दण्डिकः, [दाण्डिक्यम् ।] सूतिकायाः सौतिक्यम् । शिलं कणशाद्यर्जनलक्षणा वृत्तिः, तद्वान् शिलिकः, [शैलिक्यम् ।] अञ्जनिकोऽञ्जनवान्, [आञ्जनिक्यम् ।] प्रशस्तोऽल्पो वा अञ्जलिरञ्जलिकः, [आञ्जलिक्यम् ।] अम्बिका माता तस्याः कर्म भावो वा आम्बिक्यम् ॥२४।

संरक्षसूचिकच्छत्रिकर्पिका मूलिकस्तथा ।
पुरोहितादिर्विज्ञेयो गणः शास्त्रविचक्षणैः ॥२५॥

सम्यग् रक्षतीति संरक्षः, पचाद्यच् । तस्य भावः कर्म वा सांरक्ष्यम् ।

सूचयतीत्येवंशीलः सूची, स एव सूचिकः, सौचिक्यम् । छत्र्येव छत्रिकः; [छात्रिक्यम् ।] अल्प ऋषिर्ऋषिकः,तस्य भावः कर्म वा आर्षिक्यम् । मूली मूलवान्, स एव मूलिकः, तस्य भावः कर्म वा मौलिक्यम् ॥२५॥ इति पुरोहितादिः ॥

[अथ उद्गात्रादिः]

'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' (अ० ५।१।१२९) । प्राणिजातिवाचकाद् वयोवाचकाद् उद्गात्रादिभ्यश्चाञ् स्याद् भावे कर्मणि चेति तदर्थः । प्राणिजातेः—आश्वम्, औष्ट्रम् । वयोवाचकात्—कौमारम्, कैशोरम् । उद्गात्रादयः पद्यद्वयेन संगृह्यन्ते ।

उद्गाता पत्तिगणकोऽध्वर्युर्होता तथा बधूः ।
प्रशस्ता प्रतिहर्त्ताऽथ मन्त्रे सुभग इष्यते ॥२६॥

उद्गातुः कर्म भावो वा औद्गात्रम्, [पात्तिगणकम्,] आध्वर्यवम्, [हौत्रम्,] बध्वा बाधवम् । [प्राशस्त्रम्, प्रातिहर्त्रम् ।] मन्त्रे वर्त्तमानः सुभगशब्द उद्गात्रादिगण इष्यते । यथा—'महते सौभगाय' (ऋ० १।१६४।२७)। सर्वविधीनां विकल्पितत्वादिह 'हृद्भगसिन्ध्वन्ते' (अ० ७।३।१९) इत्युत्तरपदवृद्धिर्न भवति ॥२६॥

सुष्ठुरथगणकदुष्ठून्नेता पोता च हर्त्ता च ।
उद्गात्रादिगणोऽयं गदितः शब्दार्थतत्त्वज्ञैः ॥२७॥

सौष्ठवम् । रथान् गणयतीति रथगणकः, राथगणकम् । दौष्ठवम्; औन्नेत्रम्, [पौत्रम्, हार्त्रम् ।] अत्रोद्गात्रध्वर्युहोतृप्रशास्तृप्रतिहर्त्रुन्नेतृपोतृशब्दा ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः' (अ० ५।१।१३५) इति प्राप्ते, सुष्ठु दुष्ठु आभ्यां गुणवचनलक्षणे ष्यञि, बधूशब्दादिगन्तलक्षणेऽणि प्राप्ते, शेषेभ्यस्त्वतलोः प्राप्तयोरञ् विधीयते ॥२७॥ इति उद्गात्रादिः ॥

[अथ युवादिः]

'हायनान्तयुवादिभ्योऽण्' (अ० ५।१।१३०) । एभ्योऽण् भावे कर्मणि चेति तदर्थः । हायनान्तात्—द्वौ हायनौ संवत्सरौ यस्यासौ द्विहायनस्तस्य भावः कर्म वा द्वैहायनः । एवं त्रैहायनादयः । युवादयः संगृह्यन्ते सार्द्धपद्यद्वयेन ।

**युवयजमानस्थविराः स्त्री कुसुदुर्भ्यः परा कटुककुतुके ।**
**पुरुषो हृदयं चासे सुहृदनृशंसौ कुतूहलं कुशलः ॥२८॥**

यूनो भावः कर्म वा यौवनम् । 'अन्' (अ० ६।४।१६७) इति प्रकृतिभावः । मनोज्ञादित्वाद् (अ० ५।१।१३३) वुञपि—यौवनकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (सि० कौ० १७६२) इति प्रकृतिभावः । लिङ्गविशिष्टपरिभाषया युवत्या अपि यौवनम् । 'भस्याढे' (सि० कौ० १२०४) इति पुंवद्भावः । याजमानम्, स्थाविरम् । कुत्सिता स्त्री कुस्त्री, तस्या भावः कौस्त्रम्, सौस्त्रम्, दौस्त्रम्, काटुकम्, कौतुकम् । असेऽसमासे पुरुषशब्दो हृदयशब्दश्चाणमुत्पादयतीत्यर्थः । पौरुषम्, हार्दम् । 'हृदयस्य हृल्लेखयदण्लासेषु' (अ० ६।३।५०) इति हृदादेशः । समासे तु राजपुरुषत्वम्, कठिनहृदयत्वम् । सुहृन्मित्रम्, तस्य भावः सौहार्दम् । 'हृद्भग' (अ० ७।३।१९) इत्युभयपदवृद्धिः । आनृशंसम्, कौतूहलम्, कौशलम् ॥२८॥

**श्रमणकमण्डलुसुहृदयहोतारो भ्रातृपिशुनदुर्हृदयाः ।**
**सब्रह्मचारिनृपलौ क्षेत्रज्ञः श्रोत्रियस्य तु यलोपः ।**
**चपलपरिव्राजकदुर्हृन्निपुणाः दुःसुतस्त्रिग्रह भ्राता ॥२९॥**

श्राम्यतीति श्रमणः, श्रामणम् । कमण्डलोर्भावः कामण्डलवम् । शोभनं हृदयं यस्यासौ सुहृदयः, तस्य भावः सौहार्दम् । 'हृदयस्य हृल्लेख' (अ० ६।३।५०) इत्यादिना हृदादेशः । हौत्रम्, भ्रात्रम्, पैशुनम् । दुष्टं हृदयं यस्यासौ दुर्हृदयः, तस्य भावो दौर्हार्दम् । उत्तरपद्ये पठिष्यमाणस्य दुर्हृच्छब्दस्यापि दौर्हार्दमिति रूपम् । सुहृद्दुर्हृच्छब्दयोः सुहृदयदुर्हृदयशब्दयोश्च ब्राह्मणादित्वात् सौहार्द्यम्, दौर्हार्द्यम्, सौहृदय्यम्, दौर्हृदय्यमित्यपि ।

ननु युवादौ सुहृद्दुर्हृच्छब्दावेव पठितव्यौ सुहृदयदुर्हृदयशब्दावेव वा, अन्यतरद्विकपाठेऽपि सौहार्दं दौर्हार्दमिति सिध्यत्येवेति चेन्न । अर्थभेदाच्चतुर्णां पाठस्य युक्तत्वात् । सुहृद्दुर्हृच्छब्दौ मित्रामित्रयोर्वर्त्तेते (अ० ५।४।१५०) सुहृदयदुर्हृदयशब्दौ तु नैवम्, किन्तु प्रशस्तनिन्दितहृदयवैशिष्ट्यमात्रे वर्त्तेते । अन्यतरद्विकपाठे चार्थचतुष्टयभावाभिधायकमुक्तरूपद्वयं न स्यादिति चतुर्णां पाठ आवश्यक इति बोध्यम् ।

ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि लक्षणया ब्रह्म, तच्चरतीति ब्रह्मचारी । समानो ब्रह्मचारी सब्रह्मचारी, तस्य भावः कर्म वा साब्रह्मचारिणम् । 'इन-

ण्यनपत्ये' (अ० ६।४।१६४) इति प्रकृतिभावः। वार्षलम्, क्षैत्रज्ञम्। श्रोत्रियशब्दस्य यलोपः प्रत्ययसन्नियोगेन। 'य' इति सङ्घातग्रहणम्, इकारस्य 'यस्य' (अ० ६।४।१४८) इति लोपः। श्रोत्रियस्य भावः कर्म वा श्रौत्रम्। चापलम्, पारिव्राजकम्, नैपुणम्। दुष्टो भ्राता दुर्भ्राता, दौर्भ्रात्रम्। सौभ्रात्रम्।

कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते। तेन कौशल्यं चापल्यमित्याद्यपि ॥२९॥ इति युवादिः ॥

[अथ मनोज्ञादिः]

'द्वन्द्वमनोज्ञादिभ्यश्च' (अ० ५।१।१३३)। द्वन्द्वात् मनोज्ञादिभ्यश्च तस्य भावः कर्म वेत्यर्थे वुञ् स्यादिति तदर्थः। शिष्योपाध्याययोर्भावः कर्म वा शैष्योपाध्यायिका इत्यादि द्वन्द्वोदाहरणम्। मनोज्ञादयः पद्यद्वयेन संगृह्यन्ते।

**मनोज्ञमेधाव्यभिरूपधूर्ताः कल्याणचोरौ प्रियरूपवृद्धौ।**
**आढ्यस्तथा श्रोत्रियसारपत्रौ छात्रो युवच्छान्दसविश्वदेवाः[1] ॥३०॥**

मनो जानाति परितोषयतीति मनोज्ञं वस्तु, तस्य भावः कर्म वा मानोज्ञकम्। मेधाविनो मैधावकम्। रूपमभिगत इति शोभनं रूपमस्येति वा अभिरूपस्तस्य भाव आभिरूपिकम्। धूर्तस्य भावो धौर्त्तिका। स्त्रीत्वं शब्दस्वभावात्। काल्याणकम्, चौरिका। धौर्त्तकं चौरकमिति केचित्। प्रियं रूपं यस्य स प्रियरूपः, प्रैयरूपकम्। वृद्धस्य भावः कर्म वा वार्द्धकम्। आसमन्ताद् ध्यायतीति आढ्यः, आढ्यकम्। श्रौत्रियकम्। साराणि पत्राणि यस्येति सारपत्रः, सारपत्रिका। सारपत्रकमिति अन्ये। छात्रकम्, यौवनकम्। 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (सि० कौ० १७६२) इति प्रकृतिभावः। छान्दसकम्, वैश्वदेवकम् ॥३०॥

**बहुलामुष्यकुलादोरूपमवश्यं कुपुत्रकुलपुत्रौ।**
**पुत्रकुमारकुलाला ग्रामात् षण्डश्च सुकुमारः ॥३१॥**

बाहुलकम्। दृढादित्वाद् बाहुल्यम्, बंहिमा इत्यपि। अमुष्य कुलस्य भाव आमुष्यकुलिका। स्वभावात् स्त्रीत्वम्। अदो रूपमिति अदो रूपमस्येति वा अदोरूपम्, तस्यादोरूपकम्। अदोरूपशब्दो रूपप्रशंसायाम्। अवश्यं भाव आवश्यकम्। कौपुत्रकम्, कौलपुत्रकम्। ग्रामशब्दात् परे पुत्र-

---

१. 'आढ्यस्तथा श्रोत्रियसारपत्राच्छात्रो युवा छान्दसविश्वदेवाः' इत्युपलभ्यते हस्तलेखे।

कुमारकुलालशब्दा षण्डशब्दश्चात्र ज्ञेयाः । ग्रामपुत्रिका, ग्रामकुमारिका, ग्रामकुलालिका । ग्रामस्य षण्डो ग्रामषण्डस्तस्य भावो ग्रामषण्डिका । एते चत्वारो नपुंसकलिङ्गा इति अन्ये । सुकुमारस्य भावः सौकुमारकम् ।

मनोज्ञादिराकृतिगणः । तेन शतं पुत्रा यस्यासौ शतपुत्रस्तस्य भावः कर्म वा शातपुत्रिका, अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका, आहोपुरुषिका इत्यादयो यथादर्शनमत्र बोध्याः । तथा च 'अइउण्' सूत्रे पतञ्जलिः प्रायुङ्क्त—'न खलु कश्चिद्विशेषः, आहोपुरुषिकामात्रं तु' इति । 'अहो अहं पुरुष इत्यहङ्कारवान् अहोपुरुषः, तस्य भाव आहोपुरुषिका, मनोज्ञादित्वाद् वुञ्' इति तत्र कैयटो व्याचख्यौ ॥३१॥ इति मनोज्ञादिः ॥

## [अथ पील्वादिः]

'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' (अ० ५।२।२४) । पील्वादिभ्यः कर्णादिभ्यश्च षष्ठ्यन्तेभ्यः पाकमूलयोरर्थयोः क्रमात् कुणप् जाहच् एतौ प्रत्ययौ भवत इति तदर्थः । तत्रापेक्षितं गणद्वयं पद्यद्वयेन संगृह्यते ।

पीलुरश्वत्थकुवलकरीरं बदरं शमी ।
कर्कन्धू खदिरं चेति पील्वादय उदाहृताः ॥३२॥

पीलूनां वृक्षाणां फलानां वा पाकः परिणामः पीलुकुणम् । अश्वत्थस्य पाकोऽश्वत्थकुणम् । कुवलकुणम् । कुवलं बदरीफलम् । एवमन्यदुदाहार्यम् । [करीरकुणम्, बदरकुणम्, शमीकुणम् । कर्कन्धूकुणम्, खदिरकुणम्] ॥३२॥ इति पील्वादिः ॥

## [अथ कर्णादिः]

कर्णभ्रूकेशपादाक्षिदन्तोष्ठं च नखं मुखम् ।
शृङ्गं पृष्ठं च गुल्फश्चेत्ययं कर्णादिको गणः ॥३३॥

कर्णस्य मूलमुपक्रमः कर्णजाहम् । एवं भ्रूजाहम्, केशजाहमित्याद्युदाहार्यम् । [पादजाहम्, अक्षिजाहम्, दन्तजाहम्, ओष्ठजाहम्, नखजाहम्, मुखजाहम् । शृङ्गजाहम्, पृष्ठजाहम्, गुल्फजाहम्] ।३३॥ इति कर्णादिः ॥

## [अथ तारकादिः]

'तदस्य सञ्जातं तारकादिभ्य इतच्' (अ० ५।२।३६) । सञ्जातो-

पाधिकेभ्यः तारकादिभ्यः प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थं इतच् प्रत्ययः स्यादिति तदर्थः। ते च तारकादयः सार्द्धचतुर्भिः पद्यैः संगृह्यन्ते ।

तारकाकुसुमपल्लववेगाः पुष्पगौरवविचारबुभुक्षाः ।
मञ्जरीस्तवककोरकखण्डा गर्जगर्वसुखसूचपिपासाः ॥३४॥

तारकाः सञ्जाता अस्येति तारकितं नभः। कुसुमानि सञ्जातान्यस्येति कुसुमितस्तरुः। पल्लवितः। वेगितो वेगवान्। पुष्पितः, गौरवितः, विचारितः, बुभुक्षितः। मञ्जरितः, [स्तवकितः, कोरकितः, खण्डितः।] गर्जनं गर्जः सञ्जातोऽस्य गर्जितो मत्तगजः। गर्वितः, सुखितः, सूचितः,] पिपासितः। अनुक्तमुदाहार्यम् ॥३४॥

निद्रामुद्रामुकुलमुसलं चन्द्रकाभ्रान्धकाराः ।
शास्त्रोत्कण्ठापुलकतिलका द्रोहदोहौ तरङ्गः ।
हर्षोत्कर्षव्रणकुवलयव्याधिगर्धाः पुरीषम् ।
क्षुत्सीमन्तज्वरभरगरा रोगरोमाञ्चरागाः ॥३५॥

निद्रितः, [मुद्रितः, मुकुलितः,] मुसलितम्, चन्द्रकितम्, अभ्रिमम्, [अन्धकारितम्।] शास्त्रितम्, [उत्कण्ठितः, पुलकितः,] तिलकितं मुखम्, द्रोहितो द्रोहवान्, [दोहितः, तरङ्गितः, हर्षितः, उत्कर्षितः, व्रणितः,] कुवलयितं सरः, [व्याधितः,] गर्धितोऽभिकाङ्क्षावान् [पुरीषितः।] क्षुधितः क्षुन्मान्, [सीमन्तितः, ज्वरितः,] भरितो भरवान्, गरितं विषवत्, [रोगितः, रोमाञ्चितः, रागितः।] स्पष्टमन्यत् ॥३५॥

पण्डा कन्दलकज्जलं किसलयं स्यात् कुण्डलं कञ्चुकः ।
कल्लोलस्थपुटं कुतूहलफलं चाङ्गारकः कण्टकः ।
शृङ्गाराङ्कुरशैवलानि बकुलश्वभ्रप्रचारास्तथा ।
वर्मारालकलङ्ककर्दमरणश्रद्धा ऋजीषक्षणौ ॥३६॥

पण्डा बुद्धिः सञ्जाताऽस्येति पण्डितः। [कन्दलितः।] कज्जलं मषी, कज्जलितः। [किसलयितः, कुण्डलितः, कञ्चुकितः।] कल्लोलितः, [स्थपुटितः, कुतूहलितः,] फलितस्तरुः, अङ्गारकितः पलाशः। अत्राङ्गारकशब्दोऽङ्गारसदृशेषु पलाशकुसुमेषु लक्षणया वर्त्तते। [कण्टकितः। शृङ्गारितः,] अङ्कुरिता

भूः, [शैवलितः ।] बकुलं कुड्मलम्, बकुलितस्तरुः । श्वभ्रो गर्त्तः, श्वभ्रितं स्थलम् । [प्रचारितः । वर्मितः ।] 'अरालमिति मूत्रपुरीषयोः संज्ञा' (गण० पृ० २१८) इति वर्द्धमानः । 'अरालः कुटिले सर्जरसे समदन्तिनि' (मेदिन्यां लत्रिके—५८) इति मेदिनीकारः । अरालितः । [कलङ्कितः,कर्दमितः ।] रणः सञ्जातोऽस्येति रणितः । अद्धितः । ऋजोष उपहतमलं पिष्टपवनं च । ऋजीषितम् । [क्षणितम् ] ॥३६॥

तृट्प्रतिबिम्बप्रत्ययमूर्च्छादुःखानि कर्णको मुकुरः ।
हस्तकमूत्रोच्चारा अङ्गारो विघ्नतन्त्रं च ।
दीक्षाथो धेनुष्या गर्भादप्राणिनीतजिह ॥३७॥

तृषितः । [प्रतिबिम्बितः ।] प्रत्ययो विश्वासः, प्रत्ययितः । [मूर्च्छितः, दुःखितः ।] कर्ण इव कर्णको दारुविकारः, कर्णकितः स्तम्भः मुकुर आदर्शः, [मुकुरितः ।] हस्तको हस्तावलम्बः सञ्जातोऽस्य हस्तकितः । [मूत्रितः,] उच्चारितः,[अङ्गारितः,]विघ्नितः,तन्त्रं सञ्जातमस्य तन्त्रितः । [दीक्षितः।] धेनुष्या धेनुरेव योत्तमर्णगृहे [आ ? अव]धित्वेन स्थाप्यते । धेनुष्यितो धनिकः । इह तारकादौ वर्त्तमानाद् गर्भशब्दादितच् भवत्यप्राणिनि वाच्य इत्यर्थः । गूढाशयं गर्भं वचनादि गर्भितमित्युच्यते । अप्राणिनि किम् ? गर्भिणी नारी ।

ननु सन्नन्ताभ्यां भुजिपिबतीभ्यां 'पुष्प विकसने' (धातु० ४।१६) इति दैवादिकाच्च क्तप्रत्यये बुभुक्षित-पिपासित-पुष्पितानां सिद्धिरिति चेन् मैवम्, अर्थवैषम्यात् । तथाहि भोक्तुमिष्टो बुभुक्षित ओदनः क्षुधितेन, पातुमिष्टं पिपासितं सलिलं तृषितेनेति कर्मणि क्तप्रत्यये बुभुक्षितादिशब्द ओदनादौ कर्मणि वर्त्तते । इतच्प्रत्ययान्तस्तु भोजनादिकर्त्तरि पुरुषे । क्तान्तः पुष्पित-शब्दोऽपि विकासक्रियोपेतेऽर्थे प्रतीतः । यथा पुष्पिता कलिका, पुष्पितं कमलम् । इतच्प्रत्ययान्तस्तु प्रसवोपेते चम्पकादाविति विभावनीयम् ॥३७॥ इति तारकादिः ॥

## [अथ विमुक्तादिः]

'विमुक्तादिभ्योऽण्' (अ० ५।२।६१) । मत्वर्थेऽण् स्यादध्यायानुवाकयो-र्वाच्ययोरिति सूत्रार्थः । विमुक्तादयो द्वाभ्यां संगृह्यन्ते ।

**विमुक्तदेवासुरसत्वदग्नाविष्णूर्वशीडामरुतो महित्री ।**
**सुपर्णरक्षोऽसुरबर्हवत् स्यात् पतत्रिपत्नीवदिहास्यहत्यः ॥३८॥**

विमुक्त इति शब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायोऽनुवाको वा । देवासुर-शब्दोऽस्मिन्नस्ति दैवासुरोऽध्यायोऽनुवाको वा । केचिद्द विगृहीतादरणमुदाहरन्ति—देव असुर इति । एवं सात्वतः, आग्नावैष्णवः । 'देवताद्वन्द्वे च' (अ० ७।३।२१) इत्युभयपदवृद्धिः । अनुकरणस्य द्वन्द्वाभावान्नेति केचित् । तन्मते आग्नाविष्णवः । और्वशः । ऐड इडाशब्दवान् । [मारुतः।] महयतीति महित्री, माहित्रः । [सौपर्णः,]राक्षसः, आसुरः, बार्हवतः, पातत्रिणः, पात्नीवतः । अस्यहत्यशब्दोऽस्मिन्नस्ति आस्यहत्योऽध्यायोऽनुवाको वा ॥३८॥

**उपसत्सदसद्वसुमत्परिसारकवसुवयोहविर्धानम् ।**
**वृत्रहदशार्हसोमापूषदशार्णा महीयत्वम् ॥३९॥**

उपसच्छब्दोऽस्त्यस्मिन्निति औपसदः । सादसतः, वासुमतः, पारिसारकः, वासवः, वायसः, हाविर्धानः । वार्त्रघ्नः, दाशार्हः । सोमश्च पूषा च सोमापूषणौ । सोमपूषन् शब्दोऽस्त्यस्मिन्निति सोमापौष्णः । अत्र वार्त्रघ्न इत्यत्र 'षपूर्वहन्' (अ० ६।४।१३५) इत्यादिनाऽल्लोपो विधीयते । दाशार्णः, माहीयत्वः । अनुदाहृतानां रूपाण्यूह्यानि ॥३९॥ इति विमुक्तादिः ॥

### [अथ गोषदादिः]

'गोषदादिभ्यो वुन्' (अ० ५।२।६२) । एभ्यो मतुबर्थे वुन् स्यादध्यायानुवाकयोरिति तदर्थः । सार्द्धपद्येन गोषदादयः संगृह्यन्ते ।

**गोषदिषेत्वादेवस्यत्वारक्षोहणाञ्जनकृशानु ।**
**देवीरापः कृष्णोऽस्यखरेष्ठौ मातरिश्वयुञ्जानौ ।**
**देवीन्धियप्रतूर्त्तप्रभूतमिति गोषदादिगणः ॥४०॥**

गाः सादयतीति गोषत् । सुषामादित्वात् (अ० ८।३।९८) षत्वम् । गोषदस्मिन्नस्तीति गोषदकोऽध्यायोऽनुवाको वा । इषेत्वेति समुदायस्येदमखण्डमनुकरणम् । इषेत्वाशब्दोऽस्मिन्नस्तीतीषेत्वकः । एवं देवस्यत्वकः । रक्षांसि घ्नन्तीति रक्षोहणः । अस्य जसन्तस्याकारान्तभागानुकरणाद् वुन् । रक्षोहणकः । अञ्जनकः । कृशानवकः । देवीरित्येतज्जसन्तं छान्दसम्,आप इत्यपि जसन्तम् । अनयोः समुदायस्याकारान्तभागानुकरणाद् वुन् । देवीरापकः ।

कृष्णोऽस्यकः। खरेष्ठकः। कृष्णोऽस्याखरेष्ठक इति अन्ये। मातरिश्वा इत्यकारान्तभागस्यानुकरणाद् वुन्। मातरिश्वकः। युञ्जानकः। देवीन्धियमित्यकारान्तभागानुकरणाद् वुन्। देवीन्धियकः। प्रतूर्त्तकः। प्रभूतकः ॥४०॥ इति गोषदादिः॥

[अथ आकर्षादिः]

'आकर्षादिभ्यः कन्' (अ० ५।२।६४)। तत्र कुशल इत्यर्थे आकर्षादिभ्यः कन् स्यादिति तदर्थः। प्रकृतेन वुना सिद्धे कन्वचनमिदुदन्तार्थम्। सार्द्धपद्येनाकर्षादयः संगृह्यन्ते।

आकर्षत्सरुगद्गदपिशाचनिचयाः पिचण्डश्च।
दीपाचयजयविजयह्लादह्रादह्रदाश्मशकुनिनयाः।
चयपादाशनयोऽमी आकर्षादय उदाहृताः सद्भिः॥४१॥

आकृष्यते सुवर्णादिकमस्मिन्नित्याकर्षो निकषोपलः। तत्र कुशल आकर्षकः। आकषेति रेफरहितो मुख्यः पाठ इति दीक्षितः (द्र०—सि० कौ० २५२३)। तत्राप्याकषन्ति सुवर्णादिकमस्मिन्नित्येव विग्रहः, पूर्वोक्त एवार्थः। त्सरुः खड्गादिमुष्टिस्तद्विधानपि लक्षणया त्सरुः। त्सरौ कुशलः त्सरुकः। एवमुत्तरत्रापि यथासम्भवं वेदितव्यम्। तथाहि गद्गदशब्दस्तत्क्रियायाम्, [गद्गदकः।] पिशाचशब्दस्तदुत्सारणे,[पिशाचकः।] निचयो राशीकरणम्, [निचयकः।] पिचण्ड दीप्तौ तद्विधाने, [पिचण्डकः।] दीपे कुशलो दीपकः। दीपविधाने निपुण इत्यर्थः। आचयकः। संग्रहकुशल इत्यर्थः। एवं भावप्रत्ययान्तेषु न लक्षणा, मुख्यार्थबाधाभावात्। [जयकः, विजयकः, ह्लादकः, ह्रादकः, ह्रदकः, अश्मकः, शकुनिकः, नयकः। चयकः, पादकः।] अशनिकः। अशनिप्रयोगे दक्षः॥४१॥ इति आकर्षादिः॥

[अथ इष्टादिः]

'इष्टादिभ्यश्च' (अ० ५।२।८८)। एभ्योऽनेनेति तृतीयान्तार्थे इनिः प्रत्ययः स्यादिति तदर्थः। अत्रापेक्षिता इष्टादयस्त्रिभिः पद्यैः संगृह्यन्ते।

इष्टार्चिते निगदितागणितावकीर्ण-
पूर्त्तोपसादितगृहीतनिराकृतानि।
संरक्षितानुपठितोपकृतानुयुक्ता-
म्नातश्रुतानुगणितान्यवकल्पितं च॥४२॥

इष्टमनेनेति इष्टी यज्ञे, अर्चिती साधुषु, निगदिती, अगणिती, अवकीर्णी व्रते, पूर्त्ती दाने, उपसादिती सदसि, गृहीती विद्यासु, निराकृती व्यसनेषु। संरक्षिती प्रजासु, अनुपठिती वेदेषु, उपकृती सज्जनेषु, अनुयुक्ती शास्त्रेषु, आम्नाती छन्दसि, श्रुती इतिहासपुराणेषु, अनुगणिती निरुक्ते, अवकल्पिती जल्पेषु ॥४२॥

आसेवितपरिरक्षितनिकथितपरिवादितानि सङ्कलितम्।
परिगदितनिपठिते अवधानाधीतावधारितानि स्युः ॥४३॥

आसेविती भूपतौ, परिरक्षिती आर्त्ते, निकथिती कथासु, परिवादिती दुष्टेषु, सङ्कलिती पदार्थेषु। सङ्कलनं संख्यानम्। परिगदिती परेषु, निपठिती वेदे, अवधानी गुणेषु, अधीती व्याकरणे, अवधारिती कृत्यकर्मणि ॥४३॥

उपाकृतं व्याकुलितं निवादितमतः परम्।
आयुक्तमिति विज्ञेयो गण इष्टादिको बुधैः ॥४४॥

उपाकृती पशौ, व्याकुलिती रिपौ, निवादिती वाद्येषु। भृशार्थे नित्यार्थे वात्र इनिः। आयुक्ती युद्धे।

अत्र सर्वत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वया विवक्षया तत्तद्धातूनामकर्मकत्वाद् भावे क्तः। व्याकरणमधीतमनेनेति कर्मविशेषस्य तत्तद्रूपेणान्वयविवक्षायां तु वाक्यमेव। तदुक्तं भाष्ये—'यदा वाक्यं न तदा प्रत्ययो यदा प्रत्ययः सामान्येन तदा वृत्तिः' (महा० ३।१।९) इति। न तदा प्रत्यय इत्यस्य न तदा भावे प्रत्ययः, धातोः सकर्मकत्वादित्यर्थः। यदा प्रत्ययाभावे तदा सामान्येनाविवक्षितकर्मकधातुप्रकृतिकक्तान्तेन सह वृत्तिरेव तद्धितलक्षणा भवतीत्यर्थः ॥४४॥ इति इष्टादिः ॥

## [अथ रसादिः]

'रसादिभ्यश्च' (अ० ५।२।९५)। एभ्यो मतुप् स्यादिति तदर्थः। रसादय एकेन पद्येन संगृह्यन्ते।

रसरूपवर्णगन्धाः शब्दस्पर्शौ तथा स्नेहः।
भावो गुणादथैकाजित्येवं कीर्त्तितो रसादिः ॥४५॥

रसवान्, रूपवान्, वर्णवान्, गन्धवान्, शब्दवान्, स्पर्शवान्, स्नेहवान्। भाववान्।

रसादिभ्यः पुनर्मतुब्विधानमन्यमत्वर्थीयनिवृत्यर्थम् । नन्वेवं रसिको नटो रूपिणी वै उर्वश्यप्सरसामित्यादीनां का गतिरित्यत आह—गुणाद् इति । रसादीनां विशेषणमेतत् । तेन गुणवचनेभ्य एव रसादिभ्योऽन्यमत्वर्थीयनिवर्तको मतुप् । रूपिणी इत्यत्र तु रूपशब्दः सौन्दर्यमभिधत्ते, तच्च न गुणः । रसिक इत्यत्रापि रसशब्देन भावोऽभिधीयते, न तु रसनेन्द्रियग्राह्यो गुणः ।

एकाच्शब्दो रसादौ बोध्य इति एकाज् इत्यस्यार्थः । स्ववान् । भं नक्षत्रम्, भवान् आकाशः ॥४५॥ इति **रसादिः** ॥

**[अथ सिध्मादिः]**

'**सिध्मादिभ्यश्च**' (अ० ५ २।९७) । एभ्यो लज्वा स्यादिति तदर्थः । इह पूर्वसूत्रादन्यतरस्यां ग्रहणमनुवर्त्तते, तच्च मतुप्समुच्चयार्थं न तु लच्प्रत्ययविकल्पार्थम् । तेनाकारान्तेभ्य इनिठनौ न ।

**सिध्मस्नेहौ पांसुपृथुश्यामचटूनि**
**ग्रन्थिप्रज्ञे वीजकपी पिङ्गमृदू च ।**
**शीतपर्णं मांसहनू सक्तुगडू स्तः**
**पत्रं कृष्णश्रीमणिकर्णोदकधाराः ॥४६॥**

सिध्मान्यस्य सन्ति सिध्मलः कुष्ठी । स्नेहलो स्निग्धो जनः । पांसुलः, पृथुलः, श्यामलः, चटुलः, ग्रन्थिलः, प्रज्ञालः । पिच्छादित्वात्(अ० ५ २।१००) प्रज्ञिलः । वीजलः, कपिलः, पिङ्गलः, मृदुलः । शीतलः, [पर्णलः, मांसलः,] हनुलः, [सक्तुलः,] गडुलः कुब्जः, [पत्रलः,] कृष्णलः, श्रीलः श्रीमान् । अश्लीलशब्दे शकारोत्तररेफस्य लत्वं पृषोदरादित्वात् । मणिलः, कर्णलः, उदकलः । पिच्छादित्वादुदकिलः । धारालः ॥४६॥

**सक्थि श्लेष्मा वर्ष्मनिष्पात्पुष्काः**
**पेशः पार्श्वं पक्ष्म निष्पाच्च पर्शुः ।**
**नाभिः कुण्डं गण्डुमण्डौ कुशश्च**
**मञ्जुर्वीणा क्षुद्रजन्तूपतापौ ॥४७॥**

सक्थिलः, श्लेष्मलः कफी, वर्ष्मलः, निष्पावलः, पुष्कलः, पेशलः, पार्श्वलः, पक्ष्मलः । निष्पादयतीति निष्पात्, क्विप् । निष्पाल्लः, पर्शुलः ।

नाभिलः, कुण्डलम्, गण्डुलः, मण्डलम्, कुशलम्, मञ्जुलम्, वीणालः। क्षुद्रजन्तूपतापाविति तत्तद्विशेषग्रहणार्थम्। आनकुलात् क्षुद्रजन्तवः। यूकाः सन्त्यस्मिन् यूकालः, मक्षिकालः। उपतापो रोगः। मूर्च्छालः, विपादिकालः ॥४७॥

जटाघटाकटाकालाः क्षेपे लज्भागिनो मताः।
दीर्घः पार्ष्णिधमन्योः स्यादूङ् तु वातललाटयोः।
तथैव दन्तबलयोरथ पित्तमिह स्मृतम् ॥४८॥

जटादयः क्षेपे लच्प्रत्ययं लभन्ते। जटालः। गर्हितजटावानित्यर्थः। घटा सभा संलापो वा। घटालः। घाटा ग्रीवा घाटाल इति **वर्द्धमानः** (द्र०—गण० पृ० २३३)। कटालो गर्हितगण्डस्थलो गजः। काला कूर्चम्। कालालः। जटावान् घटावानित्यादौ मतुपा क्षेपो न गम्यतेऽतः क्षेपे मतुप् न भवति।

पार्ष्णिधमन्योः प्रत्ययसन्नियोगेन दीर्घः। पार्ष्णीलः, धमनीलः। वातललाटदन्तबलानामूङादेशः प्रत्ययसन्नियोगेन। वातूलः, ललाटूलः, दन्तूलः, बलूलः। गलशब्दस्यापि गलूल इति **भोजः**। पित्तलः। पक्षे सिध्मवानित्यादि। आकृतिगणोऽयम्। तेन वर्णप्रभृतयोऽत्र द्रष्टव्या इति **वर्द्धमानः** (द्र०—गण० पृ० २३४) ॥४८॥ इति सिध्मादिः॥

[अथ लोमादिः]

'लोमादिपामादिपिच्छादिभ्यः शनेलचः' (अ० ५।२।१००)। स्पष्टम्। तत्र तावत् शप्रत्ययप्रकृतयो लोमादय एकेन पद्येन संगृह्यन्ते।

लोम रोम हरिर्बभ्रुर्गिरिः कर्कः कपिर्मुनिः।
तरुश्च लोमादिगणे रुरुं चेच्छन्ति केचन ॥४९॥

लोमान्यस्य सन्ति लोमशः। एवं रोमशः, हरिश इत्यादि। [बभ्रुशः, गिरिश, कर्कशः, कपिशः, मुनिशः। तरुशः, रुरुश] ॥४९॥ [इति लोमादिः॥]

[अथ पामादिः]

पामादिभ्यो न [इति] वाक्येऽपेक्षिताः पामादयो द्वाभ्यां पद्याभ्यां सगृह्यन्ते।

पामा वामा वेमहेमबलयः श्लेष्मसामनी।
कद्रूष्मकृमयोऽङ्गात्तु कल्याणे प्रत्ययो भवेत् ॥५०॥

पामास्यास्ति पामनः । एवं वामनः, वेमनः, हेमनः, बलिनः, श्लेष्मणः, सामनः । कद्रूणः, ऊष्मणः, कृमिणः । कल्याणमङ्गमस्त्यस्येत्यङ्गना । कल्याण इति किम् ? अङ्गवती अन्या ॥५०॥

विष्वक्शब्दादसन्निधेर्नो[1] ल उत्तरपदस्य च ।
दद्रूशाकीपलालीनां ह्रस्वो लक्ष्म्यास्त्वहाद् भवेत् ॥५१॥

विष्वक्शब्दादकृतसन्धेर्नप्रत्ययो भवति तत्सन्नियोगेनोत्तरपदस्य लोप इत्यर्थः । विषु नानाविधमञ्चतीति विष्वञ्चो दिवसविशेषाः सन्त्यस्येति विषुणो विषुवदाख्यः कालः । तस्य हि नाना गतानि दिनानि सन्ति दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वादिति भावः । दद्रूप्रभृतीनां ह्रस्वः प्रत्ययसन्नियोगेन । दद्रूः त्वग्रोगविशेषः । दद्रुणः । महच्छाकं शाकसमूहो वा शाकी । तद्वत् शाकिनम् । महत्पलं पलालसमूहो वा पलाली । तद्वत् पलालिनम् । लक्ष्मीशब्दस्याकारोऽन्तादेशः प्रत्ययसन्नियोगेन । लक्ष्मीरस्यास्तीति लक्ष्मणः ॥५१॥ इति **पामादिः** ॥

[अथ पिच्छादिः]

पिच्छादिभ्य इलजिति वाक्येऽपेक्षिताः पिच्छादय एकेन पद्येन संगृह्यन्ते ।

पिच्छोरसी वर्णपङ्कध्रुवकध्रुवकोदकम् ।
प्रज्ञा क्षेपे जटाकालाघटाः पिच्छादिषु स्मृताः ॥५२॥

पिच्छान्यस्य सन्ति पिच्छिलः । उरसिलः, [वर्णिलः,] पङ्किलः, [ध्रुवकिलः, ध्रुवकिलः,] उदकिलः । प्रज्ञिलः । जटादयः क्षेपे गम्यमाने इलचमुत्पादयन्ति । जटिलः, कालिलः, घटिलः । अन्यत्र जटावान् । यत्तु गणरत्नमहोदधौ 'पिच्छोदरव्रीहिगुहाः पिचण्ड' (गण० पृ० २३२) इत्यादि पठित्वा उदरिलः, व्रीहिलः, गुहिल इत्याद्यधिकं पिच्छादिषूदाहृतं तत्तु वक्ष्यमाणेन 'तुन्दादिभ्य इलच्च' (अ० ५।२।११७) इति सूत्रेण गतार्थम् ॥५२॥ इति **पिच्छादिः** ॥

[अथ व्रीह्यादिः]

'व्रीह्यादिभ्यश्च' (अ० ५।२।११६) । एभ्य इनिठनौ स्तो मत्वर्थं इति तदर्थः । त एते व्रीह्यादयः पद्यद्वयेन संगृह्यन्ते ।

---

१. सम्भाव्यते यद् 'विष्वक्शब्दादसन्धेर्नो' इति पाठः स्याच्छन्दानुरोधेन ।

**व्रीहिर्माया शिखा शाला माला केका च मेखला ।**
**कर्माष्टका पताका च वलाका वडवाऽथ नौः ॥५३॥**

व्रीहयः सन्त्यस्येति व्रीही, व्रीहिकः । मायी, मायिकः । शिखा अस्यास्तीति शिखी । शाली, शालिकः । माली । केकी, केकिकः । मेखली, मेखलिकः । कर्मी, कर्मिकः । अष्टकी, अष्टकिकः । अष्टकेति पितृदेवत्यकर्मनामधेयम् । पताकी, पताकिकः । वलाका । वडवी । नावी, नाविकः ॥५३॥

**चर्म वर्म कुमारी च दंष्ट्रा संज्ञा यवात् खदः ।**
**वीणा शीर्षान्नञ इति व्रीह्यादिर्गण ईरितः ॥५४॥**

चर्मी, चर्मिकः । वर्मी, वर्मिकः । कुमारी, कुमारिकः । दंष्ट्री, दंष्ट्रिकः । संज्ञी । यवानां खदो भक्षणं यवखदः । सोऽस्यास्तीति यवखदिकः । वीणी । शीर्षं नास्त्यस्येति अशीर्षिकः ।

अत्रायं विवेकः—नहि सर्वेभ्यो व्रीह्यादिभ्य इनिठनावविशेषेण भवतः । किं तर्हि ? शिखामालासंज्ञावडवावीणावलाकाभ्य इनिः, यवखदशीर्षाभ्यामिकः, अन्येभ्य उभयम् । तथैवोदाहृतम् ॥५४॥ इति व्रीह्यादिः ॥

[अथ तुन्दादिः]

'तुन्दादिभ्य इलच्च' (अ० ५।२।११७) । एभ्यो मत्वर्थे इलच् स्याच्चादिनिठनौ मतुप् चेति तदर्थः । त एते तुन्दादय एकेन पद्येन संगृह्यन्ते ।

**तुन्दोदरयवव्रीहिपिचण्डाः फेनयुग् ग्रहः ।**
**स्वाङ्गं विवृद्धमित्येष तुन्दादिगण ईरितः ॥५५॥**

तुन्दमस्यास्ति तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । एवमग्रेऽपि चत्वारि रूपाणि । उदरिलः, यविलः, व्रीहिलः, पिचण्डिलः, फेनिलः, ग्रहिलः । फेनयुग् ग्रह इत्यस्य फेनशब्दयुक्तो ग्रहशब्दोऽत्र गणे बोध्य इत्यर्थः । फेनशब्दो ग्रहशब्दश्चेति यावत् । विवृद्धोपाधिकं स्वाङ्गमत्र गणे बोध्यमित्यर्थः । विवृद्धौ कर्णौ स्तोऽस्येति कर्णिलः, कर्णी, कर्णिकः, कर्णवान् । एवं कण्ठिलः, कण्ठी, कण्ठिकः, कण्ठवान् इत्यादि ॥५५॥ इति तुन्दादिः ॥

[अथ अर्शआदिः]

'अर्शआदिभ्योऽच्' (अ० ५।२।१२७) । एभ्यो मत्वर्थेऽच् प्रत्ययः स्यादिति तदर्थः । अत्रापेक्षिता अर्शआदयः सार्द्धपद्येन संगृह्यन्ते ।

अर्शोऽम्लतुन्दचतुरा जटा घाटा घटा उरः ।
पलितं कर्द्दमोऽघं च वर्णो लवणमेव च ।
स्वाङ्गं हीनं चेति बुधैरर्शआदिगणः स्मृतः ॥५६॥

अर्शो गुदकालकस्तदस्यास्तीति अर्शसः पुमान् । 'अस्मायामेधा' (अ० ५।२।१२१) इति विनिप्रत्यये प्राप्तेऽच् । अम्लो रसोऽस्यास्तीति अम्लं जम्बीरम् । तुन्दस्तुन्दिलः । चतुरा अस्य सन्तीति चतुरः । जटनं जटा, सा अस्यास्तीति जटा केशविन्यासः । घाटा ग्रीवा, तद्वान् घाटः । घटनं घटा, सा अस्यास्तीति घटा व्यूहविशेषः । जटा घटा वा अस्यास्तीति जटो घटो वेति केचित् । उरसा बलं लक्ष्यते । उरसः । उरसिल इत्यपि । पलितः पुमान् । कर्द्दमः प्रदेशः । अघः पापी । वर्णोऽकारादिः । स हि स्वोपस्थापक-लिपिरेखारूपेण मषीवर्णोपेतः सन्नेवमुच्यते । लवणो रसोऽस्यास्तीति लवणः सूपः, लवणा यवागूः ।

हीनं विकलम् । खञ्जः पादोऽस्यास्तीति खञ्जः । काणं चक्षुरस्या-स्तीति काणः । खल्वाटं शिरोऽस्यास्तीति खल्वाटः । हीनं हीनोपाधिकं स्वाङ्गमत्र गणे बोध्यम्—खण्डः कर्णोऽस्यास्तीति कर्णः, छिन्ना नासिका-स्यास्तीति नासिक इति केचिद् आहुः ।

आकृतिगणश्चायं तेन यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत् सर्व-मिह बोध्यम् । यथा—शुक्रं तेजोऽस्यास्ति शुक्रो दैत्यगुरुः । पद्ममस्या अस्तीति पद्मा श्रीः । शुक्लो गुणः, शुक्लः पटः । नीलो गुणः, नीलो घट इत्यादि ॥५६॥ इति अर्शआदिः ।

[अथ सुखादिः]

'सुखादिभ्यश्च' (अ० ५।२।१३१) । मत्वर्थ इनिः स्यादिति तदर्थः । ते च सुखादय एकेन पद्येन संगृह्यन्ते ।

सुखप्रतीपक्षमयास्रसोढा-
स्तृप्राश्रकृच्छ्रा दलशीलकक्षाः ।
अलीकदुःखे कृपणं हलं स्यात्
क्षेपे तु माला करुणं गणेऽत्र ॥५७॥

सुखमस्यास्तीति सुखी, प्रतीपी, प्रणयी, अस्त्री, सोढी, तृप्री, अश्री, कृच्छ्री, दली. शीली, कक्षी । अलीकी, दुःखी, कृपणी, हली । माली निन्दायाम् । अन्यत्र मालावान् । व्रीह्यादिषु (अ० ५।२।११६) मालाशब्दः पठ्यते । इह तु पाठः क्षेपे मतुम्मा भूदित्येवमर्थः । करुणी ॥५७॥ इति सुखादिः ॥

[अथ पुष्करादिः]

'पुष्करादिभ्यो देशे' (अ० ५।२।१३५) । एभ्यो मत्वर्थ इनिः स्याद् देशे वाच्य इति तदर्थः । त एते पुष्करादयः सार्द्धपद्यद्वयेन संगृह्यन्ते ।

पुष्करं नडतमालहिरण्यकरवाणि कुमुदं च शिरीषम् ।
कर्दमस्तटतरङ्गकपित्थं पङ्कजोत्पलकरीषसरोजम् ॥५८॥

पुष्कराण्यस्यां सन्ति पुष्करिणी सरसी । नडिनी भूमिः । तमालिनी तरङ्गिणी । [हिरण्यिनी, कैरविणी, कुमुदिनी, शिरीषिणी । कर्दमिनी, तटिनी, तरङ्गिणी, कपित्थिनी, पङ्कजिनी, उत्पलिनी, करीषिणी,] सरोजिनी ॥५८॥

राजीवनालीकसरोरुहाणि पद्मं मृणालं पुटकारविन्दे ।
अम्भोजमब्जं कमलं विगर्हः कल्लोलशालूकविसं यवासः ।
अत्र प्रवाहपयसी गण एवं पुष्करादिकोऽभिहितः ॥५९॥

राजीविनी, नालीकिनी, [सरोरुहिणी, पद्मिनी, मृणालिनी, पुटकिनी, अरविन्दिनी । अम्भोजिनी, अब्जिनी, कमलिनी, विगर्हिणी, कल्लोलिनी.] शालूकिनी, विसिनी, [यवासिनी । प्रवाहिणी, पयसिनी ।] अनुक्तमुदाहरणीयम् । देशेऽभिधेय एवायमिनिः । अन्यत्र तु पुष्करवान् गजः ॥५९॥ इति पुष्करादिः ॥

[अथ बलादिः]

'बलादिभ्यो मतुबन्यतरस्याम्' (अ० ५।२।१३६) । एभ्यो मतुप् स्यादिनिश्चेति तदर्थः । एकेन पद्येन बलादयः संगृह्यन्ते ।

बलमुत्साहोद्भासोद्वासोदासोपयामकुलचूडाः ।
कूलायामारोहावरोहपरिणाहयुद्धसूनशिखाः ॥६०॥

बलमस्यास्तीति बलवान्, बली । एवमुत्साहवान्, उत्साही । [उद्भास-

वान्, उद्भासो। उद्वासवान्, उद्वासो। उद्दासवान्,उद्दासो। उपयामवान्, उपयामो।] कुलवान्, कुली। चूडावान्, चूडो। कूलवती, कूलिनी नदी। आयामवती, आयामिनी। आरोहवान्, आरोही। अवरोहवान्, अवरोही। परिणाहवान्, परिणाही गिरिर्गजो वा। युद्धवान्,युद्धी। सूनेति प्रातिपदिक-निर्देशः। सूना घातस्थानमस्यास्तीति सूनवान्,सूनी। सुलेति क्वचित् पाठः। सुली। शिखावान्, शिखी ॥६०॥ इति बलादिः॥

[अथ देवपथादिः]

'देवपथादिभ्यश्च' (अ० ५।३।१००)। एभ्यः प्रतिकृतौ संज्ञायां वा विहितस्य कनो लुप् स्यादिति तदर्थः।

देवरथहंसकरिशतसिन्धुस्थलराजशङ्कुभ्यः ।
अजवारिभ्यां च पथः सिद्धोष्ट्राभ्यां गतिग्रीवे ॥६१॥

देवपथ इव प्रतिकृतिर्देवपथः। देवानां पन्था यादृशः सद्गुणोपेतः तरुनकरच्छायाकलितः समतलः सजलो निरुपद्रवश्च तादृशोऽन्योऽपि देवपथ इत्युच्यते। एवं रथपथः, हंसपथः, करिपथः। शतं पन्थानो यत्रेति शतपथस्तत्तुल्याऽन्या प्रतिकृतिः शतपथ इत्युच्यते। सिन्धोः समुद्रस्य नद्या वा पन्थाः सिन्धुपथस्तत्तुल्योऽन्यः सिन्धुपथः। स्थलाकारः पन्थाः स्थलपथस्तत्तुल्योऽन्यः स्थलपथः। राजपथसदृशस्य सद्व्यवहारादेः संज्ञा राजपथः। शङ्कुसहितः सङ्कटः पन्थाः शङ्कुपथस्तत्सदृशस्य दुराचारादेः संज्ञा शङ्कुपथः। [अजपथः,वारिपथः।] सिद्धानां गतिः सिद्धगतिस्तत्तुल्यः संज्ञा सिद्धगतिः। उष्ट्रस्य ग्रीवेव प्रतिकृतिरुष्ट्रग्रीवा।।६१॥

हस्तेन्द्रपुष्पदण्डास्तथैव मत्स्यश्च वामरज्जुश्च।
एवं देवपथादिः कथितोऽस्त्याकृतिगणो बुधश्रेष्ठैः ॥६२॥

हस्त इव हस्तः। एवमिन्द्रः। पुष्पं पुष्पतुल्या प्रतिमा। दण्ड इव दण्डः। मत्स्य इव मत्स्यः। कुण्डसिद्ध्यादिग्रन्थेषु कुण्डनिर्माणक्रियायां मत्स्याकाररेखाः पतन्ति ता मत्स्यपदेन व्यवह्रियन्ते। वामा कुटिला रज्जुर्वामरज्जुस्तत्सदृशस्य खलादेः संज्ञा वामरज्जुः।

एषु क्वचिद् 'इवे प्रतिकृतौ' (अ० ५।३।९६) इति क्वचिच्च 'संज्ञायाम्' (अ० ५।३।९७) इति विहितस्य कनो लुप्। लुपि सति प्रकृतिवल्लिङ्गवचने भवतः।

आकृतिगणोऽयम् । तेन चञ्चा तृणमयः पुमान्, वध्रिका चर्ममयी वरत्रा । तत्सदृशस्य मनुष्यस्य भिन्नस्य गवादेः संज्ञा चञ्चा वध्रिका । मनुष्य-संज्ञायां 'लुम्मनुष्ये' (अ० ५।३।९८) इत्यनेनैव सिद्धम् । पुंलिङ्गेऽपि पदार्थे स्त्रीलिङ्गतैव, प्रकृतिवल्लिङ्गवचनातिदेशात् । विष्णुरिव प्रतिमा विष्णुः । एवं शिवः स्कन्द आदित्य इत्यादि । ननु 'जीविकार्थे चापण्ये' (अ० ५।३।९९) इत्यनेनेदं सिद्ध्यति तत्किमर्थमाकृतिगणफलत्वेनेदमुदाह्रियते, इति चेन्मैवम्, ये देवलकपदाभिधेया भिक्षवो देवप्रतिमा गृहीत्वा गृहाद् गृहं भिक्षमाणा अटन्ति तेषां जीविकार्थासु देवप्रतिकृतिषु तेन सूत्रेण लुब्विधानात् । यास्त्वा-यतने प्रतिष्ठाप्यन्ते पूज्यन्ते च तास्तु न जीविकार्था इति देवपथादित्वादेव तत्र कनो लुप् । तदुक्तमभियुक्तैः—

'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥'

(काशिकायां—५।३।१००)

इति । अर्चासु प्रतिमासु कथम्भूतासु ? पूजनार्हासु । गेहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते । तत्रार्चासु —विष्णुः शिव इत्युदाहृतम् । चित्रकर्मणि—अर्जुनो दुर्योधन इत्यादि । ध्वजेषु—गरुडः कपिरित्यादि । राज्ञां ध्वजेषु हि सुवर्णकपिसिंहमकरादयः सन्ति । नापित मुण्डन शाला खरकुटीत्युच्यते । खरकुटीव खरकुटी इत्या-दयोऽत्र द्रष्टव्याः ।

यत्तु गणरत्नमहोदधौ वर्द्धमानेनोक्तम्—"हस्तपुष्पमत्स्यशब्दानामिह गणेऽन्यैः शाब्दिकैः पठितानामपि न युक्तः पाठः । तथाहि हस्ताकारं लोह-काष्ठादिमयमुपकरणं हस्तकः, पुष्पकं धनदविमानं भाजनं वा, मत्स्याकार-श्चर्मविवरादिच्छेदो मत्स्यकः । भोजोऽपि 'न हस्तदण्डपुष्पादिभ्यः' इत्यनेन कप्रत्ययस्य स्थितिमाह" (द्र०—गण० पृ० १२७-१२८) इति, तन्न, हस्त-कादिशब्दानामन्यथासिद्धौ काशिकावृत्त्यादिग्रन्थसम्मतपाठस्यायुक्तत्वकल्पने बीजाभावात् । तथाहि 'देवपथादिभ्यश्च' इत्यनेन प्रतिकृतौ संज्ञाया वा इवार्थे विहितस्यैव कनो लुप् । हस्तकादिशब्देषु तु शूद्रकादिशब्देष्विव प्रागि-वीयः 'संज्ञायां कन्' (अ० ५।३।७५) इतिसूत्रविहितः कन् प्रत्ययः । स च स्वप्रकृत्यर्थस्य प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः संज्ञारूपतयार्थान्तरे वर्त्तते तस्माद् भवति । यथा शूद्रशब्दो जातौ प्रसिद्धः । शूद्रको नाम वीरक्षत्रियः । यथा वा कदम्बस्तरुः । कदम्बकः सङ्घात इत्यादि ॥६२॥ इति देवपथादिः ॥

## [अथ शाखादिः]

'शाखादिभ्यो यः' (अ० ५।३।१०३)। एभ्य इवार्थे यप्रत्ययः स्यादिति तदर्थः। तत्रैकपद्येन शाखादयः संगृह्यन्ते।

शाखास्कन्धमुखाग्राणि मेघाभ्रे शरणोरसी।
शिरोजघनशृङ्गाणि चरणः स्कन्द इत्यपि ॥६३॥

शाखेव शाख्यः। शाखा यथा वृक्षस्य पार्श्वायिता तथा यः कुलस्य पार्श्वायितोऽङ्गभूतः, यद्वा शाखा यथा वृक्षस्य शोभाकारी तथा कुलस्य यः शोभाकरः स पुरुष एवमुच्यते। स्कन्ध इव बलाश्रयः स्कन्ध्यः। मुखमिव प्रधानभूतो मुख्यः। अग्रमिवाग्र्यः। मेघ इव सन्तापशामको मेघ्यः। अभ्रमिवावरकोऽभ्र्यः। शीर्यते भयमस्मादिति शरणं गृहम्, तद्वद् भयापहारकः शरण्यः। उर इवोरस्यः कार्यनिर्वाहकः। शिर इव प्रधानभूतः शीर्षण्यः। 'ये च तद्धिते' (अ० ६।१।६१) इति शिरसः शीर्षन्नादेशः। जघनमिव यो निकृष्टः स जघन्यः। शृङ्गमिव यः सर्वस्याप्युपरि वर्त्तते स शृङ्ग्यः। चरणौ यथा शरीरस्य प्रकर्षकौ एवं यः कुलस्य प्रकर्षकः स चरण्यः। स्कन्द इव यः शत्रुपोषकः स स्कन्द्यः।

यत्तु द्रुरिव द्रव्यमयं राजपुत्रः। यथा द्रुमः फलपुष्पपल्लवादिभिः स्वाश्रितान् कृतार्थयत्येवमर्थिनः स्वसम्पदा कृतार्थयन्नात्मवान् पुरुषो द्रव्यमित्युच्यते। हिरण्यादिकमपि पुरुषार्थसाधकत्वाद् द्रव्यमित्युच्यते' (द्र०— गण० पृ० १३०) इति गणरत्नमहोदधावुदाहृतं तत्तु 'द्रव्यं च भव्ये' (अ० ५।३।१०४) इत्यग्रिमसूत्रस्योदाहरणमिति नात्र गणे द्रुशब्दः पाठ्यः ॥६३॥
इति शाखादिः ॥

## [अथ शर्करादिः]

'शर्करादिभ्योऽण्' (अ० ५।३।१०७)। एभ्य इवार्थेऽण् स्यादिति तदर्थः। तत्रापेक्षिताः शर्करादयः सार्द्धपद्येन संगृह्यन्ते।

शर्करा सिकता लोम पुण्डरीकं कपालिका।
कपाटिका च गोलोमशतपत्रकनिष्ठिकाः।
नकुलश्च नराची च गोपुच्छं शर्करादिषु ॥६४॥

शकरेव शार्करमाम्रं फलं मधुरत्वात्। शर्करेव शार्करी मृत्तिका कठिनत्वात्। शर्कराशब्द इक्षुविकारे सिकतासु च वर्त्तते। सिकतेव सैकती मृत्। लोमेव कोमलस्पर्शं लौमनम्। पौण्डरीकम्। कुत्सितं कपालं कपालिका। कपालिकेव कापालिकं कंसादिपात्रम्। ह्रस्वं कपाटं कपाटिका। तत्तुल्यं कापाटिकम्। गोलोमेव गौलोमनम्। अणि 'अन्' (अ० ६।४।१६७) इति प्रकृतिभावाट्टिलोपो न। शातपत्रम्। कानिष्ठिकम्। नाकुलम्, नरान् अश्नातीति नराचो, तत्तुल्यं नाराचम्। गोपुच्छमिव गौपुच्छं दण्डः ॥६४॥ इति शर्करादिः ॥

[अथ अङ्गुल्यादिः]

'अङ्गुल्यादिभ्यष्ठक्' (अ० ५।३।१०८)। एभ्य इवार्थे ठक् प्रत्ययः स्यादिति तदर्थः। तत्रापेक्षिता अङ्गुल्यादयः संगृह्यन्ते सार्द्धपद्येन।

अङ्गुली शष्कुली रोणी वल्गूरोबभ्रुमण्डलम्।
हरिः कपिरुदश्विच्च कुलिशं च मुनिः खलः।
भरुजो रुरुरङ्गुल्यादिगणे कथिता बुधैः ॥६५॥

अङ्गुलिरिव दीर्घायत आङ्गुलिकाः, आङ्गुलिकी मणिशलाका। शष्कुलीव शाष्कुलिकः। रौणिकः, वाल्गुकः, औरसिकः, बाभ्रुकः, माण्डलिकः। हारिकः, कापिकः, औदश्वित्कः, कौलिशिकः, मौनिकः, खालिकः। भरुज इव भारुजिकः, रौरुकः ॥६५॥ इति अङ्गुल्यादिः ॥

[अथ दामन्यादिः]

'दामन्यादित्रिगर्त्तषष्ठाच्छः' (अ० ५।३।११६)। दामन्यादिभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यादिति तदर्थः। तत्रापेक्षिता दामन्यादयः संगृह्यन्ते पद्यद्वयेन।

दामनिवैन्दवितुलभाः शात्रुन्तपिसार्वसेनिकाकन्दि।
सावित्रीपुत्रौडविमौञ्जायनकाकदन्तकयः ॥६६॥

दामनीयः शस्त्रजीविसङ्घः। दामनीयौ। बहुत्वविवक्षायां त्वस्य तद्राजत्वाल्लुक्, दामनयः। एवं सर्वत्र ज्ञेयम्। वैन्दवीयः, वैन्दवीयौ, तुलभीयः तुलभीयौ इत्याद्युदाहार्यम्। [शात्रुन्तपीयः, सार्वसेनीयः काकन्दीयः। सावित्रीपुत्रीयः, औडवीयः, मौञ्जायनीयः, काकदन्तकीयः।] अत्र पद्ये

सावित्रीपुत्र मौञ्जायनेति द्वावदन्तौ शेषास्त्वञन्ताः । काकदन्तकिशब्दस्थाने काकवञ्चकीति केचित् पठन्ति ॥६६॥

औलपिराच्युतदन्तिः शाकुन्तकिराच्युतन्तिरौन्दकिः ।
ज्ञेयश्च वैजवापिर्बिन्दुश्चात्राकिदन्तिरौदकिना ॥६७॥

औलपीयः, औलपीयौ । [आच्युतदन्तीयः, शाकुन्तकीयः, आच्युतन्तीयः, औन्दकीयः । वैजवापीयः ।] बिन्दवीयः, बिन्दवीयौ । आकिदन्तीयः, आकिदन्तीयौ । औदकीयः, औदकीयौ । अत्र बिन्दुशब्दं वर्जयित्वा सर्वेऽपीञन्ताः ॥६७॥ इति दामन्यादिः ॥

[अथ पर्श्वादिः, यौधेयादिः]

'पर्श्वादियौधेयादिभ्यामणञौ' (अ० ५।३।११७) । आयुधजीविसङ्घवाचिभ्यो गणद्वयस्थशब्देभ्यः क्रमादणञौ स्तः स्वार्थ इति तदर्थः । तत्रापेक्षितं गणद्वयं पद्यद्वयेन संगृह्यते ।

पर्श्वसुराशनिवसवः सत्वद्रक्षःपिशाचदाशार्हाः ।
वाल्हीकवयोमरुतः कार्षापणमिति मतोऽस्ति पर्श्वादिः ॥६८॥

पार्शवः, पार्शवौ । अनयोरणञोः 'ञ्यादयस्तद्राजाः' (अ० ५।३।११९) इत्यनेन तद्राजत्वाद् बहुत्वे लुक्—पर्शवः । एवमग्रेऽपि । आसुरः, आसुरौ, असुराः । आशनः, आशनौ, अशनयः । वासवः, वासवौ, वसवः । सात्वतः, सात्वतौ, सत्वतः । राक्षसः, राक्षसौ, रक्षसः । [पैशाचः, दाशार्हः । वाल्हीकः,] वायसः, वायसौ, वयसः । मारुतः, मारुतौ, मरुतः । शिष्टमुदाहार्यम् । [कार्षापणः] ।।६८।। इति पर्श्वादिः ॥

यौधेयो धौर्त्रेयो धार्त्तेयज्यावरणेयकौशेयाः ।
शौक्तेयः शौभ्रेयत्रिगर्त्तभरता उशीनरोऽत्र गणे ॥६९॥

यौधेयः, यौधेयौ, यौधेयाः । [धौर्त्तेयः, धार्त्तेयः, ज्यावरणेयः, कौशेयः । शौक्तेयः, शौभ्रेयः,] त्रैगर्त्तः, त्रैगर्त्तौ, त्रिगर्त्ताः । भारतः, भारतौ, भरताः । औशीनरः औशीनरौ, उशीनराः ।।६९।। इति यौधेयादिः ॥

[अथ स्थूलादिः]

'स्थूलादिभ्यः प्रकारवचने कन्' (अ० ५।४।३) । स्थूल इत्येवमादिभ्यः

कन् प्रत्ययः स्यात् प्रकारवचने द्योत्य इति तदर्थः। तत्रापेक्षिताः स्थूलादिशब्दाः संगृह्यन्ते पद्यत्रयेण।

**स्थूलाणुमाषेषुतिलेक्षुशब्दाः कनं लभन्तेऽथ तिलेषु कृष्णः।**
**तथा यवो व्रीहिषु पाद्यकालावदातशब्दास्तु कनं सुरायाम् ॥७०॥**

स्थूलप्रकारः स्थूलकः पटः। प्रकारः सादृश्यमिति बहुसम्मतम्। सामान्यस्य भेदको विशेषः प्रकार इति केषाञ्चिद् अभिनिवेशः। तथा च स्थूल इत्यस्य स्थूलसदृश इति स्थूलसामान्यस्यायं भेदक इति वार्थः। अणुः प्रकारोऽस्य अणुकः पटः। सूक्ष्म इत्यर्थः। द्व्यणुकादिपदार्थो गवाक्षाद्यन्तरप्रविष्टरविकिरणप्रकाशितः त्रसरेणुर्वेति अन्ये। माषः प्रकारोऽस्य माषकं हिरण्यम्। इषुः प्रकारोऽस्या इषुका गोलिका। तिलप्रकारस्तिलको भालभूषणं वृक्षविशेषश्च। इक्षुः प्रकार इक्षुक एरण्डः। कृष्णशब्दः कनं लभते तिलेषु वाच्येषु तथा यवो व्रीहिषु। कृष्णप्रकाराः कृष्णकास्तिलाः। यवप्रकारा यवका व्रीहयः। पाद्यादयः सुरायां वाच्यायां कनं लभन्ते। पादार्थमुदकं पाद्यं तत्प्रकारा पाद्यिका सुरा। यथा प्रियातिथेः सत्काराय पाद्यं प्रदीयते तथा कदाचित् केनचित् सुरापि। ततः सा पाद्यसदृशो पाद्यिकाशब्देन व्यपदिश्यते। गणरत्नमहोदधौ तु 'वाटचकालावदातास्तु सुरायामुचितास्त्रयः' (द्र० — गण० पृ० १२४) इति पठित्वा वाटशब्देन विशिष्टं भाजनमुच्यते। तत्र साधुर्वाटचो द्रवद्रव्यविशेषः। तत्प्रकारा वाटिचका सुरा भाजनपातिनी वर्णोत्कर्षवत्तात्युक्तम्। कालः श्यामलः प्रकारोऽस्या इति कालिका। अवदातो धवलः प्रकारोऽस्या इत्यवदातिका सुरैव ॥७०॥

**अहौ सुरा पत्रमूलं समस्तं व्यस्तं कुमारी श्वशुरो मणिश्च।**
**गोमूत्रमाच्छादनके कुमारीपुत्रोऽथ शालिष्वपि जीर्णशब्दः ॥७१॥**

सुराप्रकारः सुरावर्णोऽहिः सुरकः। पत्रमूलप्रकारः पत्रमूलकः। पत्रप्रकारः पत्रकः तमालपत्रं लिखितभूर्जपत्रखण्डं वा। मूलप्रकारो मूलकः शाकप्रभेदः। कुमारीश्वशुरप्रकारः कुमारीश्वशुरकः। यस्य पुत्रः कुमार्याः संगतः स यथा शिष्टसभां प्रवेष्टुं लज्जते तथा यो लज्जमानः स एवं व्यपदिश्यते। मणिप्रकारो मणिकः। यो रत्नभूतः प्रधानं मनोज्ञश्च स एवमुच्यते। गोमूत्रप्रकारमाच्छादनं गोमूत्रिका गोमूत्रवर्णा शाटी। कुमारीपुत्रः प्रकारोऽस्य कुमारीपुत्रकः। यथा कुमारीपुत्रः सभां प्रविशन् जिह्रेति तथाऽन्योऽपि लज्जमान एवमुच्यते। जीर्णप्रकारा जीर्णकाः शालयः ॥७१॥

**चञ्चद् वृहतोरुपसंख्यानं वार्त्तिककृतात्र कृतम् ।**
**आकृतिगणोऽयमिति गणरत्नमहोदधिकृतः प्राहुः ॥७२॥**

चञ्चतीति चञ्चन् गत्वरः । चञ्चत्प्रकारोऽस्य चञ्चत्को मण्डूकः, खद्योतः, मणिर्वा । मण्डूकस्तावत् श्वासप्रतिबन्धेन प्लवमानो गत्वर इवेत्युपमीयते । खद्योतोऽप्युन्मेषनिमेषाभ्यां चञ्चन्निव भवति । मणिस्तु स्पन्दमानप्रभवत्वात् तथोत्प्रेक्ष्यते । बृहता सदृशो बृहत्कः । अल्पोऽपि प्रविकाशिप्रभवत्वाद् यो महानिवोपलक्ष्यते तत्र मणौ बृहत्कशब्दो लोके प्रयुज्यते । तथा चोक्तं गणरत्नमहोदधौ—

'चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे ।
मणिमण्डूकखद्योतान सादृश्येन् प्रचक्षते ॥
तत्रोन्मेषनिमेषाभ्यां खद्योत उपमीयते ।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः ॥
प्रविकाशिप्रभोऽल्पोऽपि महान् य उपलभ्यते ।
बृहत्क इति तत्रैव मणौ शब्दः प्रयुज्यते ॥' (गण० पृ० १२४)

इति । यत्तु 'एरण्डमधु कुमार्याः पुत्रः श्वशुरश्च संज्ञायाम्' (द्र० गण० पृ० १२५) इति पठित्वा वर्द्धमानेनोक्तम्— 'एरण्डक इक्षुविशेषः । मधुकं नालिकेरासवम् । संज्ञायामिति गणसूत्रम् । तस्यायमर्थः—स्वप्रकृत्यर्थस्य प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः संज्ञारूपतयाऽर्थान्तरे वर्त्तते तस्यानेन कप्रत्ययः । तथाहि—फलमामलकादि फलकं तु काष्ठादिमयम् । शूद्रशब्दो जातौ प्रसिद्धः । शूद्रको नाम वीरः क्षत्रियः । सन्तानः समानजातीयः प्रवाहः । सन्तानकः सुरतरुः । कुरवः कुत्सितो ध्वनिः । कुरवकस्तरुविशेषः । कुब्जं वक्रकाष्ठादिवस्तु । कुब्जकस्तरुविशेषः । कदम्बस्तरुः । कदम्बकं सङ्घातः । भ्रमरो मिलिन्दः । भ्रमरकः क्रीडोपकरणम् । करभः क्रमेलकः । करभको धनुष्कोटिगृहैकदेशो वा । नेत्रमक्षि । नेत्रकं मन्थनाकर्षकम् । जम्बूस्तरुविशेषः । जम्बूकः सृगालः । कुम्भो घटः । कुम्भिका स्तम्भोपधानी ।' (द्र०—गण० पृ० १२५-१२६) इत्यादि, तदेतत्सर्वं स्वार्थिककप्रत्ययाधिकारपठितस्य 'संज्ञायां च' (अ० ५।३।९७) इति पाणिनीयसूत्रसिद्धस्योदाहरणप्रपञ्चस्यानुवाद एवेति मत्वा पाणिनीयाः काशिकाकारादयो नात्र गणे पठन्ति ॥७२॥ इति स्थूलादिः ॥

## [अथ यावादिः]

'यावादिभ्यः कन्' (अ० ५।४।२९) । याव इत्येवमादिभ्यः प्रातिपदि-

केभ्यः कन् प्रत्ययः स्यात् स्वार्थं इति तदर्थः। तत्रापेक्षिता यावादयः संगृह्यन्ते सार्द्धपद्यद्वयेन।

यावमणिजानुलान्द्रज्ञाताज्ञातास्थितालुपीतानि ।
क्रीडनकानि कुमार्याः स्तम्बो रिक्ते तु शून्यमीयश्च ॥७३॥

यवानां विकारो यावः, याव एव यावकः। स्तोकपक्वा यवा यावकशब्देन व्यवह्रियन्ते। अलक्तकरसो यावक इति अन्ये। मणिरेव मणिकः। जान्वेव जानुकम्। लान्द्रमेव लान्द्रकं विरसजलम्। ज्ञात एव ज्ञातकः। अज्ञात एवाज्ञातकः। अस्थि एवास्थिकम्। ताल्वेव तालुकम्। पीत एव पीतकः पटादिः।

कुमार्या बालायाः क्रीडनकानि क्रीडोपकरणवाचकानि प्रातिपदिकान्यत्र गणे बोध्यानीत्यर्थः। यथा—शालभञ्ज्येव शालभञ्जिका। एवं कन्दुकः, भ्रमरकः, गिरिकम्, शृङ्गकम्। एवं स्तम्बकः शाल्यादिकलापः। पृषोदरादित्वादनुस्वारलोपे स्तबकोऽपि स एव। शून्यमेव शून्यकं रिक्तं चेत्। अन्यत्र तु शुने हितं शून्यमित्येव। अत्रैव निपातनात् सम्प्रसारणादि। ईयसिति मुक्तानुबन्धकस्येयसुन्प्रत्ययस्य निर्देशः। ततस्तदन्ताः शब्दा अत्र वेदितव्याः। यथा—श्रेयानेव श्रेयस्कः, ज्यायानेव ज्यायस्कः, भूयानेव भूयस्कः। विशेष्यलिङ्गा इमे ॥७३॥

दानस्नातौ कुत्सितवेदसमाप्त्योरणुर्मतो निपुणे।
लूनवियातौ तु पशौ शीतोष्णमृतौ च कृत्रिमे पुत्रः।
सूत्रे तनुरिति कथितो यावादिगणो बुधश्रेष्ठैः ॥७४॥

कुत्सितं दानं प्रेतशय्यादि यत्तद्दानकम्। दानमन्यत्। स्नात एव स्नातकः। वेदान्, व्रतानि, उभयं वा समाप्य यः समावर्त्तते स एवं व्यपदिश्यते। तथा च स्मृतिः—

'गुरवे तु वरं दत्वा स्नायाद्वा तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वाह्युभयमेव वा ॥' (याज्ञवल्क्य० १।५१)

अणुरेव अणुको निपुणः। लून एव लूनकः पशुः। वियातकः पशुरेव। अन्यत्र लूनो यवः, वियातो वटुः। शीतकः, उष्णक ऋतुर्हेमन्तो ग्रीष्मश्च। अन्यत्र शीतो वायुः, उष्ण ओदनः। कृत्रिमः पुत्रः पुत्रकः। अन्यः पुत्र एव। तनु सूत्रं तनुकम्। अन्यत्र तनुर्वत्सः कृश इत्यर्थः। तथाहि कवयः प्रयुञ्जते—

'वृते वियातकेणानुग्रहणाणकबुद्धिभिः ।
तनुकापीतकब्रह्मसूत्रै राजर्षिसूनुभिः ॥
गोमूत्रयावकाहारोदस्थिकोज्जानुकद्विजे ।
क्ष्मापतिः क्षौणिमाणिवये स वसिष्ठाश्रमेऽगमत् ॥
लूनकाविकलोमोत्थान् श्रेयस्कान् कन्दुकान् करे ।
कुचान् हृदि वहन्तीभिः स कुमारीभिराकुलः ॥'
(द्र०-गण० पृ० १२८) इति ।

आकृतिगणोऽयम् । तेन पिष्टातकादयोऽप्यत्र द्रष्टव्या इति वर्द्धमानसूरिराह (गण०पृ०१३०)। पिष्टातः सुगन्धिचूर्णं स एव पिष्टातकः। एवं पूल एव पूलको बद्धस्तृणादिसंङ्घातः। पिटो वंशदलादिमयं भाजनं स एव पिटकः। भृत[एव]भृतकः कर्मकरः। भिक्षुरेव भिक्षुक इत्यादि ज्ञेयम् ॥७४॥ इति यावादिः ॥

[अथ विनयादिः]

'विनयादिभ्यष्ठक्' (अ० ५।४।३४) । विनयादिभ्यः शब्देभ्यः स्वार्थे ठक् प्रत्ययो भवतीति तदर्थः। तत्रापेक्षिता विनयादयः शब्दाः संगृह्यन्ते पद्यद्वयेन ।

विनयविशेषसमूहाः समयात्ययसम्प्रदानसम्प्रतयः ।
व्यवहारसमुत्कर्षाऽकस्मादुपचारसङ्गतयः ॥७५॥

विनय एव वैनयिकः। विशेष एव वैशेषिकः। समूह एव सामूहिकः। समय एव सामयिक इत्यादि। [आत्ययिकः, साम्प्रदानिकः, साम्प्रतिकः। व्यावहारिकः, सामुत्कर्षिकः, आकस्मिकः, औपचारिकः, साङ्गतिकः] ॥७५॥

ह्रस्वत्ववानुपायः समयाचारस्तथा समाचारः ।
अत्र गणे विज्ञेयं कथञ्चिदिति शाब्दिकधुरीणैः ॥७६॥

ह्रस्वत्ववानुपाय इत्यस्य उपायशब्दोऽत्र वृत्तिविषय उपयेत्यानुपूर्वीको भवतीत्यर्थः। उपाय एव औपयिकः। [सामयाचारिकः, सामाचारिकः। काथञ्चित्कम्।] अत्र केचिदुदाह्रियन्ते —

'सामयाचारिकैरौपयिकैर्द्राक्साम्प्रदानिकैः ।
नश्यन्ति पाप्मनां सामूहिका आत्ययिका अपि ॥

अनौपचारिकैः सामाचारिकैर्व्यावहारिकैः ।
यान्ति वैशेषिकैः सामुत्कर्षिकं सत्सु साधवः ।।'

(द्र०-गण० पृ० १३२)

एवमन्येऽप्युदाहार्याः ।।७६।। इति विनयादिः ।।

[अथ प्रज्ञादिः]

'प्रज्ञादिभ्यश्च' (अ० ५।४।३८) । प्रज्ञादिभ्योऽण् प्रत्ययो भवति स्वार्थं इति तदर्थः । तत्रापेक्षिताः प्रज्ञादिशब्दाः पद्यद्वयेन संगृह्यन्ते ।

प्रज्ञोष्णिङ्मरुतः पिशाचवणिजौ रक्षोदशार्हौशिजः ।
प्रत्यक्षासुरशत्रुयोधवसवः श्रोत्रं शरीरे यदि ।
कृष्णश्चेद्धरिणे चिकीर्षदशनी षोडन् विदन् देवता ।
विद्याव्याकृतचोरबन्धव इह प्रोक्ते मनश्चक्षुषी ।।७७।।

प्रकृष्टं जानातीति प्रज्ञः पुमान्, तथाविधा स्त्री प्रज्ञा । प्रज्ञ एव प्राज्ञः पण्डितः । स्त्रियान्तु अण्णन्तत्वात् ङीप् प्राज्ञी । अथ कथं प्राज्ञा स्त्रीति ? बुद्धिपर्यायप्रज्ञाशब्दात् 'प्रज्ञाश्रद्धा' (अ० ५।२।१०१) इत्यादिना णप्रत्यये सति सिद्धयतीति गृहाण । धीमतीति तदर्थः । उष्णिगेव औष्णिहं छन्दः । क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते । मरुदेव मारुतो वायुः । पिशाच एव पैशाचः । वणिगेव वाणिजः । रक्ष एव राक्षसः । दश नामान्यर्हतीति दशार्हो विष्णुः स एव दाशार्हः । उशिक् कमनीयः स एव औशिजः । प्रत्यक्षमेव प्रात्यक्षम् । असुर एव आसुरः । शत्रुरेव शात्रवः । योधः सुभटः स एव यौधः । वसुरेव वासवः सुरपतिः । श्रोत्रशब्दो यदि शरीरे वर्त्तते तदा प्रज्ञादिः । श्रौत्रं श्रवणम् ।

कृष्णः कृष्णसारः स एव कार्ष्णो हरिणः । अन्यस्तु कृष्ण एव । चिकीर्षन्नेव चैकीर्षतः । अशनिरेव आशनं कुलिशम् । षड् दन्ता अस्येति षोडन् वत्सतरः, स एव षौडतः । विदन् विद्वान् स एव वैदतः । देवतैव दैवतम् । विद्यैव वैद्यम् । क्लीबमेव स्वार्थिकानां लिङ्गव्यत्ययस्य दृष्टचरत्वात् । विद्यासम्बन्धात् पुरुषोऽपि विद्या स एव वैद्य इति केचित् । व्याकृतमेव वैयाकृतम् । चोर एव चौरः । बन्धुरेव बान्धवः । स्त्रियामणन्तं न प्रयोज्यमनभिधानात् । केवला प्रकृतिस्तु तत्र वर्त्तत एव । यथा बन्धुरियं ब्राह्मणीति । मन एव मानसम् । चक्षुरेव चाक्षुषम् ।।७७।।

**वयःकार्षापणक्रुञ्च एनः सत्वन्तुजुह्वतौ ।**
**अत्राकृतिगणेऽन्येऽपि ज्ञेया लक्ष्यानुसारतः ॥७८॥**

वय एव वायसः काकः । वयःशब्दः सामान्येन पक्षिवाचकोऽप्यत्र विशेषे वर्तते शब्दशक्तिस्वाभाव्यात् । एवं वसुशब्दोपि द्रष्टव्यः । कर्षापण एव कार्षापणः पणकविशेषः । यथाह मनुः—'कार्षापणस्तु विज्ञेयस्ताम्रिकः । कार्षिकः पणः' (मनु० ८।१३६) इति । क्रुङ् एव क्रौञ्चः पक्षिविशेषः पर्वतप्रभेदो वा । [ऐनसः ।] सत्वन्तुरेव सात्वन्तवः कश्चिद्राजर्षिः । जुहोतीति जुह्वद्धोता स एव जौह्वतः ।

आकृतिगणोऽयम् । तेन विद्वानेव वैदुषः[1] । चरित्रमेव चारित्रं सद्वृत्तम् । साधारणैव साधारणी भूमिः । अनुष्टुबेव आनुष्टुभं छन्दः । एवं गायत्रं जागतमित्यादि । केचिद् अनुष्टुभादीनां छन्दोनाम्नां पुंल्लिङ्गता-माहुः । 'अष्टाक्षरा वै गायत्री' (ऐत० ३।१२) 'गायत्रमग्नेश्छन्दः' (ऐत० १।१) इत्यैतरेयब्राह्मणादौ क्लीबत्वं तु श्रूयते । द्वयोर्भावो द्विता सैव द्वैतम् । जेत्रेव जैत्रं धनुः । विकृतिरेव वैकृतम् ।

'पच्छो वैयाकृतैः सूक्तैर्जागतानुष्टुभौष्णिहैः ।
राक्षसासुरपैशाचवैकृतानि भवन्ति नो ।' (द्र० गण०पृ० ११६)

इत्यादि लक्ष्यानुसारतो ज्ञेयम् ॥७८॥ इति प्रज्ञादिः ॥

## [अथ शरदादिः]

'अव्ययीभावे शरत्प्रभृतिभ्यः' (अ० ५।४।१०७) । शरत् इत्येवमाद्य-न्तादव्ययीभावसमासाट्टच्प्रत्ययो भवतीति तदर्थः । तत्रापेक्षिताः शरदादि-शब्दाः संगृह्यन्ते सार्द्धपद्येन ।

**शरद्विपाशौ प्रतिसम्परानुतोऽक्षि यज्जरायाश्च जरोऽनडुत्तदौ ।**
**दिक्पथ्युपानच्चतुरः सदोहिरुग्दृशो मनो विद्धिमनःतिक्रयत्त्यदः ।**
**अनस्तथा द्यौर्विडिति स्मृतो बुधैर्महानुभावैः शरदादिको गणः ॥७९॥**

शरदः समीपमुपशरदम् । विपाशा नद्याः समीपमुपविपाशम् । अक्षि अक्षि प्रत्यक्षम् । वीप्सायामव्ययीभावः । अक्ष्णः समीपं समक्षम् । अक्ष्णः परं परोक्षम् । पश्चादर्थेऽव्ययीभावः । परेति पश्चादर्थकमव्ययम् । 'परोक्षे

---

1. 'वैद्वसः' इत्युपलभ्यते हस्तलेखे ।

लिट्' (अ० ३।२।११५) इति निपातनात् परस्यौकारोऽन्तादेशः । प्रत्यक्षो घटः, परोक्षा क्रिया इत्यादि तु अर्शआद्यचि बोध्यम् । अन्वक्षम् । अक्ष्णः समीपमित्यर्थः । यं य प्रतीति प्रतिपदम् । जरायाश्च जरस् इति जराशब्दस्य शरदादौ पाठो जरसादेशश्च टच्सन्नियोगेनेति तदर्थः । अनुजरसं ब्रह्मचिन्तनम् । जराया योग्यमित्यर्थः । अनडुहीति अध्यनडुहम् । तस्य समीपमुपतदम् ।

प्रतिदिशम् । प्रतिपथम् । 'ऋक्पूरब्धूःपथामानक्षे' (अ० ५।४।७४) इत्येव सिद्धेऽत्रास्य पाठः चित्स्वरार्थः । प्रत्युपानहम् । उपचतुरम् । सदसीत्यधिसदसम् । हिरुगित्यनतिक्रम्य यथाहिरुकम् । दृशो योग्यमनुदृशम् । यथामनसम् । वेदनं विद्, तामनतिक्रम्य यथाविदम् । अनुहिमवतम् । कियतामत्ययोऽतिकियतम् । उपत्यदम् । उपानसम् । शकटस्य समीप इत्यर्थः । दिवीत्यधिदिवम् । प्रतिविशम् ॥७९॥ इति शरदादिः ॥

[अथ द्विदण्ड्यादिः]

'द्विदण्ड्यादिभ्यश्च' (अ० ५।४।१२८) । द्विदण्डीत्येवमादिशब्दानां सिद्ध्यर्थं समासान्त इच्प्रत्ययो भवतीति तदर्थः । तत्रापेक्षिता द्विदण्ड्यादयः शब्दाः संगृह्यन्ते पद्यद्वयेन ।

ज्ञेयौ द्विदण्डिसंहतपुच्छी द्विमुसलिनिकुच्यकर्णौ च ।
आच्यपदिप्रोह्यपदी अन्तेवास्येकपदिसपदी ॥८०॥

द्वौ दण्डौ अस्मिन् प्रहरणे यथा स्यात् तथा द्विदण्डि प्रहरति । एवं द्विमुसलि । समुदायस्य निपातनाच्छब्दशक्तिस्वभावाच्चार्थविशेष एवैते वर्त्तन्ते । तेन द्विदण्डा शालेत्यादौ न समासान्त इच्प्रत्ययः । संहतानि पुच्छान्यत्रेति संहतपुच्छि धावति । एषु 'अनेकमन्यपदार्थे' (अ० २।२।२४) इत्यनेन बहुव्रीहिः । कर्णौ निकुच्य संकुचितौ कृत्वेति निकुच्यकर्णि धावति । अत्र मयूरव्यंसकादित्वात् तत्पुरुषः । एवमग्रेऽपि बोध्यम् ।

आच्य प्रसार्य पादावित्याच्यपदि शेते । प्रोह्य प्रेर्य पादौ प्रोह्यपदि हस्तिनं वाहयति । अन्ते वासोऽस्मिन् कर्मणीत्यन्तेवासि तिष्ठति । शिष्यवाच्यन्तेवासिशब्दस्तु अन्ते गुरोः समीपे वसतीत्येवं शील इत्यर्थको णिनिप्रत्ययान्तोऽस्माद् भिन्न एव । एकः पादोऽस्मिन् गमने एकपदि, समानौ पादावस्मिन् सपदि गच्छति ॥८०॥

**आदन्तोभोभयतः परत्र पाणिश्च हस्तिदन्तौ च ।**
**अञ्जलिरिच्प्रत्ययभाग् बाहुः कर्णोऽपि चात्र गणे ॥८१॥**

आदन्तौ यौ उभोभयशब्दौ ततः परत्र प्रयुज्यमानाः पाण्यादय इच्-प्रत्ययं भजन्तीत्यर्थः । गणे तथा निपातनादेवादन्तत्वम् । उभौ पाणी अस्यां क्रियायामिति उभापाणि उभयापाणि वा खादति बुभुक्षितः । उभौ हस्तिनौ यत्र संग्रामविधाने उभाहस्ति उभयाहस्ति वा संग्रामं विधत्ते । उभौ दन्तौ अत्रेति उभादन्ति उभयादन्ति वा दशति । उभावञ्जली यत्रेति उभाञ्जलि उभयाञ्जलि वा पिबति पिपासाकुलः । उभौ बाहू यत्र प्रहरणे उभाबाहु उभयाबाहु वा प्रहरति । अत्र निपातनादिचो लुक् प्रत्ययलक्षणेन चाव्यय-त्वसिद्धिः । उभौ कर्णौ यत्रेति उभाकर्णि उभयाकर्णि वा शृणोति ।

द्वौ दण्डौ यस्मिन् संग्रामे, उभौ कर्णौ अस्य प्रासादस्येत्यादौ द्विदण्डि युद्धम् उभाकर्णि प्रासाद इति क्रियाभिन्नान्यपदार्थेऽपि द्विदण्डयादिशब्दान् केचित् प्रवदन्ति । **वामनादयो** नैवं मन्यन्त इत्युक्तं प्राक् ॥८१॥ इति **द्विदण्डयादिः** ।

## [अथ हस्त्यादिः]

**'पादस्य लोपोऽहस्त्यादिभ्यः'** (अ० ५।४।१३८) इति सूत्रम् । हस्त्यादि-वर्जितादुपमानात् परो यः पादशब्दस्तदन्तस्य बहुव्रीहेर्लोपः स्यादिति तदर्थः । तत्र प्रत्युदाहरणार्थमपेक्षिता हस्त्यादयः शब्दाः पद्यद्वयेन संगृह्यन्ते ।

**हस्त्यश्वकण्डोलकुसूलदासीगण्डोलकं गण्डकटोलकौ च ।**
**गण्डोलजाले कुशिकौ महेला कपोतकण्डोलकमप्यजोऽत्र ॥८२॥**

हस्तिनः पादाविव पादावस्यासौ हस्तिपादः । रोगजमेदोवृद्धया विकृतपाद एवमुच्यते । तथा अश्वपादोऽपि रोगादिना विकृतपाद एव । वंशादिशलाकानिर्मितकरण्डकादिपात्रं कण्डोलः । तदाकारौ पादौ यस्य स कण्डोलपादः । कुसूलं धान्यनिवेशनकुम्भीविशेषः । तत्सदृशः पादः कुसूल-पादः । दास्या इव कठोरस्पर्शौ पादावस्या सा दासीपादी । गण्डोलको जम्बु-विशेषः । तदाकारपादो गण्डोलकपादः । कपोलपर्यायो वदनैकदेशो गण्डः । तत्सदृशौ मृदुलोन्नतौ पादौ यस्य स गण्डपादः । कटोलकं वनौषधिविशेषः । तत्सदृशपादः कटोलकपादः ।

गण्डोलो गण्डोलकपर्यायः । [गण्डोलपादः ।]जालपादो हंसपक्षिप्रभेदः ।

तथा च 'जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान्' (याज्ञवल्क्य० १।१७४) इति याज्ञवल्क्यवचने 'जालपादा जालाकारपादाः, अजालपादा अपि हंसाः सन्तीति पृथक् तेषां ग्रहणम्' इति विज्ञानेश्वरो व्याचख्यौ। 'कुशिको मुनिसर्ज्जयोः' (मेदिन्यां कत्रिके—७०) इति मेदिनी। सर्जो वृक्षविशेषः। तदाकारपादः कुशिकपादः। महेलाया वनिताया इव मृदुलौ पादावस्य स महेलापादः। कपोतपक्षिसदृशपादः कपोतपादः। कण्डोल एव कण्डोलकः। [कण्डोलकपादः।] अजो मेषः। [अजपादः]।।८२।।

एवं कुद्दालकुरुतकटोलगणिकास्तथा।
कण्टोलकश्च कण्टोल इति हस्त्यादिको गणः ॥८३॥

कुद्दालः खनित्रं वृक्षविशेषो वा। तदाकारपादः कुद्दालपादः। कुरुतः करटः। कटोलो वृक्षविशेषः। गणिका यूथिका करेणुर्वा। कण्टोलकण्टालकशब्दौ चाण्डालपर्यायौ इत्यमरकोशे कण्टोत्त्वीणापदव्याख्याने रामाश्रमः ॥८३॥ इति हस्त्यादिः।।

[अथ कुम्भपद्यादिः]

'कुम्भपदीषु च' (अ० ५।४।१३९)। कुम्भपदीत्येवमादिषु बहुव्रीहिषु पादस्य लोपः स्त्रियां ङीप् च निपात्यत इति तदर्थः। तत्र सर्वत्र कुम्भपद्यादिशब्देषु पादशब्द एवोत्तरपदं प्रयुज्यते तच्च सुप्रसिद्धमेवेति पूर्वपदान्येवैकेन पद्येन संगृह्यन्ते।

कुम्भैकजालमुनिशूलसकृच्छितिद्विस्थूणाः
शतं कुणिगुणाष्टशुचिद्रुदास्यः।
गोधात्रिनिर्विकलशीषप आर्द्रकृष्णौ
द्रोणीसुसूकरनजोऽपि च विष्णुसूच्यौ ॥८४॥

कुम्भाविव पादौ यस्याः सा कुम्भपदी। एकः पादोऽस्यामित्येकपदी पद्धतिः। जालपदी। जालाकारपादवती हंसी हस्त्यादिगण उक्तमेतत्। मुनेरिव पूज्यौ पादौ यस्याः सा मुनिपदी महर्षिपत्नी। शूलवद् विद्वारकाः पादा अस्याः सा शूलपदी ओषधिविशेषः। सकृत्पादावस्याः सकृत्पदी। शिती श्यामौ पादावस्याः शितिपदी। द्वौ पादावस्या द्विपदीच्छन्दोजातिविशेषः। स्थूणा गृहस्तम्भः। तद्वत्पादावस्याः सा स्थूणापदी। शतं पादा मूलान्यस्याः शतपदी ओषधिविशेषो जन्तुविशेषो वा। कुणिर्वृक्षविशेषः।

तत्सदृशौ पादावस्याः सा कुणिपदी। रज्जुसदृशाङ्घ्रिः स्त्री गुणदी शोभनाङ्घ्रिर्त्रा। अष्टौ पादावस्या अष्टपदी चन्द्रमल्लिका। शुची पवित्रौ पादावस्याः शुचिपदी। द्रुरिव पादावस्याः सा द्रुपदी। दास्या इव पादौ यस्याः सा दासीपदी।

गोधापदीव औषधिविशेषः। त्रयः पादा अस्याः त्रिपदी श्रृङ्खला। यथा—'नालसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि।' अन्यत्र त्रिपादी इत्येव। निष्पदी, विपदी, कलशीपदी। षट्पदी छन्दोजातिविशेषः। आर्द्रौ क्लिन्नौ पादावस्या आर्द्रपदी। कृष्णपदी=श्यामपादी। द्रोणीपदी ओषधिविशेषः। सुपदी शोभनाङ्घ्रिः। सूकरस्येव पादावस्याः सूकरपदी। अविद्यमानौ पादावस्या अपदी। विष्णोः पाद इव पादोऽस्या इति विष्णुपदी भागीरथी। पादशब्दोऽत्र भावे घञन्तो गतिपर्यायः। यथा विष्णुस्त्रिविक्रमः तथेयमपि त्रिपथगेति तात्पर्यम्। सूचीपदी जन्तुविशेषः।

कुम्भपद्यादिशब्दानां प्रवृत्तिनिमित्तविरहेऽपि स्वाभिधेये प्रवृत्तिः शतपुष्पादिशब्दवद् रूढित एव भवति। यथा श्रृङ्खलायां पादत्रयसमवायाभावेऽपि त्रिपदीशब्दः प्रवर्त्तते ॥८४॥ इति कुम्भपद्यादिः ॥

[अथ उरःप्रभृतिः]

'उरःप्रभृतिभ्यः कप्' (अ० ५।४।१५१)। उरस् इत्येवमादिशब्दान्ताद् बहुव्रीहेः कप् स्यादिति तदर्थः। तत्रापेक्षिता उरःप्रभृतयः एकेन पद्येन संगृह्यन्त उरसित्यादिना—

उरः सर्पिर्मधूपानद्दधिशालि पुमान् पयः।
नौरनड्वांस्तथा लक्ष्मीरर्थशब्दो नञः परः ॥८५॥

व्यूढं विशालमुरो यस्य स व्यूढोरस्कः। प्रियसर्पिष्कः। लीढमधुकः। अवमुक्ते उपानहौ येनेत्यवमुक्तोपानत्कः। प्रियदधिकः। सम्पन्नशालिकः। पण्डितः पुमान् यस्याः सा पण्डितपुंस्का ब्राह्मणी। पीतं पयो येन स पीतपयस्को वत्सः। दृढा नौर्यस्यासौ दृढनौकः सांयात्रिकः। नीलोऽनड्वान् यस्य स नीलानडुत्कः। प्रिया लक्ष्मीर्यस्य स प्रियलक्ष्मीकः। न विद्यतेऽर्थः प्रयोजनं यस्येत्यनर्थकः खलस्नेहः। नञः पर इति किम्? व्यर्थः, व्यर्थकः।

इह पुमान्, पयः, नौः, अनड्वान्, लक्ष्मीरित्येकवचनान्तानि पठ्यन्ते तेभ्यो द्विवचनबहुवचनान्तत्वेन समासेऽनुप्रविष्टेभ्यः 'शेषाद् विभाषा' (अ०

५।४।१५४) इति वैकल्पिकः कप्। यथा—द्वौ पुमांसौ यत्रेति द्विपुमान् द्विपुंस्को वा रथ इत्यादि। इतरेभ्यस्तु सर्वदाऽनेन नित्यं कप्।

अथ कथं 'प्रथमं पीतमधवः पिबन्ति कटुभेषजम्' इति, 'प्रियदध्ना ब्राह्मणेन' इति च कैश्चित् प्रयुक्तं सङ्गच्छत इति चेत्, चिन्त्यमेव तत्। अत एव 'अस्थिदधि' (अ० ७।१।७५) इति सूत्रेण तदन्तस्याप्यनङित्यर्थे दधि अतिक्रान्तेनेत्यर्थकम् अतिदध्ना इत्युदाहृतं भट्टोजिदीक्षितैः (द्र०—सि० कौ० ४४५)। दधिशब्दान्तबहुव्रीहेस्तु सर्वथा नित्यं कबिति तदाशयः। न चाविशेषाद् दधि मध्वित्यप्येकवचनान्तमेव गणे पठितमिति मन्तव्यम्। पुमान् अनड्वान्, नौः, लक्ष्मीः, पय इति पञ्चानामेवैकवचनान्ततया काशिकादौ कौमुद्यां च परिगणनाद् इत्यलम् ॥८५॥ इति उरःप्रभृतिः ॥

इति श्रीमदगस्तिमहर्षिवंशस्य भट्टयज्ञेश्वरस्य कृतौ
स्त्रीयगणरत्नावलीविवृतौ
॥ पञ्चमोऽध्यायः ॥

———

# ॥ अथ षष्ठोऽध्यायः ॥

## [अथ पारस्करादिः]

'पारस्करप्रभृतीनि च संज्ञायाम्' (अ० ६।१।१५७)। पारस्करेत्येवमादीनि शब्दरूपाणि संज्ञाविषये ससुट्कानि निपात्यत इति तदर्थः। तत्रापेक्षितानि पारस्करादीनि संगृह्यन्ते पद्यद्वयेन।

पारस्कर इति देशे नगे तु कारस्करो गुहायां तु।
किष्किन्धाथ बृहस्पतिरमरगुरौ तस्करः स्तेने ॥१॥

पारस्य करः कारकः पारस्करो देशविशेषः। आनर्तदेशे परस्करं नाम नगरमिति एके। देशादन्यत्र पारकरः। कारं करोतीत्यर्थकः कारस्करो राजवृक्षो गिरिश्च। किं किं दधातीति किष्किन्धा कन्दरात्मिका सुग्रीवनगरी। बृहतां देवानां पतिर्विद्याप्रदानेन पालको बृहस्पतिः। तत्करोतीति तस्करश्चोरः। उभयत्र सुट् तलोपश्च ॥१॥

प्रस्तुम्पति गवि कर्त्तरि किष्कु प्रमितौ रथस्या तु।
नद्यां प्रायश्चित्तप्रायश्चित्ती इहाह फणिराजः ॥२॥

प्रस्तुम्पति गौः[1]। गोभिन्ने कर्त्तरि तु प्रतुम्पति हयः। प्रधावतीत्यर्थः। कायतीति किष्कु प्रमाणं हस्तो वितस्तिर्वा। 'कै शब्दे' (धातु० १।६५३) इत्यस्मात् कुप्रत्यये द्वित्वमभ्यासस्येत्वमुत्तरखण्डस्य सुडागमश्च निपात्यते। रथं पाति पिबतीति वा रथस्या नाम नदी। रथपाऽन्या। प्रायस्य पापस्य चित्तं विशुद्धिः प्रायश्चित्तम्। प्राये तपसि चित्तं निश्चय इति वार्थः। चित्तिशब्दोऽपि चित्तपर्यायः, प्रायश्चित्तिः। अर्थः प्राग्वत्। 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' (सि० कौ० तत्त्व० १५३३) इति, 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते' इत्युभयथापि प्रायश्चित्तपदस्य निरुक्तिः स्मृतिषु प्रसिद्धा। फणिराजः=पतञ्जलिः। स इहोवाच—'प्रायस्य चित्तिचित्तयोः सुडस्कारो वा' (महा० ६।१।१५७) इति।

अयमाकृतिगणः। तेनाविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्य इति

---

१. 'प्रसक्तं पतिगो' इत्युपलभ्यते हस्तलेखे।

केचित् । तेन शतात् परे इति परःशताः, एवं परःसहस्राः, **'परो रजसो वा हरेर्गुणा'** इत्यादि सिद्ध्यति ॥२॥ इति **पारस्करादिः** ॥

### [अथ उञ्छादिः]

**'उञ्छादीनां च'**(अ० ६।१।१६०)। एषामन्त उदात्तो भवतीति तदर्थः। तत्रापेक्षिता उञ्छादयः सार्द्धपद्यद्वयेन संगृह्यन्ते ।

**उञ्छम्लेच्छयुगजपा जञ्जबुधावथ गरो दूष्ये ।**
**श्वभ्रे दरोऽथ करणे वेदो वेगश्च वेष्टबन्धौ च ॥३॥**

उञ्छः कणश आदानम्, म्लेच्छोऽपशब्दोच्चारणमित्यादि सर्वत्रोदाहरणेष्वन्तश्चरमोऽजुदात्तो भवति। इतरस्तु शेषनिघातेनानुदात्तः। युगशब्दः कृतत्रेतादिकालविशेषे रथाद्यवयवविशेषे च वर्त्तते। स च घञन्तोऽप्यगुणो निपात्यते। यथा वैश्वानरः कुशिकेभिर्युगे युगे। अर्थान्तरे तु योगे योगे तवस्तरम्। नास्यान्त उदात्तः। बुधशब्दोऽपि युगशब्दवदगुणो घञन्तः, गणे तथैव निपातनात्। इगुपधलक्षणकप्रत्ययान्तस्त्वन्तोदात्त एवेति नात्र तस्य पाठः। 'जज जजि युद्धे' (धातु० १।१४६) इति भौवादिकाद् घञ्। जञ्जो युद्धम्। दूष्येऽनिष्टे गरः। विषमित्यर्थः, तद्वदनिष्टः पदार्थो वा।

श्वभ्रे गर्त्ते[दरः]। वेदादयश्चत्वारः करणघञन्ताः। विदन्ति जानन्ति बुधाः सर्वमनेनेति वेदो मन्त्रब्राह्मणात्मकः श्रुतिकदम्बः। विनक्ति चलत्यनेनेति वेगः। एवं वेष्टते बध्नाति चानेनेति वेष्टः, बन्धः। एषां घञन्तत्वात् **'ञ्नित्यादिर्नित्यम्'** (अ० ६।१।१९७) इत्याद्युदात्तत्वे प्राप्ते पाठः ॥३॥

**स्तुद्रुयुवश्छन्दस्यथ साम्बस्तापश्च भावगर्हायाम् ।**
**स्तोत्रे तु वर्त्तनिरथो उत्तमशश्वत्तमौ च सर्वत्र ।**
**भक्षो भोगो मन्थश्चेत्युञ्छादिर्बुधैः कथितः ॥४॥**

स्तु द्रु युव इति न धातवोऽत्र विवक्षिताः, तेषामन्तोदात्तत्वस्यान्यथा सिद्धत्वात्, किन्तु स्तवद्रवयवशब्दाः। तेषाम् **'ऋदोरप्'** (अ० ३।३।५७) इत्यप्प्रत्ययान्तत्वादाद्युदात्तत्वे प्राप्ते पाठः। छन्दसीत्युक्ते लोक आद्युदात्ता एव प्रयोज्याः। अम्बया सहित साम्बः। **'बहुव्रीहौ प्रकृत्या पूर्वपदम्'** (अ० ६।२।१) इत्याद्युदात्तत्वे प्राप्ते पाठः। ताप इति घञन्तम्। भावस्य प्रकारीभूतार्थस्य धात्वर्थस्य च गर्हायामित्यर्थः। तथा च कुत्सिताम्बासाहित्यवान्। कुत्सित······प इति चक्रमेणार्थः। स्तोत्रे स्तवनरूपेऽर्थे वर्त्तमानो वर्त्तनि-

शब्द उञ्छादौ ज्ञेयः। अस्यानिप्रत्ययान्तत्वात् प्रत्ययाद्युदात्तत्वेन मध्योदात्तत्वे प्राप्त इह पाठः। उत्तमशश्वत्तमयोस्तमबन्तत्वेन पित्वादनुदात्तत्वे प्राप्ते पाठः। सर्वत्रेति लोकवेदयोः तेन साम्प्रतापवर्त्तनिषु छन्दसोऽस्य सम्बन्ध इति सूचितम्। भक्ष इति 'भक्ष अदने' (धातु० १०।२७) इति चुरादिः। 'अनित्यण्यन्ताश्चुरादयः' (सि० कौ० सुबो० ५५५६) इति पक्ष यदा णिच् नास्ति तदा घञ्। ण्यन्तात्तु 'एरच्' (अ० ३।३।५६) इत्यचि सिद्धमेवान्तोदात्तत्वम्। भोगमन्थौ घञन्तावेत्र ॥४॥ इति उञ्छ दिः ॥

[अथ वृषादिः]

'वृषादीनां च' (अ० ६।१।२०३)। एषामादिरुदात्तः स्यादिति तदर्थः। वृषादयः पद्यद्वयेन संगृह्यन्ते।

वृषजनहयज्वरग्रहतयनयचयगयगुहा अमस्तायः।
सूदांशवेदमन्त्राः कामः शान्तिर्वहः कल्पः ॥५॥
संज्ञायां स्तः शमरणौ सम्मतौ भावकर्मणोः।
यामो धारा पाद आरा कारा भोक्ता वृषादिके ॥६॥

वर्षति कामानिति वृषः श्रेष्ठः। 'वृषु सेचने' (धातु० १।४६८)। इगुपधलक्षणः कः। गूहति संवृणोतीति गुहा। अत्रापि इगुपधलक्षणे केऽदन्तत्वात् स्त्रियां टाप्। जायत इति जनः। ज्वरति रोगं करोतीति ज्वरः। गृह्णातीति ग्रहः। हयति गच्छतीति हयः। तयति गच्छतीति तयः। अमति गच्छतीत्यमः। तायति सन्तनोति पालयति वा तायः। वहति भारमिति वहः स्कन्धः। कल्पत इति कल्पः समर्थः। एते पचाद्यजन्ताः।

नीतिर्नयः। चयनं चयः। इमौ 'एरच्' (अ० ३।३।५६) इत्यजन्तौ। सूदयतीति सूदकः पाचकः। 'अंश समाघाते' (द्र०—धातु० १०।३४५)। अंश्यत इति अंशश्छेदः। वेद्यते ज्ञाप्यते सर्वमनेनेति वेदः। मन्त्रणं मन्त्रः। 'मत्रि गुप्तपरिभाषणे' (धातु० १०।१४६) चुरादिः। काम्यत इष्यते स्रक्चन्दनवनिताद्यनेनेति कामः कन्दर्पः। शमनं शमः। रण्यते ध्वन्यते भटैर्य इति रणः संग्रामः। एते 'पुंसि संज्ञायां घः प्रायेण' (अ० ३।३।११८) इति घान्ताः। शमपर्यायः शान्तिरिति क्तिजन्तम्।

एषां वृषप्रभृतीनां प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्तेऽत्र पाठः। ननु गुहेति टाबन्तं पिदन्तत्वादनुदात्तान्तं स्यादिति चेन्न, गुहशब्दाकारस्य टापा सह

सवर्णे दीर्घे 'एकादेश उदात्तेनोदात्तः'(अ० ८।२।५) इत्याकारस्योदात्तत्वात्। गयेत्यव्युत्पन्नं प्रातिपदिकं सुरविशेषवाचि। एवं यागादिपञ्चकमप्यव्युत्पन्नमेव। तेषां फिट्स्वरेणान्तोदात्तत्वे प्राप्ते पाठः।

वृषादिराकृतिगणः। तेनाविहितलक्षणाद्युदात्तत्ववन्तो वृषादौ बोध्याः ॥५, ६॥ इति वृषादिः॥

[अथ विस्पष्टादिः]

'विस्पष्टादीनि गुणवचनेषु' (अ० ६।२।२४)। गुणवचनेषु परेषु विस्पष्टादीनि पूर्वपदानि प्रकृत्या स्युरिति तदर्थः। विस्पष्टादय एकेन पद्येन संगृह्यन्ते।

विस्पष्टव्यक्तसम्पन्नविचित्रपटुपण्डिताः ।
निश्चित्तकुशलावत्र चपलो निपुणस्तथा ॥७॥

विस्पष्टं कटुकं विस्पष्टकटुकम्। विस्पष्टादीनि प्रवृत्तिनिमित्तस्य विशेषणानि न तु द्रव्यस्य। कटुकादिशब्दैस्तु गुणवद् द्रव्यमभिधीयत इति। सामानाधिकरण्याभावात् कर्मधारयाभावे 'सुप् सुपा' (अ० २।१।२,४) इति समासः। 'स्पश बाधनस्पर्शयोः' (धातु० १।६२७) इत्यस्य निष्ठायां 'वा दान्तशान्त' (अ० ७।२।२७) इति स्पष्टशब्दो निपातितः। तस्य विशब्देन गतिसमासे 'गतिरनन्तरः' (अ० ६।२।४९) इत्याद्युदात्तत्वम्। 'अञ्जू व्यक्ता-दिषु' (धातु० ७।२०)। निष्ठायाम् 'उदात्तस्वरितयोः' (अ० ८।२।४) इति स्वरितादिर्व्यक्तशब्दः। व्यक्तं तिक्तो व्यक्ततिक्तः। सम्पूर्वात् पदेः कर्त्तरि क्तः। सम्पद्यत इति सम्पन्नम्। सम्पन्नं मृदुलः सम्पन्नमृदुलः। थाथादिस्वरेण (अ० ६।२।१४४) अन्तोदात्तः सम्पन्नशब्दः। गतिस्वरस्तु न तत्र कर्मणीत्यनुवृत्तेः। अयन्तु कर्तरि क्तः। 'चित्र चित्रीकरणे' (धातु० १०।३४४) इति चुरादिण्यन्तादेरच्। विशेषचित्रं विचित्रम्, प्रादिसमासः। 'तत्पुरुषे तुल्यार्थ' (अ० ६।२।२) इत्यव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः। पटुशब्द आद्युदात्तः। पण्डा शास्त्रोत्थिता बुद्धिः सञ्जाताऽस्येति पण्डितः। कुशान् लातीति कुशलः। 'आतोऽनुपसर्गे कः' (अ० ३।२।३)। उभावप्यन्तोदात्तौ। विगतं चित्तमस्येति विचित्तम्। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (अ० ६।२।१) इत्याद्युदात्तम्। 'पुण कर्मणि शुभे' (धातु० ६।४५), निपुणतीति निपुणः। इगुपधलक्षणः कः। अन्तोदात्तोऽयं कुशलपर्यायः। चपलशब्दोऽन्तोदात्तः।

सूत्रे विस्पष्टादीनीति किम् ? परमलवणः। गुणवचनेष्विति किम् ? विस्पष्टब्राह्मणः ॥७॥ इति विस्पष्टादिः ॥

[अथ युक्तारोह्यादिः]

'युक्तारोह्यादयश्च' (अ० ६।२।८१)। युक्तारोहीत्येवमादयः समासा आद्युदात्ताः स्युरिति तदर्थः। त इमे सार्द्धपद्येन संगृह्यन्ते।

युक्तारोही योधिमत्स्यौ प्रहारी नन्दी वञ्चीत्यागताच्चापि रोही।
क्षीराद्धोता ग्रामगोधुग्गणात्तु पादोऽथाश्वव्युष्टिगर्गात् त्रिरात्रः ॥८॥
इह पात्रेसमितादिर्भगिनीभर्त्तैकशितिपाच्च ।

युक्तमारोहतीति युक्तारोही। आगतं युध्यतीति आगतयोधी। एवमागतप्रहारी, आगतनन्दी, आगतवञ्ची। आगतचर्च्चीति क्वचित् पाठः। आगतरोही। सर्वत्र 'सुप्यजातौ' (अ० ३।२।७८) इति णिनिः। एषां 'णिनि' (अ० ६।२।७६) इति सूत्रेणैवाद्युदात्तत्वे सिद्धे युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येवोत्तरपदानि यत्र तत्रैव यथा स्यादिति पूर्वोत्तरपदनियमार्थः पाठः। तेन युक्ताध्यायीत्यादौ मा भूदाद्युदात्तत्वम्। आगतश्चासौ मत्स्यश्चागतमत्स्यः। क्षीरस्य होता क्षीरहोता। याजकादित्वात् समासः। ग्रामस्य गोधुक् ग्रामगोधुक्। गणपादो गणचतुर्थांशः। अश्वत्रिरात्रः, व्युष्टित्रिरात्रः, गर्गत्रिरात्रः। त्रीण्येतानि यागविशेषनामधेयानि ॥८॥ भगिनी भर्त्ता। एषां समासान्तोदात्तत्वे प्राप्ते पाठः। पात्रेसमितादिगणस्थाः शब्दा आद्युदात्ता ज्ञेया इति भावः। एकः शितिः कृष्णः पादोऽस्येत्येकशितिपात्। अस्य बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरेण ककाराकारस्योदात्तत्वे प्राप्त आद्युदात्तार्थमिह पाठः। इति युक्तारोह्यादिः ॥

[अथ घोषादिः]

'घोषादिषु च' (अ० ६।२।८५)। घोषादिषूत्तरपदेषु पूर्वपदमाद्युदात्तं स्यादिति तदर्थः। केचित्तु इह पूर्व[सू]त्राद् अनिवसन्त इत्यनुवर्त्य तच्च पूर्वपदं निवसद्वाचि न चेदिति व्याचक्षते। तन्मते घोषशब्दो न निवासस्थानवाची। सार्द्धपद्येन घोषादयः संगृह्यन्ते।

घोषकटवल्लभा अथ पिङ्गलबदरे ह्रदः पिशङ्गश्च ॥९॥
शाला माला शाल्मली च कूटाऽश्वत्थतृणानि च।
प्रेक्षा रक्षा मुनिः शिल्पी घोषादौ कथिता बुधैः ॥१०॥

दाक्षिघोषः, दाक्षिकट इत्यादि षष्ठीसमासः ॥९,१०॥ इति घोषादिः ॥

[अथ छात्र्यादिः]

'छात्र्यादयः शालायाम्' (अ० ६।२।८६) । छात्र्यादयः शब्दाः शाला-शब्द उत्तरपद आद्युदात्ता भवन्तीति तदर्थः । छात्र्यादयः पद्यार्द्धेन संगृह्यन्ते ।

छात्रिर्व्याडिर्भाण्डिराट्याखण्डी च गोमिपैली च ।
छात्र्यादिः

छात्रिशाला । व्याडिशाला । अटस्यापत्यमाटिस्तस्य शाला आटि-शाला । गोमिनो गोमतः शाला गोमिशाला । गोमिवर्जं सर्वं इञन्ताः । 'विभाषा सेनासुरा' (अ० २।४।२५) इत्यादि सूत्रेण यदापि शालान्तः समासो नपुंसकलिङ्गो भवति तदापि 'तत्पुरुषे शालायां नपुंसके' (अ० ६।२।१२३) इत्येतस्मात् पूर्वविप्रतिषेधेनायमेव स्वरः । छात्रिशालम् । इति छात्र्यादिः ॥

[अथ कर्क्यादिः]

'प्रस्थेऽवृद्धमकर्क्यादीनाम्' (अ० ६।२।८७)। प्रस्थशब्द उत्तरपदे कर्क्या-दिभिन्नमवृद्धं पूर्वपदमाद्युदात्तं स्यादिति तदर्थः । इन्द्रप्रस्थः । अवृद्धं किम् ? दाक्षिप्रस्थः । अकर्क्यादीनामिति किम् ? कर्कीप्रस्थः, मकरीप्रस्थः । ते च कर्क्यादय एकेन पद्येन[1] [संगृह्यन्ते] ।

अथो कर्की मकरी मघनी च कर्कन्धुः ।
बदरी शमी करीरं कन्दुककवलौ गणेऽत्र विज्ञेयौ ॥११॥

[इति कर्क्यादिः ॥]

[अथ मालादिः]

['मालादीनां च' (अ० ६।२।८८) । प्रस्थ उत्तरपदे मालादीनामादि-रुदात्तो भवतीति तदर्थः । एकेन पद्येन] मालादयः संगृह्यन्ते ।

माला शाला शोणा द्राक्षा स्नाक्षा च काञ्ची च ।
एकः कामः क्षामा मालादिरयं बुधैः प्रोक्तः ॥१२॥

१. इतोऽग्रे कोष्ठान्तर्गतः पाठो नोपलभ्यते । कर्क्यादिगणस्य कारिका-व्याख्या मालादिगणस्य च सूत्र-व्याख्या नोपलब्धा ।

मालाप्रस्थः, शोणाप्रस्थः, एकप्रस्थः। 'एङ् प्राचां देशे' (अ० १।१।७५) इत्यनेन शोणाशब्दस्य, 'त्यदादीनि च' (अ० १।१।७४) इत्यनेनैकशब्दस्य वृद्धत्वम्। प्रस्थान्ता इमे शब्दा ग्रामविशेषस्य नगरविशेषस्य वा सञ्ज्ञाभूताः ॥१२॥ इति मालादिः ॥

[अथ क्रत्वादिः]

'क्रत्वादयश्च' (अ० ६।२।११८)। सोः परे क्रत्वादय आद्युदात्ता भवन्तीति तदर्थः। पद्यार्द्धेन क्रत्वादयः संगृह्यन्ते।

क्रतुभगहव्यदशीकप्रतीकमिह सप्रतूर्त्ति गण उक्तम्।

साम्राज्याय सुक्रतुः। सुप्रतीकः। सुप्रतूर्त्तिमनेहसम्। इति क्रत्वादिः ॥

[अथ वर्ग्यादिः]

'वर्ग्यादयश्च' (अ० ६।२।१३१)। कर्मधारयभिन्ने तत्पुरुषे वर्ग्यादीन्युत्तरपदान्याद्युदात्तानि भवन्तीति तदर्थः। पद्यार्द्धेन वर्ग्यादयः संगृह्यन्ते।

यस्तु दिगादियदन्तो वर्गादिः सोऽत्र वर्ग्यादिः ॥१३॥

अर्जुनवर्ग्यः। वासुदेवपक्ष्यः। दिगाद्यन्तर्गणो वर्ग्यादिः ॥१३॥ इति वर्ग्यादिः ॥

[अथ चूर्णादिः]

'चूर्णादीन्यप्राणिषष्ठ्याः' (अ० ६।२।१३४)। एतानि प्राणिभिन्नवाचिषष्ठ्यन्तात् पराणि तत्पुरुष आद्युदात्तानि भवन्तीत्यर्थः। पद्यार्द्धेन चूर्णादयः संगृह्यन्ते।

चूर्णं द्राक्षा करिपकरिषौ शाकिनः शाकटश्च
तूस्तं चोलो दलपचमसी चक्वनं कुन्दुमं च।

मुद्गचूर्णं बालोद्यानद्राक्षा। करिपकरिषौ हस्तिपकपर्यायौ। कौशम्ब्या नगर्याः सम्बन्धी करिषः। शाकिनशब्दः पिशाचप्रभेदवाची। मरुशाकिनी। शकटं वहति शाकटो गौः। मृत्तिकाशाकटः। मृद्विकार इत्यर्थः। तूस्तं बुसम्। यवतूस्तम्। चोलः कञ्चुकः। कम्बलचोलः। दलमुत्सेधः खण्डं वा पातीति दलपः। गिरिदलपः। खदिरचमसी। चमसी चक्वनं च पात्रविशेषः। कुं भूमिं दुनोतीति कुन्दुमं खनित्रम्। अयःकुन्दुमम्।

सूत्रेऽप्राणिषष्ठ्या इति किम्? मत्स्यचूर्णम्। इति चूर्णादिः ॥

[अथ काण्डादिः]

'षट् च काण्डादीनि' (अ० ६।२।१३५)। काण्डेत्येवमादीनि षडुत्तरपदान्यप्राणिषष्ठ्याः पराण्याद्युदात्तानि भवन्तीति तदर्थः। पद्यार्द्धेन काण्डादयः संगृह्यन्ते।

काण्डं कूलं पललमपि वा शाकसूपौ च चीरं।
प्रोक्तौ प्राज्ञैर्विशदमतिभिश्चूर्णकाण्डादिवर्गौ ॥१४॥

दर्भकाण्डम्, नदीकूलम्, तिलपललम्, मूलकशाकम्, मुद्गसूपः, शणचीरम्।

अप्राणिषष्ठ्या इत्युक्तेर्नेहोत्तरपदाद्युदात्तस्वरः—अर्जुनकाण्डम्। अर्जुनबाण इत्यर्थः ॥१४॥ इति काण्डादिः॥

[अथ प्रवृद्धादिः]

'प्रवृद्धादीनां च' (अ० ६।२।१४७)। एषां क्तान्तमुत्तरपदमन्तोदात्तं स्यादिति तदर्थः। एकेन पद्येन प्रवृद्धादयः संगृह्यन्ते।

प्रवृद्धश्च प्रयुक्तश्चारूढश्चावहितस्तथा।
कविशस्त इति प्रोक्तः प्रवृद्धादिर्मनीषिभिः ॥१५॥

प्रवृद्धः प्रयुक्त इत्याद्युदाहरणानि स्पष्टानि। अत्र गणपाठे प्रवृद्धं यानमित्येवं यानादिघटितानि वाक्यान्येव पठ्यन्ते। तथा चोक्तं काशिकायाम्—'प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ता सक्तवः। प्रकर्षेऽवहितः। अवहितो भोगेषु। खट्वारूढः। कविशस्तः। यानादीनामत्र गणे पाठः प्रायः प्रयोगवृत्तिप्रदर्शनार्थः। यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव। विषयनियमार्थं इति एके। असंज्ञार्थोऽयमारम्भः। प्रवृद्धादिराकृतिगणः' (द्र०—काशिकायां—६।२।१४७) इति ॥१५॥ इति प्रवृद्धादि॥

[अथ याजकादिः]

'भक्त्याख्यानशयनासनस्थानयाजकादिक्रीताः' (अ० ६।२।१५१)। कारकात् पराण्येतान्युत्तरपदानि तत्पुरुषेऽन्तोदात्तानि भवन्तीति तदर्थः। कृत्स्वरापवादः। रथवर्त्म, पाणिनिकृतिः, छन्दोव्याख्यानम्, राजशयनम्, राजासनम्, ब्राह्मणयाजकः, गोक्रीतः। अत्रापेक्षितो याजकादिगणो द्वितीयाध्याय उक्तः (पृ०—५५), तत एव द्रष्टव्यः। [इति याजकादिः॥]

## [अथ चार्वादिः]

'कृत्योकेष्णुच्चार्वादयश्च' (अ० ६।२।१६०)। एते नञः परे अन्तोदात्ता भवन्तीति तदर्थः। कृत्य—अकर्तव्यः। उक—अकामुकः। इष्णुच्—अनलङ्करिष्णुः। अत्रापेक्षिताश्चार्वादयः संगृह्यन्ते पद्यद्वयेन।

चारुः साधुयौधकिवदान्यगृहपतिकगृहपतयः।
व्यस्ते विकारसदृशे तथा समस्तेऽथ चाकस्मात् ॥१६॥

अचारुः। असाधुः। योधकस्यापत्यं यौधकिः, न यौधकिरयौधकिः। अवदान्यः। नास्ति गृहपतिर्यस्य तद् अगृहपतिकम्। न गृहपतिरगृहपतिः। अविकारः। असदृशम्। अविकारसदृशम्। अनकस्मात् ॥१६॥

संज्ञायां शानजन्ता धृङ्कृञ्वर्चा वृधुरुच्त्वराः।
शोभतिश्चाथ राजाह्वोश्छन्दस्यनङ्गमेजयः ॥१७॥

धृङ्प्रभृतयः शानजन्ता ध्रियमाणक्रियमाणवर्चमानवर्धमानरोचमानत्वरमाणशोभमानशब्दाः संज्ञायामत्र गणे बोध्याः। अध्रियमाण इत्याद्युदाहर्त्तव्यम्। अराजः। अनहः। द्वयं छन्दस्येव। भाषायां तु नञः स्वर एव। अङ्गमेजयति कम्पयतीति अङ्गमेजयः। अनङ्गमेजयः। गणे नञ्विशिष्टः पाठ उदाहरणप्रदर्शनार्थः ॥१७॥ इति चार्वादिः॥

## [अथ सुखादिः]

'जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः' (अ० ६।२।१७०)। आच्छादनवर्जिताज्जातिवाचिनः कालवाचिनः सुखादेश्च परं कृतमितप्रतिपन्नवर्जितं क्तान्तमुत्तरपदं बहुव्रीहावन्तोदात्तं स्यादिति तदर्थः।

जाति—सारङ्गजग्धः। सुरापीतः। काल—मासजातः। द्व्यहजातः। सुखादि—सुखजातः। अस्मादेव ज्ञापकाद् बहुव्रीहौ निष्ठान्तस्य परनिपातः। अत्रापेक्षिताः सुखादयस्तृतीयाध्याये (पृ०—७८) उक्तास्तत एव गन्तव्याः। इति सुखादिः॥

## [अथ गुणादिः]

'न गुणादयोऽवयवाः' (अ० ६।२।१७६)। उत्तरपदार्थबहुत्ववाचिनो बहुशब्दात् परेऽवयववाचिनो गुणादयो नान्तोदात्ता भवन्ति बहुव्रीहाविति तदर्थः। ते च गुणादयः पद्यार्द्धेन संगृह्यन्ते।

गुणाक्षराध्यायसूक्तच्छन्दोमानं गुणादिके ॥१८॥

बहुगुणा रज्जुः। बह्वक्षरं पदम्। बह्वध्यायो ग्रन्थः। बहुसूक्तो बहुच्छन्दोमानो वाऽध्यायः। गुणादिराकृतिगणः।

अवयवा इति किम्? बहुगुणो द्विजः। श्रुताध्ययनसदाचारादयोऽत्र गुणाः ॥१८॥ इति गुणादिः ॥

[अथ निरुदकादिः]

'निरुदकादीनि च' (अ० ६।२।१८४)। एतानि शब्दरूपाण्यन्तोदात्तानि भवन्तीत्यर्थः। अत्रापेक्षिता निरुदकादयः संगृह्यन्ते पद्यद्वयेन।

निरुदकनिरुपलनिरजिनमथ निर इह मक्षिकतरीकपेषाः[1]।
कालककालिकमशकास्तरीपमथ दुस्तरीपश्च ॥१९॥

निर्गतमुदकं यस्मात् तन्निरुदकमिति बहुव्रीहिः। निर्गतमुदकं निरुदकमिति प्रादिसमासो वा। एकत्र 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (अ० ६।२।१) इति, अन्यत्र 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय' (अ० ६।२।२) इति पूर्वपदप्रकृतिस्वरे प्राप्तेऽनेनान्तोदात्तत्वम्। उदकस्याभावो निरुदकमित्यर्थाभावेऽव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। एवं सर्वत्रोदाहरणेषु बोध्यम्।

निरुपलम्, निरजिनम्, निर्मक्षिकम्, निस्तरीकम्। निर्गता तरी यस्मादिति बहुव्रीहिरेवात्र। निष्पेषम्। निष्कालकम्, निष्कालिकम्, निर्मशकम्। तरीं नावं पातीति तरीपः कर्णधारः सांयान्त्रिको वा। निर्गतस्तरीपो यस्मात् स निस्तरीपो ग्रामः। दुष्टास्तरीपा यत्र स दुस्तरीपो ग्रामः ॥१९॥

उदुपाभ्यामजिनमथो परितः केशश्च हस्तपादं च।
कर्षश्चेति बुधजनैः कथितोऽयं निरुदकादिगणः ॥२०॥

उत्कृष्टमुपगतं वा अजिनमुदजिनम्, उपाजिनम्, परिकेशम्, परिहस्तः, [परिपादः।] परिकर्षः ॥२०॥ इति निरुदकादिः ॥

[अथ अंश्वादिः]

'प्रतेरंश्वादयस्तत्पुरुषे' (अ० ६।२।१९३)। प्रतेः परेंऽश्वादयोऽन्तोदात्ता

---

१. '०मथ नेर्मक्षिकतरीकपेषाः स्युः' इत्युपलभ्यते हस्तलेखे।

भवन्ति तत्पुरुषसमास इति तदर्थः। तत्रापेक्षिता अंश्वादय एकेन पद्येन संगृह्यन्ते।

**अंशुजनराजखेटकमुष्ट्राजिनकृत्तिकाः श्रवणमार्द्रा।**
**आर्द्रपुरश्चेति गणोऽश्वादिः शाब्दिकबुधैः कथितः ॥२१॥**

प्रतिगतोंऽशु प्रत्यंशु, प्रतिजनः, प्रतिराजा। समासान्तविधेरनित्यत्वान्न टच्। अत्र गणे राजन्शब्दपाठ एव ज्ञापयति समासान्ता अनित्या इति। अन्यथा 'राजाहः सखिभ्यः' (अ० ५।४।९१) इति टचश्चित्वादेवान्तोदात्तत्वे सिद्धे किं तेन। प्रतिगतः खेटको ग्रामविशेषः प्रतिखेटकः। अर्द्धं पुरं यस्य सोऽर्द्धपुरस्तस्य छात्र आर्द्धपुरः। प्रतिगतः स प्रत्यार्द्धपुरः। ननु प्रतीत्यस्य प्रतिगत इत्यर्थः कथमिति चेत्, प्रादयो हि वृत्तिविषये सक्रिये कारके वर्त्तन्ते, अत एव तेषां प्रातिपदिकार्थेन सहैकार्थीभाव इत्याहुः ॥२१॥ इति **अंश्वादिः**॥

## [अथ गौरादिः]

**'उपाद् द्व्यजजिनमगौरादयः'** (अ० ६।२।१९४)। उपात् परं द्व्यच्कमजिनं चान्तोदात्तं स्यात् तत्पुरुषे गौरादीन् वर्जयित्वेति तदर्थः। उपदेवः, उपेन्द्रः, उपाजिनम्। अगौरादय इति किम्? उपगौरः। नात्रान्तोदात्तः किन्तु 'तत्पुरुषे तुल्यार्थ' (अ० ६।२।२) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वर एव। गौरादय एकेन पद्येन संगृहीताः।

**गौरस्तैषस्तैलजिह्वे लेटलोटौ तथैव च।**
**कन्या कृष्णो गुधः कल्पः पादो गौरादिषु स्मृतः ॥२२॥**

तत्र लेटलोटशब्दौ धूर्त्तवाचकौ। 'लेट् लोट् धौर्त्ये' (द्र०—धातु० ११। ६) इति कण्ड्वादिगणस्थाभ्यां स्वार्थयगन्ताभ्यां पचाद्यचि 'यस्य हलः' (अ० ६।४।४९) इति यलोप उक्तरूपसिद्धिः ॥२२॥ इति **गौरादिः**॥

## [अथ स्तोकादिः]

**'पञ्चम्याः स्तोकादिभ्यः'** (अ० ६।३।२)। एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे। तत्र स्तोकादयः **'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन'** (अ० २।१।३९) इति पञ्चमीसमासविधायकसूत्रोपात्ता एव वेदितव्याः। स्तोकान्मुक्तः, अन्तिकादागतः, दूरादागतः, कृच्छ्रान्मुक्तः। अर्थग्रहणात् स्तोकान्तिकदूरशब्दानां पर्याया अपि वेद्याः। अल्पान्मुक्तः, अभ्याशादागतः, विप्रकृष्टादागतः। इति **स्तोकादिः**॥

## [अथ प्रियादिः]

'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु'(अ० ६।३।३४)। स्त्रीलिङ्गस्य भाषितपुंस्कस्योङ्प्रत्ययान्तभिन्नस्य शब्दस्य समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे पुंवद्रूपं भवति न तु पूरणप्रत्ययान्ते प्रियादौ च परे।

रम्या भार्या यस्य स रम्यभार्य इत्यादीन्युदाहरणानि। ऊङ्प्रत्ययान्तभिन्नस्येति किम्? वामोरू भार्या यस्यासौ वामोरूभार्यः। नात्र पुंवद्भावः। अपूरणीप्रियादिष्विति किम्? कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। कल्याणी प्रिया यस्य स कल्याणीप्रियः। अत्र प्रियादयः क इत्यपेक्षायां सगृह्यन्ते सार्द्धपद्येन।

प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा समा।
भक्तिः स्वा सचिवा कान्ता क्षान्तादुहितृवामनाः।
चपला चेति सम्प्रोक्तः प्रियादिः पण्डितैर्गणः ॥२३॥

तत्र प्रियाशब्द उदाहृतः। कल्याणी मनोज्ञा यस्यासौ कल्याणीमनोज्ञः। वृता कल्याणी येन स वृताकल्याणीकः। कल्याणी सुभगा यस्यासौ कल्याणीसुभगः। एवं कल्याणीदुर्भगः, कल्याणीसमः। अव्यभिचारिणी भक्तिर्यस्यासावव्यभिचारिणीभक्तिः।

'दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत्॥' (रघु० १२।१९)

इति कथं रघुवंशे? अत्रोच्यते—दृढं भक्तिरस्येति लिङ्गसामान्यनपुंसकलिङ्गमत्र पूर्वपदमिति।

कल्याणी स्वा यस्य स कल्याणीस्वः। प्रिया सचिवा यस्यासौ प्रियासचिवः। एवं प्रियाकान्तः, प्रियाक्षान्तः, कल्याणीदुहितृकः, प्रियावामनः, प्रियाचपलः ॥२३॥ इति प्रियादिः॥

## [अथ पृषोदरादिः]

'पृषोदरादीनि यथोपदिष्टम्' (अ० ६।३।१०९)। पृषोदरेत्येवमादीनि शब्दरूपाणि शिष्टैर्यथोच्चारितानि तथैव साधूनि भवन्तीति तदर्थः। अत्रापेक्षिताः पृषोदरादयस्त्रिभिः पद्यैः संगृह्यन्ते।

**पृषोदरपृषोत्थानबलाहकमुलूखलम् ।**
**वृसीश्मशानजीमूता मयूरश्च पिशाचकः ॥२४॥**

पृषतो हरिणस्योदरं पृषोदरम् । पृषत उदरमिवोदरं यस्येति वा विग्रहः । पृषच्छब्दो घृतमिश्रदध्यादिहविष्यवाची । तदुदरे यस्य स पृषोदरो देवविशेष इति **वर्द्धमानः** (द्र०—गण० पृ० १००) । पृषोत्थानम् । वारिणो वाहको बलाहको मेघः । ऊर्ध्वं खं लाति आदत्ते इत्युलूखलम् । उत् ऊर्ध्वं खलति सञ्चलतीति वा उलूखलम् । वृहतोऽस्यां सीदन्त्युपविशन्तीति वृसी ऋषीणामासनम् । मृताः स्म शेरतेऽस्मिन्निति श्मशानं पितृवनम् । जीवनं मुञ्चतीति जीवनस्य जलस्य मूतः पुटबन्ध इति वा जीमूतो मेघः । मह्यां रौतीति मयूरः कलापी । पिशितं मांसमश्नातीति पिशाचः प्रेतः ॥२४॥

**आकृतिगणोऽयमत इह गूढात्मा हंससिंहधूर्जटयः ।**
**तीरस्य तारभावो दिक्शब्दाद्वाथ वाड्वलि दूढचः ॥२५॥**

यतोऽयमाकृतिगणोऽतः कारणादिहान्येऽपि शिष्टप्रयुक्ता बुधैर्ज्ञेयाः । तथाहि—गूढ आत्मा बुद्धिः स्वभावो वा यस्य स गूढात्मा । हसतीति हंसः । हिनस्तीति सिंहः । तथा चोक्तं सिद्धान्तकौमुद्याम्—'भवेद् वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ।' (सि० कौ० १४८४) इति । धूरिव व्यायता जटा यस्यासौ धूर्जटिर्महेश्वरः । दक्षिणं च तत्तीरं च दक्षिणतीरम्, दक्षिणतारम् । एवमुत्तरतीरमुत्तरतार-मित्यादि । वाग्वादस्यापत्यं वाड्वलिः । 'वाचो वादे डत्वं वल्भाव-श्चोत्तरपदस्येञि प्रत्यये' इति काशिकायाम् (द्र०—६।३।१०९) । दुष्टं ध्यायतीति दूढचः ॥२५॥

**दूडभदूणाशौ दूडाशो वेदे रुहौ स्वरस्तूत्वम् ।**
**षोडन् षोडश षोढा पुरुषकपित्थादिका बुधैर्ज्ञेयाः ॥२६॥**

दुःखेन दभ्यत इति दूडभः । दुःखेन नाश्यत इति दूणाशः । त्रयोऽपीमे[1] प्रतिकूलेष्वमित्रादिषु प्रवर्तन्ते । दुःखेन दाश्यत इति दूडाशः । तथा चोक्तं कौमुद्याम्—'दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ।' (सि० कौ० १४८६) इति ।

स्वरित्यव्ययस्य रुहिधातौ परे उकारोऽन्तादेशो वेद एव । तथा च श्रूयते

1. पूर्वकारिकापठितं दूढचशब्दं सम्मेल्य 'त्रयः' इत्युक्तम् ।

—'एहि जाये स्वोरोहाव' (द्र०—तै० सं० १।७।६।१) इति। स्पष्टं चेदं काशिकायाम्।[1] षड् दन्ता अस्येति षोडन् वत्सः। 'वयसि दन्तस्य दतृ' (अ० ५।४।१४१) इति दन्तस्य दत्रादेशः। षट् च दश च षडधिका वा दश षोडश। षट्प्रकारः षोढा। पक्षे षड्धेत्यपि भवति। तदुक्तं कौमुद्याम्—'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम्' (सि० कौ० ११६२) इति। पुरं शरीरं तत्र शेतेऽसौ पुरुषो जीवात्मा नरो वा। कपिरिव तिष्ठति कपयस्तिष्ठन्त्यस्मिन्निति वा कपित्थो वृक्षविशेषः।

आदिशब्दाद् अश्व इव तिष्ठति अश्वत्थः। मनो मथ्नातीति मन्मथः कामः। द्वाभ्यां कृतत्रेताभ्यां परो द्वौ परौ मुख्यावत्र कोटिद्वयावगाहित्वाद्वेति द्वापरो युगं संशयश्च। कां दिशां यातीति कान्दिशोको भयद्रुतः। मूषिकान् विदारयतीति विडालः। आशिषि दंष्ट्रायां विषमस्य स आशीविषः सर्पः। तथा च शाश्वतः[2]—'दंष्ट्राशीरनिलाशिनाम्' इति। पुरो दाश्यते दीयत इति पुरोडाशो हविः। भेदे चमस्यां पिष्टकस्य च। नारायणस्य उरू अश्नुते स्वोत्पत्तिक्षणे व्याप्नोतीति उर्वशी सुराङ्गना। यदाहुः—'उरूद्भवा नरसखस्य मुनेः सुरस्त्री' (विक्रमो० १।३) इत्यादि लक्ष्यानुसारतो ज्ञेयम्।

उणादिषु व्युत्पादितानामपि मयूरप्रभृतीनां केषाञ्चिदिह पुनर्व्युत्पादनं संज्ञाशब्दानां निर्वचनानि नानाविधानानीति प्रतिपादनार्थम्। तदेतत् सर्वमभिसन्धायोक्तं काशिकायां वामनेन—

'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।।'

(काशिकायां—६।३।१०९)

इति।।२६।। इति पृषोदरादिः।।

## [अथ कोटरादिः, किंशुलुकादिः]

'वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्' (अ० ६।३।११७)। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे संज्ञायां विषये दीर्घः स्यादिति तदर्थः। तत्र के कोटरादयः किंशुलुकादयश्चेत्यपेक्षायां संगृह्यन्त एकेन पद्येन।

---

१. 'जाय एहि स्वो रोहाव' (काशिकायां ६।३।१०९)।

२. शाश्वतनामकः कोषः (द्र०—गण० पृ० १०२)।

**कोटरमिश्रकसिध्रकसारिकपुरगा वनेऽथ किंशुलुकः ।**
**अञ्जनभञ्जनशाल्वा नडलोहितकुक्कुटा गिरौ दीर्घः ॥२७॥**

कोटराणां वनं कोटरावणम् । एवं मिश्रकावणम्, सिध्रकावणम्, सारिकावणम्, पुरगावणम् । वनविशेषाणां संज्ञा इमाः । 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः' (अ० ८।४।४) इति वनशब्दनकारस्य णत्वम् । वनस्याग्रे अग्रेवणम् । प्रसङ्गादिदमुदाहृतम् ।

किंशुलुको नाम राजर्षिस्तस्य गिरिः किंशुलुकागिरिः । एवमञ्जनागिरिः, भञ्जनागिरिः । शाल्वो नाम जनपदो राजा वा तस्य गिरिः शाल्वागिरिः । नडागिरिः, लोहितागिरिः, कुक्कुटागिरिः । एताः पर्वतप्रभेदानां संज्ञाः ।

कोटरकिंशुलुकादीनां किम् ? असिपत्रवनम् । हिमगिरिः ॥२७॥ इति कोटरादिः किंशुलुकादिश्च ॥

[अथ अजिरादिः]

'मतौ बह्वचोऽनजिरादीनाम्' (अ० ६।३।११९) । अजिरादिभिन्नस्य बह्वच्कस्य शब्दस्य मतुप्प्रत्यये परे दीर्घः स्यात् संज्ञायां विषय इति तदर्थः । अमरा सन्त्यस्यामिति अमरावती सुरराजनगरी । पुष्कराणि सन्त्यस्यामिति पुष्करावती सरसी लक्षणतीर्थविशेषः । बह्वचः किम् ? व्रीहिमती । अत्र प्रत्युदाहरणज्ञानार्थमपेक्षिता अजिरादयः संगृह्यन्ते पद्यार्द्धेन ।

**अजिरखदिरकारण्डवहंसाः पुलिनं च चक्रवाक इति ।**

अजिरवती, खदिरवती, कारण्डववती, हंसवती, पुलिनवती, चक्रवाकवती । एता अपि पुरीविशेषस्य नदीविशेषस्य वा संज्ञा एव । वर्द्धमानस्तु—

**'अजिरस्थविरौ खदिरो मलयालङ्कारचक्रवाकाश्च ।**
**खपुरः शशाङ्कपुलिने हिरण्यकारण्डवकरीरा ॥'** (गण० पृ० ९९)

इति पठित्वा 'स्थविरवती, मलयवती, अलङ्कारवती, खानि पृणन्ति खपुराः पूगाः सन्त्यस्यामिति खपुरवती, शशाङ्कवती, हिरण्यवती, करीरवान् पर्वतः' (गण० पृ० ९९) इति प्रत्युदाहरन् काशिकाद्यपेक्षयाऽधिकं सप्तकमुरीचकार । इति अजिरादिः ॥

[अथ शरादिः]

'शरादीनां च' (अ० ६।३।१२०) । एषां दीर्घो भवति मतुप्प्रत्यये परे

संज्ञायां विषय इति तदर्थः। तत्र के शरादय इत्यपेक्षायां संगृह्यन्ते पद्यार्द्धेन।

**शरवंशधूमशुचिमुनिमणिहनवोऽहिः कपिः शराद्याः स्युः ॥२८॥**

शरावती नाम नदी, वंशावती, [धूमावती,] शुचीमती, मुनीमती, मणीमती, हनूमान् मारुतिः। 'वसन्तकालो हनुमानिवागतः' इत्यादौ विनापि दीर्घत्वं संज्ञावगमः शब्दशक्तिस्वभावात्। हनु हनू इति द्विरूपं शब्दद्वयमेकार्थकमिति अन्ये। शरादावस्य पाठः प्रक्षिप्त इति तदाशयः। अहीमती, कपीमती।

आकृतिगणोऽयम्। तेन भोगावती, गङ्गापद्मावती नगरी नारी वा, कुशावतीत्यादि सिद्धम् ॥२८॥ इति शरादिः॥

## [अथ बिल्वकादिः]

**'बिल्वकादिभ्यश्छस्य लुक्'** (अ० ६।४।१५३)। नडाद्यन्तर्गता बिल्वकादयस्तेभ्यश्छस्य लुक् स्यात् तद्धिते पर इति तदर्थः। तत्रापेक्षिता बिल्वकादय एकेन पद्येन संगृह्यन्ते।

**बिल्वेक्षुवेणुवेतसवेत्रकपोतास्तृणं काष्ठम्।**
**क्रुञ्चा तक्षेत्येते कुक्सहिता बिल्वकादिगणः ॥२९॥**

बिल्वा यस्यां सन्ति सा बिल्वकीया, तस्यां भवा बैल्वकाः। इक्षवो यस्यां सन्ति सा इक्षुकीया क्षेत्रभूमिः, तस्यां भवा ऐक्षुकाः। एवं वेणुकीया वैणुकाः, वेतसकीया वैतसका इत्याद्युदाहर्त्तव्यम्। [वेत्रकीया वैत्रकाः, कपोतकीया कापोतकाः, तृणकीया तार्णकाः, काष्ठकीया काष्ठकाः। क्रुञ्चकीया क्रौञ्चकाः, तक्षकीया ताक्षकाः।]

अत्र सर्वत्र **'नडादीनां कुक् च'** (अ० ४।२।९१) इति चतुर्थाध्यायगतसूत्रेण चातुरर्थिकश्छप्रत्ययः कुगागमश्च। ततो भवार्थे शैषिकोऽण् तस्मिन् परे छप्रत्ययस्य लुक्।

ननु लुगित्येतावन्मात्रोक्त्यापि छप्रत्ययस्य निवृत्तौ सिद्धायां पुनश्छस्येति किमर्थमिति चेत्, श्रूयताम्—छमात्रस्य निवृत्तिर्यथा [स्यात्] कुको मा

भूदित्येवमर्थम् । अन्यथा 'सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः'[1] इति परिभाषया कुगपि निवर्त्तेतेति ।।२९।। इति बिल्वकादिः ।।

इति श्रीमदगस्तिमहर्षिवंशस्य यज्ञेश्वरस्य कृतौ

स्त्रीयगणरत्नावलीवृत्तौ

## ।। षष्ठोऽध्यायः ।।

---

१. द्र०—सि० कौ० १८४८-२ । तत्र 'सन्नियोगशिष्टानाम्' इत्येव पाठ उपलभ्यते । परिभाषापाठे तु सम्पूर्णा परिभाषोपलभ्यते ।

अस्याः परिभाषाया उदाहरणानि लोकेऽपि प्राचुर्येण नैकेषु स्थलेषु दरीदृश्यन्ते । तद्यथा—मातरि गतवत्यां तत्पुत्रोऽपि तामेवानुगच्छति । निदर्शनमात्रमुदाहृतम् । विद्वद्भिरेवं पदे पदेऽनुभविष्यते ।

# ॥ अथ सप्तमोऽध्यायः ॥

## [अथ द्वारादिः]

'द्वारादीनाञ्च' (अ० ७।३।४)। द्वारादिगणस्थानां शब्दानां यकार-वकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति किन्तु ताभ्यां पूर्वौ क्रमाद् ऐ औ इत्यागमौ भवतो ञिति णिति किति च तद्धित इति तदर्थः। तत्राकांक्षिता द्वारादयः संगृह्यन्त एकेन पद्येन।

द्वारं स्वादुमृदुस्वस्तिस्वाध्यायस्फ्यकृतस्वराः ।
श्वो व्यल्कशः श्वा स्वः स्वश्च द्वारादय उदाहृताः ॥१॥

द्वारे नियुक्तो दौवारिको द्वारपालः। स्वादु च तन्मृदु च स्वादुमृदु, स्वादुमृदुन इदं सौवादुमृदवम्। स्वादुमृदुर्भूरस्मिन् देशेऽस्तीति 'देशे तन्नाम्नि' (४।२, ६७) इत्यत्र इतिशब्दोपादानं हि सकललोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसंकेतेऽपीत्येतदर्थम्, इति सिद्धान्तितत्वात्। गणरत्नमहोदधौ तु स्वादुमृच्छब्दं पठित्वा सौवादुमृदम्, सौवादिमृदा देश इत्युदाहृतम् (द्र०—गण० पृ० ११४)।

स्वस्ति इत्याह सौवस्तिकः। स्वाध्यायेन चरति सौवाध्यायिको विप्रः। स्फ्यो यज्ञायुधम्, तेन कृतं स्फ्यकृतं तस्येदं स्फैयकृतम्। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। स्वरस्यायमिति वा विग्रहः। तथा च 'सौवरीणां सप्तमीनां तदन्तसप्तमीत्वम्'[1] इति पाणिनीया वदन्ति।

श्वो भवं शौवस्तिकम्। व्यल्कशमत्यन्तमधमं भक्ष्यं तत्र भवो वैयल्कशो व्याधिः। देशविशेषे ग्रामविशेषे च व्यल्कशशब्दो वर्तत इति एके। शुन इदं शौवनं पुच्छम्, शौवनः सङ्कोचः। स्वस्येदं सौवम् आत्मीयम्। स्वर्लोकाय हितं सौवर्यं स्वर्ग्यमित्यर्थः।

शुनो दंष्ट्रेव दंष्ट्रा यस्य तस्यापत्यं श्वादंष्ट्रिरित्यादावैजागमनिषेधायारब्धं श्वादेरिञि' (अ० ७।३।८) इति सूत्रं द्वारादौ श्वनिति केवलस्य पाठात् श्वशब्दपूर्वपदकस्य श्वादंष्ट्राशब्दस्यैजागमाप्राप्तौ व्यर्थं

---

१. द्र०—'स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ति' (महा० ६।१।१९२)।

सञ्ज्ञापयति—द्वारादौ तदादिग्रहणमिति। तेन द्वारपालस्यापत्यं दौवारपालिरित्यादि सिद्धम्। केचिद्‌ रेवत्यादिगणे द्वारपालशब्दमधीयाना दौवारपालिक इत्युदाहरन्ति। शुनो दंष्ट्रा श्वादंष्ट्रा, 'अन्येषामपि' (अ० ६।३।१३७) इति दीर्घः, तत्र भवः शौवादंष्ट्रो मणिरिति गणरत्नमहोदधौ (पृ० ११४) स्थितम्।

द्वाराद्यवयवयकारवकारयोरपदान्तत्वात् 'न य्वाभ्यां पदान्ताभ्याम्' (अ० ७।३।३) इत्यस्याप्राप्तौ 'द्वारादीनां च' इति सूत्रमारब्धमिति बोध्यम् ॥१॥ इति द्वारादिः ॥

[अथ स्वागतादिः]

'स्वागतादीनां च' (अ० ७।३।७)। स्वागत इत्येवमादीनां शब्दानां वृद्धिनिषेध ऐजागमश्च न भवतीति तदर्थः। तत्रापेक्षिताः स्वागतादय एकेन पद्येन संगृह्यन्ते।

स्वागतस्वध्वरौ स्वङ्गव्यङ्गस्वपतयस्तथा।
व्यवहारो व्यडश्चेति कथिताः स्वागतादयः ॥२॥

स्वागतमिति य आह स स्वागतिकः। शोभनोऽध्वरः स्वध्वरस्तेन चरति स्वाध्वरिकः। शोभनाङ्गकः स्वङ्गः, तस्यापत्यं स्वाङ्गिः। व्यङ्गो विकलाङ्गः, तस्यापत्यं व्याङ्गिः। स्वपतौ साधुः स्वापतेयः। [व्यवहारेण चरति व्यावहारिकः।] व्यडस्यापत्यं व्याडिः।

आकृतिगणोऽयम्। येषामैजागमो न दृश्यते तेऽत्र द्रष्टव्याः। व्यायामः प्रयोजनमस्य व्यायामिक इत्यादीनि केचित् ॥२॥ इति स्वागतादिः ॥

[अथ अनुशतिकादिः]

'अनुशतिकादीनां च' (अ० ७।३।२०)। अनुशतिक इत्येवमादीनां शब्दानां ञिति णिति किति च तद्धिते परे पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्भवतीति तदर्थः। तत्रापेक्षिता अनुशतिकादयः संगृह्यन्ते पद्यद्वयेन।

अनुशतिकपरस्त्रीसर्वलोकासिहत्याः
कुरुकतपरलोकाङ्गारवेणवस्यहत्याः।
अनुहरदनुहोडावस्यहेतीहलोकौ
पुरुषपरकसर्वः सर्वभूमिप्रयोगौ ॥३॥

शतेन क्रीतः शतिकः, अनुगतः शतिकेनानुशतिकस्तस्येदमानुशतिकं सञ्चरणम्। परस्त्रिया इदं पारस्त्रैणं सङ्गतम्। सर्वलोके विदितः सार्वलौकिकः। असिहत्यायां भव आसिहात्यम्। कुरुकतो नाम राजर्षिस्तस्यापत्यं कौरुकात्यः। गर्गादित्वाद् यञ्। परलोकाय हितः पारलौकिको धर्मः। परलोके भवं पारलौकिकं स्वर्गसुखादि। अङ्गारवेणोरिदमाङ्गारवैणवं पात्रविशेषः। अङ्गारवेणुवंशजातिविशेषः। केचित् तु अगारधेनुशब्दमत्राधीयाना अगारधेनोरपत्यमागारधैनवो वत्स इत्याहुः। अस्यहत्यशब्दोऽस्यहत्याशब्दो वास्मिन्नस्तीति आस्यहात्योऽध्यायोऽनुवाको वा। विमुक्तादित्वादण्।

अनुहरतोऽपत्यमानुहारतः। अनुहोडः शकटविशेषस्तेन चरत्यानुहौडिकः। अस्यहेतिः प्रहरणमस्येत्यास्यहैतिकः। गणपाठसामर्थ्यात् समुदायादपि ठक्, विभक्तेरलुक् च। इहलोके भवमैहलौकिकम्। पुरुषपरकसर्वः=पुरुषशब्दः परो यस्मात् स पुरुषपरकस्तथाविधः सर्वः सर्वपुरुषशब्द इत्यर्थः। सर्वपुरुषाणामिदं सार्वपौरुषम्। सर्वभूमेरीश्वरः सार्वभौमः, सर्वभूम्यां विदित इति वा। प्रयोगमर्हति प्रयोगे भवं वा प्रायौगिकम् ॥३॥

ष्यञि राजपुरुष इह कुरुपाञ्चालाः सूत्रनड उदकशुद्धः।
अनुसंवत्सरबध्योगावनुसंवरणमपि च पुष्करसत् ॥४॥

ष्यञि राजपुरुष इत्यस्य ष्यञ्प्रत्ययप्रकृतिभूत एवास्मिन् गणे वेदितव्य इत्यर्थः। राजपुरुषस्य भावः कर्म वा राजपौरुष्यम्। कुरवश्च पाञ्चालाश्च कुरुपाञ्चालास्तेषु भवः कौरुपाञ्चालः। सूत्रनडस्यापत्यं सौत्रनाडिः। उदकशुद्धस्यापत्यमौदकशौद्धिः। संवत्सरं संवत्सरं प्रति इति संवत्सरस्य पश्चादिति वानुसंवत्सरम्, तत्र दीयत आनुसांवत्सरिकम् ऋणं श्राद्धं वा। उं शम्भुं गच्छत्यभियातीत्युगः कन्दर्पः। वध्यो निग्राह्य उगो येन स बध्योगो नाम कश्चिद् ऋषिस्तस्यापत्यं बाध्यौगः। बिदादेराकृतिगणत्वादण्। अनुसंवरणस्यापत्यमानुसांवरणिः। पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिराचार्यः।

आकृतिगणोऽयम्। तेन अन्येऽपीह बोध्याः। तथाहि—अभिगमोऽभिगमनमर्हत्याभिगामिकः। शतकुम्भो नाम पर्वतस्तत्र भवं शातकौम्भं सुवर्णम्। सुखेन शयनं सुखशयनं तत्पृच्छतीति सौखशायनिकः। चतस्रो विद्याश्चतुर्विद्या एव चातुर्वैद्यम्। चत्वारो वेदा इत्यर्थः। अधिभूतं भवमाधिभौतिकं

सुखादि। अध्यात्मादित्वाट्ठक्। संक्रममर्हति सांक्रामिका गुणादयः। यथा वायौ गन्धः, सलिले उष्णता। प्रतिभुवः कर्म भावो या प्रातिभाव्यम्। यथाहुः स्मृतिकाराः—

'भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं दानमविभक्तेन तु स्मृतम्॥'
(द्र०—याज्ञ०२।५२)

इति। अजातशत्रोरिदमाजातशात्रवम्, परिमण्डलस्य भावः पारिमाण्डल्यमणुपरिमाणमित्यादिः॥४॥ इति अनुशतिकादिः॥

[अथ क्षिपकादिः]

'क्षिपकादीनां चोपसंख्यानं कर्तव्यम्' इति 'न यासयोः' (अ० ७।३।४५) इति सूत्रे वार्तिकं पठ्यते। क्षिपकादीनां शब्दानां कात्पूर्वस्याकारस्येकारो न भवत्यापि पर इति तदर्थः। 'प्रत्ययस्थात् कात् पूर्वस्य' (अ० ७।३।४४) इति सूत्रेण प्राप्तस्येत्वस्य प्रतिषेधार्थमिदं वचनमारब्धम्। तत्रापेक्षिताः क्षिपकादयः संगृह्यन्त एकेन पद्येन।

क्षिपका ध्रुवका लहकाऽलकया चरका चटका करकैडकया।
अवका ध्रुवकाऽपि च सेवकया क्षिपकादिरयं सह कन्यकया॥५॥

क्षिपतीति क्षिपका आयुधविशेषः। 'क्वुन् शिल्पिसंज्ञयोः' (उणा० २।३३) इति क्वुन्। कित्वाल्लघूपधगुणो न। एवमुत्तरत्रापि यथायथं बोध्यम्। 'धुवि धूनने' (द्र०—धातु० ६।१०६)। धुवतीति धुवका आवपनविशेषः। हलतीति लहका[1] नाम काचित् पुरी। पृषोदरादेराकृतिगणत्वाद् वर्णविपर्ययः। अलतीति अलका धनेश्वरनगरी। चरतीति चरका व्रतचारिणी। चटका पक्षिविशेषः। करका मेघोपलः। 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च'। द्वयोर्मेघोपले' (द्र०—मेदिन्यां कत्रिके-५४-५५) इति मेदिनीकोशात् पुंस्यपि। एडका अविजातिः। अवतीत्यवका शैवलम्। ध्रुवैव ध्रुवका। सेवत इति सेवका दासी। कन्यैव कन्यका।

आकृतिगणोऽयम्। तेन यथाशिष्टप्रयोगमन्येऽपि द्रष्टव्याः॥५॥ इति क्षिपकादिः॥

[अथ न्यङ्क्वादिः]

---

१. 'हलका' इत्युपलभ्यते हस्तलेखे। वर्णविपर्ययत्वाद् 'लहका' इति भाव्यम्।

'न्यङ्क्वादीनां च' (अ० ७।३।५३)। न्यङ्कु इत्येवमादीनां शब्दानां सिध्यनुगुणं कुत्वं भवतीति तदर्थः। तत्रापेक्षिता न्यङ्क्वादयः संगृह्यन्ते पद्यद्वयेन न्यङ्कुरित्यादि—

न्यङ्कुः श्वपाकमद्गुर्व्यतिषङ्गकपोतपाकवक्राश्च ।
तक्रं दूरेपाकस्तथा फलेपाकमांसपाकौ स्तः ॥६॥

नितरामञ्चतीति न्यङ्कुर्मृगः। 'नावञ्चेः' (उणा० १।१७) इत्यौणादिक उप्रत्ययः। श्वानं पचतीति श्वपाकश्चाण्डालः, 'कर्मण्यण्' (अ० ३।२।१)। मज्जतीति मद्गुर्जलकुक्कुटः। मज्जतेरौणादिक उप्रत्यये (उणा० १।७) उपधाया दत्वम्। व्यतिषञ्जनं व्यतिषङ्गः=कर्मद्वयस्य सह प्रयोगः। यथा —'गृह्याग्निमतां बह्वृचानामखण्डपर्वणि दर्शश्राद्धपिण्डपितृयज्ञयोरेकस्मिन् दिने प्राप्तौ व्यतिषङ्गेणानुष्ठानम्।' व्यतिपूर्वात् सञ्जतेर्भावे घञि 'चजोः कु घिण्यतोः' (अ० ७।३।५२) इति कुत्वेनान्यथासिद्धत्वादत्रास्य वक्ष्यमाणानुषङ्गशब्दस्य च पाठे फलं मृग्यम्।[1]

कपोतं पारावतं पचतीति कपोतपाको व्याधः। वञ्चयतीति वक्रं कुटिलम्। औणादिको रक् प्रत्ययः (उणा० २।१३)। एवं तञ्चत्युदकेन वृद्धिं गच्छतीति तक्रमुदश्वित्। दूरं पचतीति दूरेपाकः। यो विप्रकृष्टकालेन परिपक्वो भवति स तथाविधो वृक्षविशेषो धान्यविशेषो वा। निपातनादेत्वम्। क्रियाविशेषणस्य कर्मत्वात् कर्मण्यण्। योऽन्नं व्रतयन् फलान्येवात्मर्थि पचति स फलेपाकः। एत्वं निपातनादेव। मांसं पचतीति मांसपाको मांसभक्षकः ॥६॥

मेघनिदाघार्घा अप्यवदाघोलूकपाकभृगवः स्युः ।
अनुषङ्गमूलपाकावित्याकृतिगणमिमं जगदुः ॥७॥

मेहति सिञ्चतीति मेघः पर्जन्यः। पचाद्यच्। नितरां दह्यन्ते तप्यन्ते जना अस्मिन्निति निदाघो ग्रीष्मः। अधिकरणे घञ्। अर्घ्यते पूज्यतेऽनेनेत्यर्घ उपचारविशेषो मूल्यं वा। अवदहनमवदाघः। उलूकं पचतीत्युलूकपाको व्याधः। भृज्जन्ति पक्वा भवन्त्यनेनेति भृगुर्महर्षिः। तटं चानुषजत्यनेने-

1. काशिकाकारस्तु 'व्यतिषजतीति पचाद्यच्' इत्येवं व्युत्पादयति (७।३।५३)।

त्यनुषङ्गो गौणसम्बन्धः । इदमपि व्यतिषङ्गवदन्यथा सिद्धम् । मूलानि पचतीति मूलपाकः । फलपाकशब्दस्यापि तात्पर्यम् ।

आकृतिगणोऽयम् । तेनान्येऽपि क्षणेपाकादयो लक्ष्यानुसारेणात्र वेदितव्याः ॥७॥ इति न्यङ्क्वादिः ॥

इति श्रीमदगस्तिमहर्षिवंश्यस्य भट्टयज्ञेश्वरस्य कृतौ

स्वीयगणरत्नावलीवृत्तौ

॥ सप्तमोऽध्यायः ॥

# ॥ अथाष्टमोऽध्यायः ॥

## [अथ यवादिः]

'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (अ० ८।२।६) । मवर्णान्तादवर्णान्तान्मवर्णोपधादवर्णोपधाच्च प्रातिपदिकात् परस्य मतुपो मकारस्य वकारो भवति यवादिभ्यः परस्य तु न भवतीति तदर्थः । मान्तात्–किंवान् शंवान् । अवर्णान्तात्—धनवान्, विद्यावान् । मकारोपधात्––शमीवान् । अवर्णोपधात्–पयस्वान्, भास्वान् । यवादिभ्यः परस्य तु मतुपो मस्य वत्वं न भवति । अत्रापेक्षिता यवादयः संगृह्यन्ते पद्येनैकेन ।

यवोर्मिदल्मिध्रजिसञ्जिभूमयो
द्राक्षाच्छ्रजीक्षुद्रुहरित्ककुन्मरुत् ।
क्रुञ्चानिजी इन्दुसिजी वशा मधु
ध्राक्षाकृमी अत्र गरुद्धनू इति ॥१॥

यवाः सन्ति यस्मिन्निति यवमान् क्षेत्रप्रदेशः । ऊर्मिमान् समुद्रः । दल्मिमान्, ध्रजिमान्, सञ्जिमान् भूमिमान्, प्राकारः, द्राक्षामान् आक्रीडः, छ्रजिमान् ग्रामः, इक्षुमती नदी, द्रुमतो, हरिन्मान्, ककुदस्येति ककुद्मान् वृषभः, मरुन्मान् प्रदेशविशेषः स्वर्लोको वा ।

क्रुञ्चामान्, निजिमान्, इन्दुमती राका काचिदङ्गना वा; सिजिमान्, वशामान् वन्ध्यापतिः, मधुमान् वनस्पतिः पर्वतो वा, ध्राक्षामान्, कृमिमान्, गरुत्मान् गरुडः । जश्त्वानुनासिकयोरभावो निपातनात् । एवं ककुद्मानित्यत्रापि निपातनादनुनासिकाभावः । हनुमान् मारुतः ।

आकृतिगणोऽयम् । तेनाकृतवत्वो मतुब् यवादिगणे द्रष्टव्यः । यथा–भानुमान्, स्तिमिमान् इत्यादि । अत्र केषुचिन् मादुपधाया इत्यनेन, केषुचित् 'संज्ञायाम्' (अ० ८।२।११) इत्यनेन, केषुचिच्च 'झयः' (अ० ८।२।१०) इत्यनेन वत्वं प्राप्तम् । अयवादिभ्य इत्युक्ते न भवति ॥१॥ इति यवादिः ॥

## [अथ कस्कादिः]

'कस्कादिषु च' (अ० ८।३।४८) इति । एषु इण उत्तरस्य विसर्गस्य

षकारोऽन्यस्य तु सकारो भवतीति तदर्थः। तत्रापेक्षिताः कस्कादयः सार्द्धपद्यद्वयेन [संगृह्यन्ते]।

**कस्कः कौतस्कुतो भ्रातुष्पुत्रोऽयस्कान्तभास्करौ[1]।**
**सद्यस्कालः शुनस्कर्णः सद्यस्क्रीश्च बहिष्फलम् ॥२॥**

'नित्यवीप्सयोः' (अ० ८।१।४) इत्यनेन प्रथमान्तस्य क इति पदस्य द्वित्वम्। अथ कथं कः कोऽत्र भोः' इति नाटकादौ प्रयुज्यते? उच्यते—रूढिविषयशब्दानामत्र गणे पाठस्याभिप्रेतत्वाद् वीप्सायां द्विरुक्तस्यैवात्र ग्रहणम्। अत एव 'गच्छति कः को वा तिष्ठति' इत्यादौ सत्वं न भवति। 'कः कोऽत्र भोः' इत्यत्र सम्भ्रमेण द्विरुक्तिर्न तु वीप्सया। 'कस्कः कवीनां महतां श्लोको न हि मनोरमः।' यं यं शृणुमस्स सर्वोऽपि मनोरम इत्यर्थः।

कौतस्कुतः। कुतः कुत आगत इत्यर्थः। अव्ययात् त्यपि प्राप्ते गणपाठसामर्थ्यादण्। कौतस्कुती वार्ता। भ्रातुष्पुत्रः। 'ऋतो विद्यायोनिसम्बन्धेभ्यः' (अ० ६।३।२३) इति सूत्रेण समासेऽपि षष्ठ्या अलुक्। अयसः कान्तः प्रियो यस्तदाकर्षकः स तथाभूतोऽयस्कान्तो लोहचुम्बक उपलः। भास्करः। सद्यस्कालः। इदं समस्तमसमस्तं वा। यथा—सद्यस्काला युयुत्सूनाम्, सद्यस्काला पौर्णमासीति। शुनस्कर्णः। सद्यः क्रीणातीति सद्यस्क्रीः। बहिः फलं यस्य तद् बहिष्फलम्। इदं समस्तमसमस्तं वा ॥२॥

**धनुष्कपालं साद्यस्क्रस्तमस्काण्डमहस्करः।**
**कांस्कान् सर्पिष्कुण्डिका च यजुष्पात्रदिवस्पती।**
**अयस्काण्डस्तथा मेदस्पिण्ड इत्युदितो गणः ॥३॥**

धनुश्च कपालं च धनुष्कपालम्। पृथक्पदे वा। सद्यस्क्रियोऽपत्यं साद्यस्क्रः। सद्यस्क्रीशब्दपाठेन सिद्धावस्येह पाठश्चिन्त्यः। तमसां काण्डं तमस्काण्डम्। अहर्दिनं करोतीत्यहस्करः सूर्यः। कांस्कान् सिञ्चतीति वीप्सायां पदद्विर्भावः। सर्पिषः कुण्डिका आवपनं सर्पिष्कुण्डिका। यजुषः पात्रं यजुष्पात्रम्। दिवः स्वर्गलोकस्य पतिर्दिवस्पतिर्वासवः। 'षष्ठ्या पतिपुत्र' (अ० ८।३।५३) इत्यनेन तु वैदिकप्रयोगस्य निर्वाहः। लौकिकप्रयोगसिद्ध्यर्थं कस्कादावयं ज्ञेयः।

---

१: '०पुत्रोऽहस्करभास्करौ' इत्युपलभ्यते हस्तलेखे। वृत्तौ तु 'अयस्कान्त' इत्येव। 'अहस्कर' शब्दोऽग्रिमकारिकायामुपलभ्यते।

अयसो लोहस्य काण्डोऽयस्काण्डः। मेदसः शारीरधातुविशेषस्य पिण्डो मेदस्पिण्डः। सर्पिष्कुण्डिका, धनुष्कपालम्, यजुष्पात्रमित्येषामसमासे 'इसुसोः सामर्थ्ये' (अ० ८।३।४४) इत्यनेन प्राप्तं वैकल्पिकं षत्वं बाधित्वा कस्कादित्वान्नित्यं षः। व्यपेक्षाविरहेऽपि 'तिष्ठतु सर्पिष्कुण्डमानय' इत्यादौ भवत्येव षत्वं कस्कादिगणे पाठादिति एके।

आकृतिगणोऽयम्। तेन अयस्कुण्डं वाचस्पत्यादयोऽत्र वेदितव्याः ॥३॥ इति कस्कादिः॥

## [अथ सुषामादिः]

'सुषामादिषु च' (अ० ८।३।९८)। इण्कुभ्यां परस्य सुषामादीनां सस्य मूर्द्धन्यादेशो भवतीति तदर्थः। तत्रापेक्षिताः सुषामादयः संगृह्यन्ते पद्यद्वयेन सुषाम इत्यादिना—

सुषामनिःषामनिषेधदुष्ठवः
सुषेधदुःषेधसुषन्धिसुष्ठवः।
प्रतिष्णिका दुन्दुभिषेवणं निसो
दुःसः परः सन्धिरतोऽपि साम च ॥४॥

शोभनं साम यस्यासौ सुषामा ब्राह्मणः। शोभनं साम प्रियवाक्यं यस्याः सा सुषाम्नी पुरन्ध्री। शोभनं साम सुषाम। एवं निर्गतं साम यस्मान्निःषामा। अत्र 'सात्पदाद्योः' (अ० ८।३।१११) इति प्रतिषेधात् षत्वाप्राप्तावयमारम्भः। निकृष्टः सेधो निषेधः प्रतिषेधः। नीत्यस्य क्रियान्तरेऽन्वयाद् सेधतिं प्रत्यनुपसर्गत्वेन 'उपसर्गात् सुनोतिसुवति' (अ० ८।३।६५) इत्यादिना षत्वाप्राप्तावत्रास्य पाठः। निन्दितं स्थानं दुष्ठु। 'अपदु सुषु स्थः कुः' (द० उणा० १।२५) इत्युणादिसूत्रेण दुस्पूर्वकात् स्थाधातोः कुप्रत्ययेनेदं साधु। स्वरादित्वादव्ययम्। दुःस्थितिः, दुःस्थितम् इत्यादौ षत्ववारणाय कृतेन 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' (सि० कौ० २९८७) इति वचनेनानुपसर्गत्वादत्र षत्वाप्राप्तिः। एवं सुष्ठु इत्यत्र 'सुः पूजायाम्' (अ० १।४।९४) इति कर्मप्रवचनीयोऽनुपसर्ग इति षत्वाप्राप्तिः।

शोभनः सेधः, शोभनः सेधो वास्येति सुषेधः। निन्दितः सेधो दुःषेधः। दुष्टः सेधोऽस्येति बहुव्रीहिर्वा। षत्वाप्राप्तिः पूर्ववत्। शोभनः सन्धिः सुषन्धिः। विग्रहान्तरेण बहुव्रीहिर्वा। पदादित्वात् षत्वाप्राप्तिः। प्रतिस्नात्यस्यामिति प्रतिष्णिका द्रोणी। दुन्दुभेः सेवनं दुन्दुभिषेवणम्। निर्गतः

सन्धिः, निर्गतः सन्धिरस्येति वा निःषन्धिः। दुष्टः सन्धिः, दुष्टः सन्धिरस्येति वा दुःषन्धिः। अतोऽपि=दु शब्दादपि साम। अपिना पूर्वोक्तस्य निःषाम इत्यस्य समुच्चयः। एषु पदादित्वात् षत्वाप्राप्तिः॥४॥

जलाषाहं गौरिषक्थः संज्ञा नौषेचनं स्मृतम्।
संज्ञायामेत्यगान्नक्षत्राद्वेति कथितो गणः॥५॥

जलानि सहत इति जलाषाहं सरोवरम्। यन्न ग्रीष्मेऽपि शुष्यति। गौर्याः सक्थीव सक्थ्यस्य गौरिषक्थः। कस्यचिन्मुनेः संज्ञैषा। 'ङ्यापोः' (अ० ६।३।६३) इति ह्रस्वः। नाव. सेचनं नौषेचनम्। वर्द्धमानस्तु नौषचिकां पपाठ (गण० पृ० १०८)। अन्ये पुनर्नावं स्यतीति नौषिका क्षेपणीदण्ड इत्याहुः।

'एति संज्ञायामगात्' इति गणसूत्रमत्र छन्दोऽनुरोधात् पदव्यत्यासेनोक्तम्। इण्कुभ्या परस्य एत्परकसकारस्य मूर्धन्यादेशो भवति संज्ञायां गम्यमानायामिति तदर्थः। हरयः सेनाऽस्य हरिषेणो दाशरथी राजान्तरं वा। वारीणि सेनाऽस्य वारिषेणो मेघः। सुषेणो वैद्यकाचार्यविशेषः। 'नक्षत्राद्वा' इत्यपि गणसूत्रम्। एति संज्ञायामगादित्यनुवर्त्तते। रोहिणी सेना यस्य रोहिणिषेणः, रोहिणिसेनः। भरणिषेणः, भरणिसेनः, 'ङ्यापोः' (अ० ६।३।६३) इति ह्रस्वः।

एति किम्? हरिसक्थः। संज्ञायां किम्? पृथ्वी सेना यस्य पृथुसेनो राजा महाराजः। अगात् किम्? शतभिषक्सेनः।

यद्यपि सूत्रद्वयमिदमष्टाध्याय्यां दृश्यते (८।३।९९, १००), तथापीमे गणसूत्र एव, सिद्धान्तकौमुद्याम् (१४७०, १४७१) एतत्सूत्रद्वयव्याख्यानोत्तरम् 'आकृतिगणोऽयम्' इत्युक्तत्वात्। नागेशभट्टस्याप्ययमेवाशयः। भाष्यकृताऽपि 'अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः' (द्र०—महा० ८।३।९८) इत्युक्तम्। तेनास्याकृतिगणत्वं सूचितं सूत्रपाठक्रमप्राप्तं प्रकृतसूत्रद्वयं च न व्याख्यातम्। तेनाष्टाध्यायीस्थं नेदं सूत्रद्वयमित्यपि सूचितं भवति। यद्वा 'सुषामादिषु च' इत्यनेन सिद्धस्यैव षत्वस्य प्रपञ्चार्थं सूत्रद्वयम्। स्पष्टा चेयं रातिः 'क्षुभ्नादिषु च' (अ० ८।४।३९) इत्यस्य भाष्यकैयटयोः। तत्र हि 'अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः' इति भाष्यम्। 'न भाभूपू' (अ० ८।४।३४) इत्यादिरस्यैव प्रपञ्च इति कैयटः॥५॥ इति सुषामादिः॥

[अथ सवनादिः]

'न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्' (अ० ८।३।११०)। रपरस्य

सकारस्य सृप्यादीनां चतुर्णां धातूनामवयवसकारस्य सवनादिशब्दानां सकारस्य चेण्कुभ्यां परस्य मूर्द्धन्यादेशो न भवतीति सूत्रार्थः। रंपरोदाहरणं यथा—विस्रंसिकायाः कर्णाभ्यां जुहोति। विस्रंसिका यज्ञायुधविशेषः। विस्रब्धं कथयति। 'सृप्लृ गतौ' (धातु० १।७०६)—पुरा क्रूरस्य विसृपः। 'सृज विसर्गे' (धातु० ४।६७)—वाचो विसर्जनात्। स्पृश—दिवि स्पृशम्। स्पृह—निस्पृहं कथयति। अत्रापेक्षिताः सवनादयः शब्दाः संगृह्यन्ते पद्यद्वयेन।

**सवनमुखे सवनमुखे सवने सवनेऽनुसवनमनुसवनम्।**
**मुसलं मुसलं गोसनिमश्वसनिं शकुनिसवनमिह कथितम्॥६॥**

सवनस्य सुत्याकर्मणो मुखं प्रारम्भः सवनमुखम्। अत्र द्विरुक्तिर्वीप्सायाम्। सवनमुखे सवनमुखे। सवने सवने। सवनस्य पश्चादनुसवनमनुसवनम्। 'षणु दाने' (धातु० ८।२)। सवनं सनिः गोसनिः=गोदानम्। अश्वसनिः। शकुनिसवनम्=पक्षिमेधः॥६॥

**सोमे सोमेऽथ सुते सुते बृहस्पतिसवः किसं किसम्।**
**सविसं विसं द्विरुक्तं संवत्सर इति गणः प्रोक्तः॥७॥**

सोमे सोमे, सुते सुते इति सवने सवने इत्यर्थकम्। बृहस्पतिसवो यागविशेषः। किसं किसम्। विसं विसम्। संवत्सरे संवत्सरे। अत्र सर्वत्र श्रौतोदाहरणेषु 'पूर्वपदात्' (अ० ८।३।१०६) इत्यनेन छन्दोविषयेण सूत्रेण प्राप्तं षत्वं 'न रपर' इत्यादिना सूत्रेण निषिध्यते। पूर्वपदं च तत्र पूर्वत्र विद्यमानं पदमपि नहि केवलं समासावयवमात्रम्॥७॥ इति **सवनादिः**॥

## [अथ क्षुभ्नादिः]

'क्षुभ्नादिषु च' (अ० ८।४।३९)। क्षुभ्नेत्येवमादिषु शब्देषु रषाभ्यां परस्य नस्य णत्वं न भवतीति सूत्रार्थः। तत्रापेक्षिताः क्षुभ्नादयः संगृह्यन्ते पद्यद्वयेन।

**क्षुभ्नातृप्नू यङ्नृतिरग्निगहनं नदी नन्दनं नगरम्[1]।**
**उत्तरपदं निवासानूपनिवेशं च नर्तनं ज्ञेयम्॥८॥**

क्षुभ्नेति श्नाप्रत्ययान्तस्य निर्देशः। 'क्षुभ सञ्चलने' (धातु० ९।५१)

१. 'गहननंदिनंदिनं नगरम्' इत्युपलभ्यते हस्तलेखे। वृत्त्यनुसारं पाठः शोधितः।

क्र्यादिः। क्षुभ्नाति क्षुभ्नीतः क्षुभ्नन्ति। तृप्नु इति श्नुविकरणान्तस्य निर्देशः। तृप्नोति तृप्नुतः तृप्नुवन्ति। 'नृती गात्रविक्षेपे' (धातु० ४।१०) यङन्तः। नरीनृत्यते। अग्निरित्यादीन्युत्तरपदानि वेदितव्यानि। शराणामग्निः शराग्निः। परितो गहनं परिगहनम्। हरेर्नदी हरिनदी। हरेर्नन्दनो हरिनन्दनो जयन्तः। हरिनन्दनमिन्द्रोद्यानम्। गिरौ नगरं गिरिनगरम्। शराणां निवासः शरनिवास इषुधिः। दर्भाणामनूपो दर्भानूपः। शराणां निवेशः शरनिवेशः। परिनर्तनम् ॥८॥

सनूनमनचतुर्हायनमिरिकाकर्मारहरिकुबेरेभ्यः ।
तिमिरात् परं समीराद् वनं तथाचार्यभोगीनः ॥९॥

नुः पुरुषस्य नमनं नृनमनम्। चत्वारि हायनानि यस्य तच्चतुर्हायनम्। इरिकाणां तृणविशेषाणां वनमिरिकावनम्। कर्माराणां लोहकाराणां वनं कर्मारवनम्। हरेरिन्द्रस्य सिंहस्य वा वनं हरिवनम्। कुबेरस्य वनं कुबेरवनं चैत्ररथम्। तिमिरावृतं वनं तिमिरवनं निकुञ्जस्थानम्। समीरप्रधानं वनं समीरवनम्। आचार्यस्य भोग आचार्यभोगः। आचार्यकर्तृको भोग इत्यर्थः। आचार्यभोगाय हित आचार्यभोगीनश्चन्दनादि। अत्र 'अड्व्यवायेऽपि' (अ० ८।४।२) इति णत्वं प्राप्तं क्षुभ्नादित्वान्निषिध्यते। न चात्र समानपदत्वाभावः शङ्क्य. शब्दरत्नकृता समाहितत्वात्। तथा हि—'रषाभ्यां नो ण. समानपदे' (अ० ८।४।१) इत्यत्र 'पदे' इत्येतावतैव एकस्मिन् पदे इत्यर्थे सिद्धे समानग्रहणं समानमेव पदमित्येवकारार्थान्तर्भावेण समासलाभार्थम्। तेनाखण्डपदे इत्यर्थः। तत्त्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वमिति। तेन मातृभोगीण इत्यादि सिद्धम्।

क्षुभ्नाति नरीनृत्यते इत्यादावपि 'अट्कुप्वाङ्' (अ० ८।४।२) इत्यनेन णत्वे प्राप्ते, परिगहनमित्यादौ 'कृत्यचः' (अ० ८।४।२९) इत्यनेन, शराग्निरित्यादौ च 'पूर्वपदात् संज्ञायाम्' (अ० ८।४।३) इत्यनेन णत्वे प्राप्तेऽनेन निषेध.।

क्षुभ्नादिराकृतिगणः। 'अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः'(महा०८।४।३९) इति भाष्योक्तेः। तेन नरवाहनः स्वरभानुरित्यादौ

'पूर्वपदात् संज्ञायाम्' इति णत्वं न भवतीति सर्वेष्टसिद्धिः ॥८॥ इति क्षुम्नादिः ॥

इति श्रीमदगस्तिमहर्षिवंशस्य भट्टयज्ञेश्वरस्य
कृतौ
स्वीयगणरत्नावलीवृत्तौ
अष्टमोऽध्यायः
॥ समाप्तः ॥

भट्टयज्ञेश्वरकृतो ग्रन्थोऽयं पूर्णतां गतः ।
शाके रसाङ्कमुनिभू(१७९६)मिते मासि तपोऽभिधे ॥१॥

तैरेव तोषमायान्तु ये स्युर्विरला गुणाः ।
अपि दोषानुपेक्षन्तां गुणग्राह्या विपश्चितः ॥२॥

अस्य ग्रन्थस्य निर्माणे गणरत्नमहोदधिः ।
अभूवन् मुख्यः सहायोऽन्ये ग्रन्था इत्युपकारकाः ॥३॥

अर्थं प्रमाणान्तरत उपलभ्यैव कुर्वते ।
ग्रन्थान् बुधाः कः समर्थः सर्वापूर्वस्य कल्पने ॥४॥

सर्वज्ञाय नमस्तस्मै देवाय परमात्मने ।
कृत्यकृत्या भवन्तीह यत्कृपालेशतो जनाः ॥५॥

इति सुवृत्तिको गणरत्नावलीग्रन्थः
॥ समाप्तः ॥

—:०:—

# शब्द-सूची

गणरत्नावल्यां ये शब्दा आकृतिगणत्वेन निर्दिष्टास्तेऽत्र ° चिह्नेन प्रदर्शिताः, तथा चान्यैराचार्यैः स्व-स्वगणपाठेषु निर्दिष्टा यज्ञश्वरभट्ट-सम्मताश्च शब्दा अत्र * चिह्नेन प्रदर्शिताः।

शब्दसूच्यामस्यां प्रथमा संख्या पृष्ठसंख्यां द्वितीया च पङ्क्तिसंख्यां द्योतयति।

## इ

 




ध

य

## ह

# संशोधन-पत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २१ | आज्ञाति० | अज्ञाति० |
| २२ | ७ | गणरत्ना० | गणरत्न० |
| ,, | २६ | आक्नति० | आकृति० |
| ,, | २६ | सन्निविष्टिः | सन्निविष्टः |
| २५ | २२ | त्यत्तद् यददश्चैत० | त्यत्तद्यदश्चैत० |
| ३३ | १० | अवदम् | अवदत्तम् |
| ३७ | ११ | कुर्याद्यदीद्यादिरर्थः | कुर्याद्यदीत्यादिरर्थः |
| ४२ | २८ | चादिः | साक्षादादिः |
| ४६ | २२ | उदपादन० | उदपान० |
| ६२ | २९ | शिखिर० | शिखर० |
| ६४ | २८ | ०घ्रृताः | ०घृताः |
| ६६ | ५ | ०श्वेडित० | ०क्ष्वेडित० |
| ,, | १० | रूप्यमाणो | रूप्यमाषो |
| ६७ | २ | ०षण्डा | ०खण्डा |
| ,, | ९ | [षण्डं ··समूहः ।] | अयमंशोऽपनेयः |
| ६९ | २२ | बध्तातीति | बध्नातीति |
| ७० | २ | इत्येमा० | इत्येवमा० |
| ,, | २ | ०प्रत्यस्य | ०प्रत्ययस्य |
| ७३ | ८ | औब्जकयश्च | औब्जयश्च |
| ,, | ८ | ०चोब्जककुभाः | ०चोब्जकुभाः |
| ७९ | १९ | ०लेटौ | ०लोटौ |
| ८३ | १ | सुरः | सूरः |
| ८५ | ४ | प्रातिपादि० | प्रातिपदि० |
| ९८ | १४ | वृश० | वृष० |
| १०६ | ३ | मान्त्रत्यः | मान्त्रित्यः |
| ११० | २१ | विष्टपुर | विष्टपर |
| १२१ | १० | [वैश्व० | [विश्व० |
| १३१ | २ | [सौर० | [शौर० |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४१ | २५ | औज्जनयकः | औज्जयनकः |
| १४८ | १८ | ०भावा० | ०भाषा० |
| ,, | २० | ०भावः | ०भाषः |
| १५० | ३ | दरदो | दरत् |
| १६३ | १ | खरः | क्षरः |
| १७१ | २१ | सर्वभेदः | सर्ववेदः |
| १८४ | १५ | मांसहन् | मांसहनू |
| १८६ | २ | ०मस्त्यस्येत्यङ्गना | ०मस्त्यस्या इत्यङ्गना |
| १८९ | १ | अस्त्री | अस्त्री |
| १९१ | फोलियो | गोषदादिः (५।२।६२) | देवपथादिः (५।३।१००) |
| १९९ | २२ | काष्ण्यों | काष्र्ण्यौ |
| २०१ | ३ | प्रतिपदम् | प्रतियदम् |
| २०४ | १ | गुणदी | गुणपदी |
| १०८ | २२ | सूदकः | सूदः |
| २१२ | २२ | चूर्णं | चूर्णम् । |
| २१६ | ४ | आर्द्र० | आर्द्ध० |

# परिशिष्टम्

| पृष्ठे | पंक्तौ | उद्धरणम् | आकर-स्थानम् |
|---|---|---|---|
| २७ | २ | 'जातां ···· वान्यरूपाम् ।' | मेघ० ८०॥ |
| ,, | ११-१२ | 'उमा ··· चकार।' | कुमार० ७।२४ |
| २८ | २४ | 'हन्त ते कथयिष्यामि।' | रामा० १।४८।१४; गी० १०।१९॥ |
| ३० | २१-२२ | 'प्रवृत्ति ·· धियः' | किरात० १।२५॥ |
| ३१ | ७ | 'लोकं ···· माना' | रघु० ३।५३।२३॥ |
| ३४ | ५-७ | 'अहो····· वीर्यः ।' | कुमार० ३।२० |
| ,, | ७ | 'हत · विपाकः ।' | शिशु० ११।६४॥ |
| ,, | १३-१४ | 'ननु ···· विपश्चितः ।' | किरात० २।५॥ |
| ५३ | १७-१८ | 'भिन्नेषु ···· संख्याम्' | द्र०—शिशु० ४।४६॥ |
| ६६ | १०-११ | 'द्वेकृष्णले · पलमेव च ॥" | याज्ञ० १।३६४-५॥ |

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

१. ऋग्वेदभाष्य (संस्कृत हिन्दी; ऋग्वेदादिभाष्यभूमिका सहित)—प्रति भाग सहस्राधिक टिप्पणियां, १०-११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ४०-००, द्वितीय भाग ३५-००, तृतीय भाग ४०-००।

२. यजुर्वेदभाष्य-विवरण—ऋषिदयानन्दकृत भाष्य पर पं० ब्रह्मदत्त-जिज्ञासुकृत विवरण। प्रथम भाग ११०-००, द्वितीय भाग ५०-००।

३. तैत्तिरीय-संहिता—मूलमात्र, मन्त्रसूचीसहिता। ५०-००

४. तैत्तिरीय-संहिता-पदपाठः—५०वर्ष से दुर्लभ ग्रन्थ का पुनः प्रकाशन, बढ़िया सुन्दर जिल्द। १००-००

५. अथर्ववेदभाष्य—श्री पं० विश्वनाथ जी वेदोपाध्याय कृत। ७-८ काण्ड ४०-००, ९-१० काण्ड ४०-००, ११-१३ काण्ड ३५-००, १४-१७ काण्ड ३०-००, १८-१९ काण्ड २५-००, बीसवां काण्ड २५-००। काण्ड ५-६ छप रहे हैं।

६. ऋग्वेदादिभाष्य-भूमिका—पं० युधिष्ठिर मीमांसक द्वारा सम्पादित एवं शतशः टिप्पणियों से युक्त। साधारण जिल्द ३०-००, पूरे कपड़े की ३५-००।

७. ऋग्वेदादिभाष्य-भूमिका-परिशिष्ट—भूमिका पर किए गए आक्षेपों के ग्रन्थकार द्वारा दिये उत्तर। ४-००

८. माध्यन्दिन (यजुर्वेद) पदपाठ—शुद्ध संस्करण। ४०-००

९. गोपथ-ब्राह्मण (मूल)—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध और सुन्दर संस्करण। ५०-००

१०. वैदिक-सिद्धान्त-मीमांसा—पं० युधिष्ठिर मीमांसक लिखित वेद-विषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। नया संस्करण। यन्त्रस्थ

११. कात्यायनीय ऋक्सर्वानुक्रमणी—( ऋग्वेदीया )—षड्गुरुशिष्य विरचित संस्कृतटीका सहित। टीका का पूरा पाठ प्रथम बार छापा गया है। विस्तृत भूमिका और अनेक परिशिष्टों से युक्त। १००-००

१२. ऋग्वेदानुक्रमणी—वेङ्कटमाधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्याकार श्री डा० विजयपाल जी विद्यावारिधि। उत्तम संस्करण ३५-००, साधारण २५-००।

१३. वैदिक-साहित्य-सौदामिनी—स्व० श्री पं० वागीश्वर वेदालंकार। काव्यप्रकाश साहित्यदर्पण आदि के समान वैदिक साहित्य पर शास्त्रीय विवेचनात्मक ग्रन्थ। साधारण जिल्द ४५-००, बढ़िया जिल्द ५०-००।

१४. ऋग्वेद की ऋक्संख्या—युधिष्ठिर मीमांसक। ५-००

१५. वेद-श्रुति-आम्नाय-संज्ञा-मीमांसा (संस्कृत-हिन्दी)—यु० मी० २-५०

१६. वैदिक-छन्दोमीमांसा—यु० मी०। नया संस्करण २५-००

१७. वैदिक-स्वर-मीमांसा—यु० मी०। नया संस्करण ३०-००

१८. वैदिक वाङ्मय में प्रयुक्त विविध स्वरांकन-प्रकार—यु० मी०। ६-००

१९. वेदों का महत्त्व और उनके प्रचार के उपाय, वेदार्थ की विविध प्रक्रियाओं की ऐतिहासिक मीमांसा (संस्कृत-हिन्दी)—यु० मी०। ८-००

२०. देवापि और शन्तनु के आख्यान का वास्तविक स्वरूप—लेखक—श्री पं० ब्रह्मदत्त जी जिज्ञासु। २-५०

२१. वेद और निरुक्त—श्री पं० ब्रह्मदत्त जी जिज्ञासु। २-५०

२२. निरुक्तकार और वेद में इतिहास—श्री पं० ब्रह्मदत्त जी जिज्ञासु। २-५०

२३. त्वाष्ट्री सरण्यू की वैदिक कथा का वास्तविक स्वरूप—लेखक—श्री पं० धर्मदेवजी निरुक्ताचार्य। २-५०

२४. वैदिक-जीवन—श्री विश्वनाथ जी विद्यामार्तण्ड द्वारा अथर्ववेद के आधार पर वैदिक-जीवन के सम्बन्ध में लिखा गया अत्यन्त उपयोगी स्वाध्याययोग्य ग्रन्थ। अजिल्द १२-००, सजिल्द १६-००।

२५. वैदिक-गृहस्थाश्रम—श्री पं० विश्वनाथ जी विद्यामार्तण्ड द्वारा अथर्ववेद के आधार पर लिखित महत्त्वपूर्ण ग्रन्थ। अजिल्द २६-००, सजिल्द ३०-००।

२६. शिवशङ्करीय-लघुग्रन्थपञ्चक—इसमें श्री पं० शिवशङ्कर जी काव्यतीर्थ लिखित वेदविषयक चतुर्दश-भुवन, वसिष्ठ-नन्दिनी, वैदिक-विज्ञान, वैदिक-सिद्धान्त और ईश्वरीय पुस्तक कौन? नाम के पांच विशिष्ट निबन्ध हैं। ८-००

२७. यजुर्वेद का स्वाध्याय तथा पशुयज्ञ समीक्षा—ले०—पं० विश्वनाथ जी वेदोपाध्याय। बढ़िया जिल्द २५-००, साधारण जिल्द २०-००।

२८. शतपथब्राह्मणस्थ अग्निचयन समीक्षा—लेखक—पं० विश्वनाथजी वेदोपाध्याय। ४५-००

२९. ऋग्वेद-परिचय—श्री पं० विश्वनाथजी विद्यामार्तण्ड। ऋग्वेद का परिचयात्मक महत्त्वपूर्ण ग्रन्थ। अजिल्द १२-००, सजिल्द १६-००।

३०. वैदिक-पीयूष-धारा—लेखक—श्री देवेन्द्र कुमार जी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थपूर्वक विस्तृत व्याख्या, अन्त में भावपूर्ण गीतों से युक्त। उत्तम जिल्द १५-००, साधारण १०-००।

३१. क्या वेद में आर्यों और आदिवासियों के युद्धों का वर्णन है?—लेखक—श्री वैद्य रामगोपाल जी शास्त्री। १२-००

३२. उरु-ज्योति—डा० वासुदेवशरण अग्रवाल लिखित वेदविषयक स्वाध्याययोग्य निबन्धों का संग्रह। सुन्दर छपाई। पक्की जिल्द। १८-००

३३. वेदों की प्रामाणिकता—डा० श्रीनिवास शास्त्री। १-५०

३४. Anthology of Vedic Hymns—स्वा० भूमानन्द सरस्वती ६०-००

३५. बौधायन-श्रौत-सूत्रम्—(दर्शपूर्णमास प्रकरण)—भवस्वामी तथा सायणकृत भाष्य सहित (संस्कृत)। ४०-००

३६. बौधायन-श्रौत-सूत्रम् (आधान-प्रकरण)—सुबोधिनी वृत्ति सहित (संस्कृत)। ४०-००

३७. दर्शपूर्णमास-पद्धति—पं० भीमसेन कृत, भाषार्थ सहित। २५-००

३८. कात्यायन-गृह्यसूत्रम् (मूलमात्र)—अनेक हस्तलेखों के आधार पर हमने इसे प्रथम बार छापा है। २५-००

३९. श्रौतयज्ञमीमांसा (संस्कृत और हिन्दी)—श्रौतयज्ञों की कल्पना का आधार, उनका विकास, परिवर्तन, पशुयज्ञ आदि अनेक विषयों की सप्रमाण मीमांसा। ३०-००

४०. श्रौतपदार्थ-निर्वचनम् (संस्कृत)—अग्न्याधान से अग्निष्टोम पर्यन्त आध्वर्यव पदार्थों का विवरणात्मक ग्रन्थ। सजिल्द ४०-००

४१. संस्कार-विधि—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट। मूल्य लागतमात्र २०-००, राजसंस्करण २५-००, सस्ता संस्करण ६-००, अच्छा कागज सजिल्द १२-००।

४२. वेदोक्त-संस्कार-प्रकाश—पं० बाला जी विट्ठल गांवस्कर द्वारा मूल मराठी में लिखे गये ग्रन्थ का हिन्दी-अनुवाद। इसी का गुजराती अनुवाद संशोधित संस्कार-विधि का आधार बना। २०-००

४३. अग्निहोत्र से लेकर अश्वमेधपर्यन्त श्रौतयज्ञों का संक्षिप्त परिचय—इस ग्रन्थ में अग्न्याधान, अग्निहोत्र, दर्शपूर्णमास, सुपर्णचिति सहित सोमयाग, चातुर्मास्य और वाजपेय आदि यागों का वर्णन है। (दोनों भाग एकत्र) १२-००

४४. संस्कार-विधि-मण्डनम्—संस्कारविधि की व्याख्या। लेखक—वैद्य श्री रामगोपाल जी शास्त्री। अजिल्द १२-००, सजिल्द १६-००।

४५. वैदिक-नित्यकर्म-विधि—सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन के मन्त्रों की पदार्थ तथा भावार्थ व्याख्या सहित। यु० मी०। ६-००, सजिल्द ८-००।

४६. वैदिक-नित्यकर्म-विधि (मूलमात्र)—सन्ध्या तथा स्वस्तिवाचन आदि विधि बृहद हवन के मन्त्रों सहित। १-००

४७. पञ्चमहायज्ञ-विधि—ऋषिदयानन्द कृत। ३-००

४८. पञ्चमहायज्ञप्रदीप—श्री पं० मदनमोहन विद्यासागर। ५-००

४९. हवनमन्त्र—स्वस्तिवाचनादि सहित। ०-६०

५०. निरुक्त-श्लोकवार्त्तिकम्—केरलदेशीय नीलकण्ठ गार्ग्य विरचित। एकमात्र मलयालम लिपि में ताडपत्र पर लिखित दुर्लभ प्रति के आधार पर मुद्रित। आरम्भ में उपोद्घातरूप में निरुक्त-शास्त्र विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत)। सम्पादक—डा० विजयपाल विद्यावारिधि। उत्तम कागज शुद्ध छपाई तथा सुन्दर जिल्द सहित। १२५-००

५१ निरुक्त समुच्चय—आचार्य वररुचि विरचित (संस्कृत)। सम्पादक—युधिष्ठिर मीमांसक। २०-००

५२. अष्टाध्यायीसूत्रपाठ (मूल)—शुद्ध संस्करण। ४-००

५३. अष्टाध्यायी-भाष्य (संस्कृत तथा हिन्दी)—श्री पं० ब्रह्मदत्त जिज्ञासु कृत। भाग—I ५०-००, भाग—II ३२-००, भाग—III ३८-००।

५४. धातुपाठ—धात्वादिसूची सहित, शुद्ध संस्करण। ५-००

५५. क्षीरतरङ्गिणी—क्षीरस्वामी कृत। पाणिनीय धातुपाठ की सबसे प्राचीन एवं प्रामाणिक व्याख्या। सजिल्द ६०-००

५६. धातुप्रदीप—मैत्रेयरक्षित विरचित पाणिनीय धातुपाठ की व्याख्या। सजिल्द ४०-००

५७. वामनीयं लिङ्गानुशासनम्—स्वोपज्ञव्याख्यासहितम्। १०-००

५८. संस्कृत पठन-पाठन की अनुभूत सरलतमविधि—लेखक—पं०

ब्रह्मदत्त जिज्ञासु । पहला भाग १५-०० । दूसरा भाग—युधिष्ठिर मीमांसक २५-०० ।

५९. **The Tested Easiest Method of Learning and Teaching Sanskrit (First Book)**—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत 'विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि' भाग १ का अंग्रेजी अनुवाद है। अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है। कागज और छपाई सुन्दर। सजिल्द २५-००

६०. महाभाष्य (हिन्दी व्याख्या)—(द्वितीय अध्याय पर्यन्त) यु० मी० भाग—I ६०-००, भाग—II ५०-००, भाग—III ३०-०० ।

६१. उणादिकोष—ऋषिदयानन्द कृत व्याख्या तथा पं० यु० मी० कृत टिप्पणियों एवं ११ सूचियों सहित । सजिल्द २०-००

६२. दशपाद्युणादि-वृत्ति-संग्रहः—(प्रथम भाग में अतिप्राचीन वृत्ति विस्तृत उपोद्घात एवं सूत्रसूची शब्दसूची आदि के सहित) । ४०-००

द्वितीय भाग (तीन प्राचीन वृत्तियां) । सं०—चन्द्रदत्तशर्मा । ४०-००

६३. दैवम् पुरुषकारवार्त्तिकोपेतम्—लीलाशुकमुनि कृत । १२-००

६४. भागवृत्तिसंकलनम्—अष्टाध्यायी की प्राचीन वृत्ति । ८-००

६५. काशकृत्स्न-धातुव्याख्यानम्—संस्कृत रूपान्तर । यु० मी० २०-००

६६. काशकृत्स्न-व्याकरणम्—सम्पादक—यु० मी० । १०-००

६७. शब्दरूपावली—विन रटे शब्परूपों का ज्ञान करानेवाली । ३-५०

६८. गणरत्नावली—यज्ञेश्वरभट्ट कृत । सं०—चन्द्रदत्तशर्मा । ६५-००

६९. संस्कृत-धातु-कोष—पाणिनीय धातुओं का हिन्दी में अर्थनिर्देश । सम्पादक—युधिष्ठिर मीमांसक । १५-००

७०. अष्टाध्यायीशुक्लयजुःप्रातिशाख्ययोर्मतविमर्शः—डा० विजयपाल विरचित पी० एच० डी० का महत्त्वपूर्ण शोधप्रबन्ध (संस्कृत) । सुन्दर छपाई, उत्तम कागज, बढ़िया जिल्द सहित । ५०-००

७१. सूर्य-सिद्धान्त—हिन्दी व्याख्या सहित । व्याख्याता—श्री उदयनारायणसिंह । इसके आरम्भ में १४६ पृष्ठ की अति विस्तृत एवं विविध विषय परिपूर्ण महत्त्वपूर्ण भूमिका छपी है । ५०-००

७२. पिङ्गलनाग-छन्दोविचितिभाष्यम्—यादवप्रकाशकृत । यह दुर्लभ ग्रन्थ प्रथम बार मुद्रित हुआ है । सम्पादक—डा० विजयपाल । ४०-००

